।। औं-नमः-शुक्र-बृहस्पतिभ्यां ।।

पृथिव्या लाभे पालने च यावन्त्यर्थ-शास्त्राणि पूर्व-आचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यएकं इदं अर्थ-शास्त्रं कृतं ।। ०१.१.०१ ।।

तस्यायं प्रकरण-अधिकरण-समुद्देशः ।। ०१.१.०२ ।।

विद्या-समुद्देशः। वृद्ध-समुद्देशः। इन्द्रिय-जयः। अमात्य-उत्पत्तिः। मन्त्रि-पुरोहित-उत्पत्तिः। उपधाभिः शौच-अशौच-ज्ञानं अमात्यानाम्। ।। ०१.१.०३अ ।।

गूढ-पुरुष-प्रणिधिः। स्व-विषये कृत्य-अकृत्य-पक्ष-रक्षणम्। पर-विषये कृत्य-अकृत्य-पक्ष-उपग्रहः। ।। ०१.१.०३ब ।।

मन्त्र-अधिकारः। दूत-प्रणिधिः। राज-पुत्र-रक्षणम्। अपरुद्ध-वृत्तम्। अपरुद्धे वृत्तिः। राज-प्रणिधिः। निशान्त-प्रणिधिः। आत्म-रक्षितकम्। । इति विनय-अधिकारिकं प्रथमं अधिकरणं ।। ०१.१.०३क ।।

जनपद-निवेशः। भूमिच्-छिद्र-अपिधानम्। दुर्ग-विधानम्। दुर्ग-निवेशः। सन्निधातृ-निचय-कर्म। समाहर्तृ-समुदय-प्रस्थापनम्। अक्ष-पटले गाणनिक्य-अधिकारः। ।। ०१.१.०४अ ।।

समुदयस्य युक्त-अपहृतस्य प्रत्यानयनम्। उपयुक्त-परीक्षा। शासन-अधिकारः। कोश-प्रवेश्य-रत्न-परीक्षा। आकर-कर्म-अन्त-प्रवर्तनम्। अक्ष-शालायां सुवर्ण-अध्यक्षः ।। ०१.१.०४ब ।।

विशिखायां सौवर्णिक-प्रचारः। कोष्ठ-आगार-अध्यक्षः। पण्य-अध्यक्षः। कुप्य-अध्यक्षः। आयुध-अध्यक्षः। तुला-मान-पौतवम्। ।। ०१.१.०४क ।।

देश-काल-मानम्। शुल्क-अध्यक्षः। सूत्र-अध्यक्षः। सीत-अध्यक्षः। सुरा-अध्यक्षः। सून-अध्यक्षः। गणिका-अध्यक्षः। ।। ०१.१.०४ड ।।

नाव्-अध्यक्षः। गो-अध्यक्षः। अश्व-अध्यक्षः। हस्त्य्-अध्यक्षः। रथ-अध्यक्षः। पत्त्य्-अध्यक्षः। सेना-पति-प्रचारः। मुद्रा-अध्यक्षः। विवीत-अध्यक्षः। समाहर्तृ-प्रचारः। ।। ०१.१.०४ए ।।

गृह-पतिक-वैदेहक-तापस-व्यञ्जनाः प्रणिधयः। नागरिक-प्रणिधिः इत्यध्यक्ष-प्रचारो द्वितीयं अधिकरणं ।। ०१.१.०४फ़् ।।

व्यवहार-स्थापना। विवाद-पद-निबन्धः। विवाह-सम्युक्तम्। दाय-विभागः। वास्तुकम्। समयस्य अनपाकर्म। ऋण-अदानम्। औपनिधिकम्। दास-कर्म-कर-कल्पः। ।। ०१.१.०५अ ।।

सम्भूय समुत्थानम्। विक्रीत-क्रीत-अनुशयः। दत्तस्य अनपाकर्म। अस्वामि-विक्रयः। स्व-स्वामि-सम्बन्धः। साहसम्। वाक्-पारुष्यम्। दण्ड-पारुष्यम्। द्यूत-समाह्वयम्। प्रकीर्णकं इति। धर्म-स्थीयं तृतीयं अधिकरणं ।। ०१.१.०५ब ।।

कारु-कर-क्षणम्। वैदेहक-रक्षणम्। उपनिपात-प्रतीकारः। गूढ-आजीविनां रक्षा। सिद्ध-व्यञ्जनैर्माणव-प्रकाशनम्। शङ्का-रूप-कर्म-अभिग्रहः। ।। ०१.१.०६अ ।।

आशु-मृतक-परीक्षा। वाक्य-कर्म-अनुयोगः। सर्व-अधिकरण-रक्षणं ।। ०१.१.०६ब ।।

एक-अङ्ग-वध-निष्क्रयः। शुद्धश्चित्रश्च दण्ड कल्पः। कन्या-प्रकर्म। अतिचार-दण्डाः इति कण्टक-शोधनं चतुर्थं अधिकरणं ।। ०१.१.०६क ।।

दाण्डकर्मिकम्। कोश-अभिसंहरणम्। भृत्य-भरणीयम्। अनुजीवि-वृत्तम्। समय-आचारिकम्। राज्य-प्रतिसंधानम्। एक-ऐश्वर्यं इति योग-वृत्तं पञ्चमं अधिकरणं ।। ०१.१.०७ ।।

प्रकृति-सम्पदः। शम-व्यायामिकं इति मण्डल-योनिः षष्ठं अधिकरणं ।। ०१.१.०८ ।।

षाड्गुण्य-समुद्देशः। क्षय-स्थान-वृद्धि-निश्चयः। संश्रय-वृत्तिः। समहीन-ज्यायसां गुण-अभिनिवेशः। हीन-संधयः। विगृह्य आसनम्। संधाय आसनम्। विगृह्य यानम्। संधाय यानम्। ।। ०१.१.०९अ ।।

सम्भूय प्रयाणम्। यातव्य-अमित्रयोरभिग्रह-चिन्ता। क्षय-लोभ-विराग-हेतवः प्रकृतीनाम्। सामवायिक-विपरिमर्शः। ।। ०१.१.०९ब ।।

संहित प्रयाणिकम्। परिपणित-अपरिपणित-अपसृताः संधयः। द्वैधी-भाविकाः संधि-विक्रमाः। यातव्य-वृत्तिः। अनुग्राह्य-मित्र-विशेषाः। ।। ०१.१.०९क ।।

मित्र-हिरण्य-भूमि-कर्म-संधयः। पार्ष्णि-ग्राह-चिन्ता। हीन-शक्ति-पूरणम्। बलवता विगृह्य उपरोध-हेतवः। दण्ड-उपनत-वृत्तम्। ।। ०१.१.०९ड ।।

दण्ड-उपनायि-वृत्तम्। संधि-कर्म। समाधि-मोक्षः। मध्यम-चरितम्। उदासीन-चरितम्। मण्डल-चरितं इति षाड्गुण्यं सप्तमं अधिकरणं ।। ०१.१.०९ए ।।

प्रकृति-व्यसन-वर्गः। राज-राज्ययोर्व्यसन-चिन्ता। पुरुष-व्यसन-वर्गः। पीडन-वर्गः। स्तम्भ-वर्गः। कोश-सङ्ग-वर्गः। मित्र-व्यसन-वर्गः इति व्यसन-आधिकारिकं अष्टमं अधिकरणं ।। ०१.१.१० ।।

शक्ति-देश-काल-बल-अबल-ज्ञानम्। यात्रा-कालाः। बल-उपादान-कालाः। सम्नाह-गुणाः। प्रतिबल-कर्म। पश्चात्कोप-चिन्ता। बाह्य-आभ्यन्तर-प्रकृति-कोप-प्रतीकाराः ।। ०१.१.११अ ।।

क्षय-व्यय-लाभ-विपरिमर्शः। बाह्य-आभ्यन्तराश्चऽपदः। दुष्य-शत्रु-सम्युक्ताः। अर्थ-अनर्थ-संशय-युक्ताः। तासां उपाय-विकल्पजाः सिद्धयः इत्यभियास्यत्कर्म नवमं अधिकरणं ।। ०१.१.११ब ।।

स्कन्ध-आवार-निवेशः। स्कन्ध-आवार-प्रयाणम्। बल-व्यसन-अवस्कन्द-काल-रक्षणम्। कूट-युद्ध-विकल्पाः। स्व-सैन्य-उत्साहनम्। स्व-बल-अन्य-बल-व्यायोगः। युद्ध-भूमयः। पत्त्य्-अश्व-रथ-हस्ति-कर्माणि। पक्ष-कक्ष-उरस्यानां बल-अग्रतो व्यूह-विभागः। सार-फल्गु-बल-विभागः। पत्त्य्-अश्व-रथ-हस्ति-युद्धानि। दण्ड-भोग-मण्डल-असंहत-व्यूह-व्यूहनम्। तस्य प्रतिव्यूह-स्थापनं इति सांग्रामिकं दशमं अधिकरणं ।। ०१.१.१२ ।।

भेद-उपादानानि। उपांशु-दण्डाः इति संघ-वृत्तं एकादशं अधिकरणं ।। ०१.१.१३ ।।

दूत-कर्म। मन्त्र-युद्धम्। सेना-मुख्य-वधः। मण्डल-प्रोत्साहनम्। शस्त्र-अग्नि-रस-प्रणिधयः। वीवध-आसार-प्रसार-वधः। योग-अतिसंधानम्। दण्ड-अतिसंधानम्। एक-विजयः इत्याबलीयसं द्वादशं अधिकरणं ।। ०१.१.१४ ।।

उपजापः। योग-वामनम्। अपसर्प-प्रणिधिः। पर्युपासन-कर्म। अवमर्दः। लब्ध-प्रशमनं इति दुर्ग-लम्भ-उपायस्त्रयोदशं अधिकरणं ।। ०१.१.१५ ।।

पर-बल-घात-प्रयोगः। प्रलम्भनम्। स्व-बल-उपघात-प्रतीकारः इत्यौपनिषदिकं चतुर्दशं अधिकरणं ।। ०१.१.१६ ।।

तन्त्र-युक्तयः इति तन्त्र-युक्तिः पन्चदशं अधिकरणं ।। ०१.१.१७ ।।

शास्त्र-समुद्देशः पञ्चदश-अधिकरणानि साशीति-प्रकरण-शतं सपञ्चाशद्-अध्याय-शतं षट्-श्लोक-सहस्राणिइति ।। ०१.१.१८ ।।

सुख-ग्रहण-विज्ञेयं तत्त्व-अर्थ-पद-निश्चितं ।। ०१.१.१९अ ब ।।

कौटिल्येन कृतं शास्त्रं विमुक्त-ग्रन्थ-विस्तरं ।। ०१.१.१९च्द् ।।

---

आन्वीक्षिकी त्रयी वार्त्ता दण्ड-नीतिश्चैति विद्याः ।। ०१.२.०१ ।।

त्रयी वार्त्ता दण्ड नीतिश्चैति मानवाः ।। ०१.२.०२ ।।

त्रयी विशेषो ह्यान्वीक्षिकीइति ।। ०१.२.०३ ।।

वार्त्ता दण्ड-नीतिश्चैति बार्हस्पत्याः ।। ०१.२.०४ ।।

संवरण-मात्रं हि त्रयी लोक-यात्रा-विद इति ।। ०१.२.०५ ।।

दण्ड-नीतिरेका विद्याइत्यौशनसाः ।। ०१.२.०६ ।।

तस्यां हि सर्व-विद्या-आरम्भाः प्रतिबद्धा इति ।। ०१.२.०७ ।।

चतस्र एव विद्या इति कौटिल्यः ।। ०१.२.०८ ।।

ताभिर्धर्म-अर्थौ यद्विद्यात्तद्विद्यानां विद्यात्वं ।। ०१.२.०९ ।।

सांख्यं योगो लोकायतं चैत्यान्वीक्षिकी ।। ०१.२.१० ।।

धर्म-अधर्मौ त्रय्यां अर्थ-अनर्थौ वार्त्तायां नय-अनयौ दण्ड-नीत्यां बल-अबले च एतासां हेतुभिरन्वीक्षमाणा लोकस्य उपकरोति व्यसनेअभ्युदये च बुद्धिं अवस्थापयति प्रज्ञा-वाक्य-क्रिया-वैशारद्यं च करोति ।। ०१.२.११ ।।

प्रदीपः सर्व-विद्यानां उपायः सर्व-कर्मणां ।। ०१.२.१२अ ब ।।

आश्रयः सर्व-धर्माणां शश्वदान्वीक्षिकी मता ।। ०१.२.१२च्द् ।।

साम-ऋग्-यजुर्-वेदास्त्रयस्त्रयी ।। ०१.३.०१ ।।

अथर्व-वेद-इतिहास-वेदौ च वेदाः ।। ०१.३.०२ ।।

शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो-विचितिर्ज्योतिषं इति चाङ्गानि ।। ०१.३.०३ ।।

एष त्रयी-धर्मश्चतुर्णां वर्णानां आश्रमाणां च स्व-धर्म-स्थापनादौपकारिकः ।। ०१.३.०४ ।।

स्वधर्मो ब्राह्मणस्य अध्ययनं अध्यापनं यजनं याजनं दानं प्रतिग्रहश्च ।। ०१.३.०५ ।।

क्षत्रियस्याध्ययनं यजनं दानं शस्त्र-आजीवो भूत-रक्षणं च ।। ०१.३.०६ ।।

वैश्यस्याध्ययनं यजनं दानं कृषि-पाशुपाल्ये वणिज्या च ।। ०१.३.०७ ।।

शूद्रस्य द्विजाति-शुश्रूषा वार्त्ता कारु-कुशीलव-कर्म च ।। ०१.३.०८ ।।

गृहस्थस्य स्वधर्म-आजीवस्तुल्यैरसमान-ऋषिभिर्वैवाह्यं ऋतु-गामित्वं देव-पित्र्-अतिथि-पूजा भृत्येषु त्यागः शेष-भोजनं च ।। ०१.३.०९ ।।

ब्रह्म-चारिणः स्वाध्यायो अग्नि-कार्य-अभिषेकौ भैक्ष-व्रतित्वं आचार्ये प्राण-अन्तिकी वृत्तिस्तद्-अभावे गुरु-पुत्रे सब्रह्म-चारिणि वा ।। ०१.३.१० ।।

वानप्रस्थस्य ब्रह्मचर्यं भूमौ शय्या जटा-अजिन-धारणं अग्नि-होत्र-अभिषेकौ देवता-पित्र्-अतिथि-पूजा वन्यश्चऽहारः ।। ०१.३.११ ।।

परिव्राजकस्य जित-इन्द्रियत्वं अनारम्भो निष्किंचनत्वं सङ्ग-त्यागो भैक्षव्रतं अनेकत्रारण्ये च वासो बाह्य-आभ्यन्तरं च शौचं ।। ०१.३.१२ ।।

सर्वेषां अहिंसा सत्यं शौचं अनसूय आनृशंस्यं क्षमा च ।। ०१.३.१३ ।।

स्वधर्मः स्वर्गायऽनन्त्याय च ।। ०१.३.१४ ।।

तस्यातिक्रमे लोकः संकरादुच्छिद्येत ।। ०१.३.१५ ।।

तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत् ।। ०१.३.१६अ ब ।।

स्वधर्मं संदधानो हि प्रेत्य चैह च नन्दति ।। ०१.३.१६च्द् ।।

व्यवस्थित-आर्य-मर्यादः कृत-वर्ण-आश्रम-स्थितिः ।। ०१.३.१७अ ब ।।

त्रय्याअभिरक्षितो लोकः प्रसीदति न सीदति ।। ०१.३.१७च्द् ।।

कृषि-पाशुपाल्ये वणिज्या च वार्ता । धान्य-पशु-हिरण्य-कुप्य-विष्टि-प्रदानादौपकारिकी ।। ०१.४.०१ ।।

तया स्व-पक्षं पर-पक्षं च वशी-करोति कोश-दण्डाभ्यां ।। ०१.४.०२ ।।

आन्वीक्षिकी त्रयी वार्त्तानां योग-क्षेम-साधनो दण्डः । तस्य नीतिर्दण्ड नीतिः । अलब्ध-लाभ-अर्था लब्ध-परिरक्षणी रक्षित-विवर्धनी वृद्धस्य तीर्थे प्रतिपादनी च ।। ०१.४.०३ ।।

तस्यां आयत्ता लोक-यात्रा ।। ०१.४.०४ ।।

"तस्माल्लोक-यात्रा-अर्थी नित्यं उद्यत-दण्डः स्यात् ।। ०१.४.०५ ।।

न ह्येवंविधं वश-उपनयनं अस्ति भूतानां यथा दण्डः इत्याचार्याः ।। ०१.४.०६ ।।

नैति कौटिल्यः ।। ०१.४.०७ ।।

तीक्ष्ण-दण्डो हि भूतानां उद्वेजनीयो भवति ।। ०१.४.०८ ।।

मृदु-दण्डः परिभूयते ।। ०१.४.०९ ।।

यथा-अर्ह-दण्डः पूज्यते ।। ०१.४.१० ।।

सुविज्ञात-प्रणीतो हि दण्डः प्रजा धर्म-अर्थ-कामैर्योजयति ।। ०१.४.११ ।।

दुष्प्रणीतः काम-क्रोधाभ्यां अवज्ञानाद्वा वानप्रस्थ-परिव्राजकानपि कोपयति । किं-अङ्ग पुनर्गृहस्थान् ।। ०१.४.१२ ।।

अप्रणीतस्तु मात्स्य-न्यायं उद्भावयति ।। ०१.४.१३ ।।

बलीयानबलं हि ग्रसते दण्ड-धर-अभावे ।। ०१.४.१४ ।।

स तेन गुप्तः प्रभवति इति ।। ०१.४.१५ ।।

चतुर्-वर्ण-आश्रमो लोको राज्ञा दण्डेन पालितः ।। ०१.४.१६अ ब ।।

स्वधर्म-कर्म-अभिरतो वर्तते स्वेषु वर्त्मसु ।। ०१.४.१६च्द् ।।

तस्माद्दण्ड-मूलास्तिस्रो विद्याः ।। ०१.५.०१ ।।

विनय-मूलो दण्डः प्राणभृतां योग-क्षेम-आवहः ।। ०१.५.०२ ।।

कृतकः स्वाभाविकश्च विनयः ।। ०१.५.०३ ।।

क्रिया हि द्रव्यं विनयति नाद्रव्यं ।। ०१.५.०४ ।।

शुश्रूषा श्रवण-ग्रहण-धारण-विज्ञान-ऊह-अपोह-तत्त्व-अभिनिविष्ट-बुद्धिं विद्या विनयति नैतरं ।। ०१.५.०५ ।।

विद्यानां तु यथास्वं आचार्य-प्रामाण्याद्विनयो नियमश्च ।। ०१.५.०६ ।।

वृत्त-चौल-कर्मा लिपिं संख्यानं चौपयुञ्जीत ।। ०१.५.०७ ।।

वृत्त-उपनयनस्त्रयीं आन्वीक्षिकीं च शिष्टेभ्यो वार्त्तां अध्यक्षेभ्यो दण्ड-नीतिं वक्तृ-प्रयोक्तृभ्यः ।। ०१.५.०८ ।।

ब्रह्मचर्यं च षोडशाद्वर्षात् ।। ०१.५.०९ ।।

अतो गो-दानं दार-कर्म चास्य ।। ०१.५.१० ।।

नित्यश्च विद्या-वृद्ध-सम्योगो विनय-वृद्ध्य्-अर्थम्, तन्-मूलत्वाद्विनयस्य ।। ०१.५.११ ।।

पूर्वं अहर्-भागं हस्त्य्-अश्व-रथ-प्रहरण-विद्यासु विनयं गच्छेत् ।। ०१.५.१२ ।।

पश्चिमं इतिहास-श्रवणे ।। ०१.५.१३ ।।

पुराणं इतिवृत्तं आख्यायिक-उदाहरणं धर्म-शास्त्रं अर्थ-शास्त्रं चैतिइतिहासः ।। ०१.५.१४ ।।

शेषं अहोरात्र-भागं अपूर्व-ग्रहणं गृहीत-परिचयं च कुर्यात्, अगृहीतानां आभीक्ष्ण्य-श्रवणं च ।। ०१.५.१५ ।।

श्रुताद्धि प्रज्ञाउपजायते प्रज्ञाया योगो योगादात्मवत्ताइति विद्यानां सामर्थ्यं ।। ०१.५.१६ ।।

विद्या-विनीतो राजा हि प्रजानां विनये रतः ।। ०१.५.१७अ ब ।।

अनन्यां पृथिवीं भुङ्क्ते सर्व-भूत-हिते रतः ।। ०१.५.१७च्द् ।।

विद्या विनय-हेतुरिन्द्रिय-जयः काम-क्रोध-लोभ-मान-मद-हर्ष-त्यागात्कार्यः ।। ०१.६.०१ ।।

कर्ण-त्वग्-अक्षि-जिह्वा-घ्राण-इन्द्रियाणां शब्द-स्पर्श-रूप-रस-गन्धेष्वविप्रतिपत्तिरिन्द्रिय-जयः। शास्त्र-अनुष्ठानं वा ।। ०१.६.०२ ।।

कृत्स्नं हि शास्त्रं इदं इन्द्रिय-जयः ।। ०१.६.०३ ।।

तद्विरुद्ध-वृत्तिरवश्य-इन्द्रियश्चातुरन्तो अपि राजा सद्यो विनश्यति ।। ०१.६.०४ ।।

यथा दाण्डक्यो नाम भोजः कामाद्ब्राह्मण-कन्यां अभिमन्यमानः सबन्धु-राष्ट्रो विननाश। करालश्च वैदेहः ।। ०१.६.०५ ।।

कोपाज्जनमेजयो ब्राह्मणेषु विक्रान्तः। ताल-जङ्घश्च भृगुषु ।। ०१.६.०६ ।।

लोभादैलश्चातुर्वर्ण्यं अत्याहारयमाणः। सौवीरश्चाजबिन्दुः ।। ०१.६.०७ ।।

मानाद्रावणः पर-दारानप्रयच्छन्। दुर्योधनो राज्यादंशं च ।। ०१.६.०८ ।।

मदाद्दम्भोद्भवो भूत-अवमानी। हैहयश्चार्जुनः ।। ०१.६.०९ ।।

हर्षाद्वातापिरगस्त्यं अत्यासादयन्। वृष्णि-संघश्च द्वैपायनं इति ।। ०१.६.१० ।।

एते चान्ये च बहवः शत्रु-षड्-वर्गं आश्रिताः ।। ०१.६.११अ ब ।।

सबन्धु-राष्ट्रा राजानो विनेशुरजित-इन्द्रियाः ।। ०१.६.११च्द् ।।

शत्रु-षड्-वर्गं उत्सृज्य जामदग्न्यो जित-इन्द्रियः ।। ०१.६.१२अ ब ।।

अम्बरीषश्च नाभागो बुभुजाते चिरं महीं ।। ०१.६.१२च्द् ।।

तस्मादरि-षड्-वर्ग-त्यागेनैन्द्रिय-जयं कुर्वीत। वृद्ध-सम्योगेन प्रज्ञाम्। चारेण चक्षुः। उत्थानेन योग-क्षेम-साधनम्। कार्य-अनुशासनेन स्वधर्म-स्थापनम्। विनयं विद्या-उपदेशेन। लोक-प्रियत्वं अर्थ-सम्योगेन वृत्तिं ।। ०१.७.०१ ।।

एवं वश्य-इन्द्रियः पर-स्त्री-द्रव्य-हिंसाश्च वर्जयेत्। स्वप्नं लौल्यं अनृतं उद्धत-वेषत्वं अनर्थ्य-सम्योगं अधर्म-सम्युक्तं अनर्थ-सम्युक्तं च व्यवहारं ।। ०१.७.०२ ।।

धर्म-अर्थ-अविरोधेन कामं सेवेत। न निह्सुखः स्यात् ।। ०१.७.०३ ।।

समं वा त्रिवर्गं अन्योन्य-अनुबद्धं ।। ०१.७.०४ ।।

एको ह्यत्यासेवितो धर्म-अर्थ-कामानां आत्मानं इतरौ च पीडयति ।। ०१.७.०५ ।।

अर्थएव प्रधानैति कौटिल्यः ।। ०१.७.०६ ।।

अर्थ-मूलौ हि धर्म-कामाविति ।। ०१.७.०७ ।।

मर्यादां स्थापयेदाचार्यानमात्यान्वा। यएनं अपाय स्थानेभ्यो वारयेयुः। छाया-नालिका-प्रतोदेन वा रहसि प्रमाद्यन्तं अभितुदेयुः ।। ०१.७.०८ ।।

सहाय-साध्यं राजत्वं चक्रं एकं न वर्तते ।। ०१.७.०९अ ब ।।

कुर्वीत सचिवांस्तस्मात्तेषां च शृणुयान्मतं ।। ०१.७.०९च्द् ।।

---

"सह-अध्यायिनो अमात्यान्कुर्वीत। दृष्ट-शौच-सामर्थ्यत्वात्" इति भारद्वाजः ।। ०१.८.०१ ।।

"ते ह्यस्य विश्वास्या भवन्ति" इति ।। ०१.८.०२ ।।

नैति विशाल-अक्षः ।। ०१.८.०३ ।।

"सह-क्रीडितत्वात्परिभवन्त्येनं ।। ०१.८.०४ ।।

ये ह्यस्य गुह्य-सधर्माणस्तानमात्यान्कुर्वीत। समान-शील-व्यसनत्वात् ।। ०१.८.०५ ।।

ते ह्यस्य मर्मज्ञ-भयान्नापराध्यन्ति" इति ।। ०१.८.०६ ।।

"साधारणएष दोषः" इति पाराशराः ।। ०१.८.०७ ।।

"तेषां अपि मर्मज्ञ-भयात्कृत-अकृतान्यनुवर्तेत ।। ०१.८.०८ ।।

यावद्भ्यो गुह्यं आचष्टे जनेभ्यः पुरुष-अधिपः ।। ०१.८.०९अ ब ।।

अवशः कर्मणा तेन वश्यो भवति तावतां ।। ०१.८.०९च्द् ।।

यएनं आपत्सु प्राण-आबाध-युक्तास्वनुगृह्णीयुस्तानमात्यान्कुर्वीत। दृष्ट-अनुरागत्वात्" इति ।। ०१.८.१० ।।

नैति पिशुनः ।। ०१.८.११ ।।

"भक्तिरेषा न बुद्धि-गुणः ।। ०१.८.१२ ।।

संख्यात-अर्थेषु कर्मसु नियुक्ता ये यथा-आदिष्टं अर्थं सविशेषं वा कुर्युस्तानमात्यान्कुर्वीत। दृष्ट-गुणत्वात्" इति ।। ०१.८.१३ ।।

नैति कौणपदन्तः ।। ०१.८.१४ ।।

"अन्यैरमात्य-गुणैरयुक्ता ह्येते ।। ०१.८.१५ ।।

पितृ-पैतामहानमात्यान्कुर्वीत। दृष्ट-अवदानत्वात् ।। ०१.८.१६ ।।

ते ह्येनं अपचरन्तं अपि न त्यजन्ति। सगन्धत्वात् ।। ०१.८.१७ ।।

अमानुषेष्वपि चएतद्दृश्यते ।। ०१.८.१८ ।।

गावो ह्यसगन्धं गो-गणं अतिक्रम्य सगन्धेष्वेवावतिष्ठन्ते" इति ।। ०१.८.१९ ।।

नैति वातव्याधिः ।। ०१.८.२० ।।

"ते ह्यस्य सर्वं अवगृह्य स्वामिवत्प्रचरन्ति ।। ०१.८.२१ ।।

तस्मान्नीतिविदो नवानमात्यान्कुर्वीत ।। ०१.८.२२ ।।

नवास्तु यम-स्थाने दण्ड-धरं मन्यमाना नापराध्यन्ति" इति ।। ०१.८.२३ ।।

नैति बाहु-दन्ती पुत्रः ।। ०१.८.२४ ।।

"शास्त्रविददृष्ट-कर्मा कर्मसु विषादं गच्छेत् ।। ०१.८.२५ ।।

तस्मादभिजन-प्रज्ञा-शौच-शौर्य-अनुराग-युक्तानमात्यान्कुर्वीत। गुण-प्राधान्यात्" इति ।। ०१.८.२६ ।।

सर्वं उपपन्नं इति कौटिल्यः ।। ०१.८.२७ ।।

कार्य-सामर्थ्याद्धि पुरुष-सामर्थ्यं कल्प्यते ।। ०१.८.२८ ।।

सामर्थ्यश्च विभज्यामात्य-विभवं देश-कालौ च कर्म च ।। ०१.८.२९अ ब ।।

अमात्याः सर्व एवएते कार्याः स्युर्न तु मन्त्रिणः ।। ०१.८.२९च्द् ।।

जानपदो अभिजातः स्ववग्रहः कृत-शिल्पश्चक्षुष्मान्प्राज्ञो धारयिष्णुर्दक्षो वाग्मी प्रगल्भः प्रतिपत्तिमानुत्साह-प्रभाव-युक्तः क्लेश-सहः शुचिर्मैत्रो दृढ-भक्तिः शील-बल-आरोग्य-सत्त्व-युक्तः स्तम्भ-चापल-हीनः सम्प्रियो वैराणां अकर्ताइत्यमात्य-सम्पत् ।। ०१.९.०१ ।।

अतः पाद-अर्घ-गुण-हीनौ मध्यम-अवरौ ।। ०१.९.०२ ।।

तेषां जनपद्-अभिजनं अवग्रहं चऽप्ततः परीक्षेत । समान-विद्येभ्यः शिल्पं शास्त्र-चक्षुष्मत्तां च । कर्म-आरम्भेषु प्रज्ञां धारयिष्णुतां दाक्ष्यं च । कथा-योगेषु वाग्मित्वं प्रागल्भ्यं प्रतिभानवत्त्वं च । संवासिभ्यः शील-बल-आरोग्य-सत्त्व-योगं अस्तम्भं अचापलं च । प्रत्यक्षतः सम्प्रियत्वं अवैरत्वं च ।। ०१.९.०३ ।।

प्रत्यक्ष-परोक्ष-अनुमेया हि राज-वृत्तिः ।। ०१.९.०४ ।।

स्वयं द्रष्टं प्रत्यक्षं ।। ०१.९.०५ ।।

पर-उपदिष्टं परोक्षं ।। ०१.९.०६ ।।

कर्मसु कृतेनाकृत-अवेक्षणं अनुमेयं ।। ०१.९.०७ ।।

यौगपद्यात्तु कर्मणां अनेकत्वादनेकस्थत्वाच्च देश-काल-अत्ययो मा भूदिति परोक्षं अमात्यैः कारयेत् इत्यमात्य-कर्म ।। ०१.९.०८ ।।

पुरोहितं उदित-उदित-कुल-शीलं साङ्गे वेदे दैवे निमित्ते दण्ड-नीत्यां चाभिविनीतं आपदां दैव-मानुषीणां अथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत ।। ०१.९.०९ ।।

तं आचार्यं शिष्यः पितरं पुत्रो भृत्यः स्वामिनं इव चानुवर्तेत ।। ०१.९.१० ।।

ब्राह्मणेनएधितं क्षत्रं मन्त्रि-मन्त्र-अभिमन्त्रितं ।। ०१.९.११अ ब ।।

जयत्यजितं अत्यन्तं शास्त्र-अनुगम-शस्त्रितं ।। ०१.९.११च्द् ।।

मन्त्रि-पुरोहित-सखः सामान्येष्वधिकरणेषु स्थापयित्वाअमात्यानुपधाभिः शोधयेत् ।। ०१.१०.०१ ।।

पुरोहितं अयाज्य-याजन-अध्यापने नियुक्तं अमृष्यमाणं राजाअवक्षिपेत् ।। ०१.१०.०२ ।।

स सत्त्रिभिः शपथ-पूर्वं एकैकं अमात्यं उपजापयेत् "अधार्मिको अयं राजा । साधु धार्मिकं अन्यं अस्य तत्-कुलीनं अपरुद्धं कुल्यं एक-प्रग्रहं सामन्तं आटविकं औपपादिकं वा प्रतिपादयामः । सर्वेषां एतद्रोचते । कथं वा तव" इति ।। ०१.१०.०३ ।।

प्रत्याख्याने शुचिः इति धर्म-उपधा ।। ०१.१०.०४ ।।

सेना-पतिरसत्-प्रग्रहेणावक्षिप्तः सत्त्रिभिरेकैकं अमात्यं उपजापयेत्लोभनीयेनार्थेन राज-विनाशाय । "सर्वेषां एतद्रोचते । कथं वा तव" इति ।। ०१.१०.०५ ।।

प्रत्याख्याने शुचिः इत्यर्थ-उपधा ।। ०१.१०.०६ ।।

परिव्राजिका लब्ध-विश्वासाअन्तःपुरे कृत-सत्कारा महा-मात्रं एकैकं उपजपेत् "राज-महिषी त्वां कामयते कृत-समागम-उपाया । महानर्थश्च ते भविष्यति" इति ।। ०१.१०.०७ ।।

प्रत्याख्याने शुचिः इति काम-उपधा ।। ०१.१०.०८ ।।

प्रहवण-निमित्तं एको अमात्यः सर्वानमात्यानावाहयेत् ।। ०१.१०.०९ ।।

तेनौद्वेगेन राजा तानवरुन्ध्यात् ।। ०१.१०.१० ।।

कापटिकश्चात्र पूर्व-अवरुद्धस्तेषां अर्थ-मान-अवक्षिप्तं एकैकं अमात्यं उपजपेत् "असत्प्रवृत्तो अयं राजा । साध्वेनं हत्वाअन्यं प्रतिपादयामः । सर्वेषां एतद्रोचते । कथं वा तव" इति ।। ०१.१०.११ ।।

प्रत्याख्याने शुचिः इति भय-उपधा ।। ०१.१०.१२ ।।

तत्र धर्म-उपधा-शुद्धान्धर्म-स्थीय-कण्टक-शोधनेषु कर्मसु स्थापयेत् । अर्थ-उपधा-शुद्धान्समाहर्तृ-सन्निधातृ-निचय-कर्मसु । काम-उपधा शुद्धान्बाह्य-आभ्यन्तर-विहार-रक्षासु । भय-उपधा-शुद्धानासन्न-कार्येषु राज्ञः ।। ०१.१०.१३ ।।

सर्व-उपधा-शुद्धान्मन्त्रिणः कुर्यात् ।। ०१.१०.१४ ।।

सर्वत्राशुचीन्खनि-द्रव्य-हस्ति-वन-कर्म-अन्तेषु उपयोजयेत् ।। ०१.१०.१५ ।।

त्रिवर्ग-भय-संशुद्धानमात्यान्स्वेषु कर्मसु ।। ०१.१०.१६अ ब ।।

अधिकुर्याद्यथा शौचं इत्याचार्या व्यवस्थिताः ।। ०१.१०.१६च्द् ।।

न त्वेव कुर्यादात्मानं देवीं वा लक्ष्यं ईश्वरः ।। ०१.१०.१७अ ब ।।

शौच-हेतोरमात्यानां एतत्कौटिल्य-दर्शनं ।। ०१.१०.१७च्द् ।।

न दूषणं अदुष्टस्य विषेणैवाम्भसश्चरेत् ।। ०१.१०.१८अ ब ।।

कदाचिद्धि प्रदुष्टस्य नाधिगम्येत भेषजं ।। ०१.१०.१८च्द् ।।

कृता च कलुषा-बुद्धिरुपधाभिश्चतुर्विधा ।। ०१.१०.१९अ ब ।।

नागत्वाअन्तं निवर्तेत स्थिता सत्त्ववतां धृतौ ।। ०१.१०.१९च्द् ।।

तस्माद्बाह्यं अधिष्ठानं कृत्वा कार्ये चतुर्विधे ।। ०१.१०.२०अ ब ।।

शौच-अशौचं अमात्यानां राजा मार्गेत सत्त्रिभिः ।। ०१.१०.२०च्द् ।।

उपधाभिः शुद्ध-अमात्य-वर्गो गूढ-पुरुषानुत्पादयेत्कापटिक-उदास्थित-गृह-पतिक-वैदेहक-तापस-व्यञ्जनान्सत्त्रि-तीष्क्ण-रसद-भिक्षुकीश्च || ०१.११.०१ ||

पर-मर्मज्ञः प्रगल्भश्छात्रः कापटिकः || ०१.११.०२ ||

तं अर्थ-मानाभ्यां प्रोत्साह्य मन्त्री ब्रूयात् "राजानं मां च प्रमाणं कृत्वा यस्य यदकुशलं पश्यसि तत्तदानीं एव प्रत्यादिश" इति || ०१.११.०३ ||

प्रव्रज्या प्रत्यवसितः प्रज्ञा-शौच-युक्त उदास्थितः || ०१.११.०४ ||

स वार्त्ता-कर्म-प्रदिष्टायां भूमौ प्रभूत-हिरण्य-अन्तेवासी कर्म कारयेत् || ०१.११.०५ ||

कर्म-फलाच्च सर्व-प्रव्रजितानां ग्रास-आच्छादन-आवसथान्प्रतिविदध्यात् || ०१.११.०६ ||

वृत्ति-कामांश्चौपजपेत् "एतेनएव वेषेण राज-अर्थश्चरितव्यो भक्त-वेतन-काले चौपस्थातव्यम्" इति || ०१.११.०७ ||

सर्व-प्रव्रजिताश्च स्वं स्वं वर्गं एवं उपजपेयुः || ०१.११.०८ ||

कर्षको वृत्ति-क्षीणः प्रज्ञा-शौच-युक्तो गृह-पतिक-व्यञ्जनः || ०१.११.०९ ||

स कृषि-कर्म-प्रदिष्टायां भूमौ इति समानं पूर्वेण || ०१.११.१० ||

वाणिजको वृत्ति-क्षीणः प्रज्ञा-शौच-युक्तो वैदेहक-व्यञ्जनः || ०१.११.११ ||

स वणिक्-कर्म-प्रदिष्टायां भूमौ इति समानं पूर्वेण || ०१.११.१२ ||

मुण्डो जटिलो वा वृत्ति-कामस्तापस-व्यञ्जनः || ०१.११.१३ ||

स नगर-अभ्याशे प्रभूत-मुण्ड-जटिल-अन्तेवासी शाकं यव-मुष्टिं वा मास-द्विमास-अन्तरं प्रकाशं अश्नीयात् | गूढं इष्टं आहारं || ०१.११.१४ ||

वैदेहक-अन्तेवासिनश्चएनं समिद्ध-योगैरर्चयेयुः || ०१.११.१५ ||

शिष्याश्चास्यऽवेदयेयुः "असौ सिद्धः सामेधिकः" इति || ०१.११.१६ ||

समेध-आशास्तिभिश्चाभिगतानां अङ्ग-विद्यया शिष्य-संज्ञाभिश्च कर्माण्यभिजने अवसितान्यादिशेत् अल्प-लाभं अग्नि-दाहं चोर-भयं दूष्य-वधं तुष्टि-दानं विदेश-प्रवृत्ति-ज्ञानम् | "इदं अद्य श्वो वा भविष्यति | इदं वा राजा करिष्यति" इति || ०१.११.१७ ||

तदस्य गूढाः सत्त्रिणश्च सम्पादयेयुः || ०१.११.१८ ||

सत्त्व-प्रज्ञा-वाक्य-शक्ति-सम्पन्नानां राज-भाग्यं अनुव्याहरेत् | मन्त्रि-सम्योगं च ब्रूयात् || ०१.११.१९ ||

मन्त्री चएषां वृत्ति-कर्मभ्यां वियतेत || ०१.११.२० ||

ये च कारणादभिक्रुद्धास्तानर्थ-मानाभ्यां शमयेत् | अकारण-क्रुद्धांस्तूष्णीं दण्डेन | राज-द्विष्ट-कारिणश्च || ०१.११.२१ ||

पूजिताश्चार्थ-मानाभ्यां राज्ञा राज-उपजीविनां || ०१.११.२२अ ब ||

जानीयुः शौचं इत्येताः पञ्च-संस्थाः प्रकीर्तिताः || ०१.११.२२च्द् ||

ये चाप्यस्मबन्धिनो अवश्य-भर्तव्यास्ते लक्षणं अङ्ग-विद्यां जम्भक-विद्यां माया-गतं आश्रम-धर्मं निमित्तं अन्तर-चक्रं इत्यधीयानाः सत्त्रिणः । संसर्ग-विद्यां च ।। ०१.१२.०१ ।।

ये जनपदे शूरास्त्यक्त-आत्मानो हस्तिनं व्यालं वा द्रव्य-हेतोः प्रतियोधयेयुस्ते तीक्ष्णाः ।। ०१.१२.०२ ।।

ये बन्धुषु निहस्नेहाः क्रूरा अलसाश्च ते रसदाः ।। ०१.१२.०३ ।।

परिव्राजिका वृत्ति-कामा दरिद्रा विधवा प्रगल्भा ब्राह्मण्यन्तःपुरे कृत-सत्कारा महा-मात्र-कुलान्यभिगच्छेत् ।। ०१.१२.०४ ।।

एतया मुण्डा वृषल्यो व्याख्याताः इति संचाराः ।। ०१.१२.०५ ।।

तान्राजा स्व-विषये मन्त्रि-पुरोहित-सेना-पति-युव-राज-दौवारिक-अन्तर्वंशिक-प्रशास्तृ-समाहर्तृ-सन्निधातृ-प्रदेष्टृ-नायक-पौर-व्यावहारिक-कार्मान्तिक-मन्त्रि-परिषद्-अध्यक्ष-दण्ड-दुर्ग-अन्तपाल-आटविकेषु श्रद्धेय-देश-वेष-शिल्प-भाषा-अभिजन-अपदेशान्भक्तितः सामर्थ्य-योगाच्चापसर्पयेत् ।। ०१.१२.०६ ।।

तेषां बाह्यं चारं छत्र-भृङ्गार-व्यजन-पादुक-आसन-यान-वाहन-उपग्राहिणस्तीक्ष्णा विद्युः ।। ०१.१२.०७ ।।

तं सत्त्रिणः संस्थास्वर्पयेयुः ।। ०१.१२.०८ ।।

सूद-आरालिक-स्नापक-संवाहक-आस्तरक-कल्पक-प्रसाधक-उदक-परिचारका रसदाः कुब्ज-वामन-किरात-मूक-बधिर-जड-अन्धच्-छद्मानो नट-नर्तक-गायन-वादक-वाग्-जीवन-कुशीलवाः स्त्रियश्चऽभ्यन्तरं चारं विद्युः ।। ०१.१२.०९ ।।

तं भिक्ष्क्यः संस्थास्वप्रयेयुः ।। ०१.१२.१० ।।

संस्थानां अन्तेवासिनः संज्ञा-लिपिभिश्चार-संचारं कुर्युः ।। ०१.१२.११ ।।

न चान्योन्यं संस्थास्ते वा विद्युः ।। ०१.१२.१२ ।।

भिक्षुकी-प्रतिषेधे द्वाहस्थ-परम्परा माता-पितृ-व्यञ्जनाः शिल्प-कारिकाः कुशीलवा दास्यो वा गीत-पाठ्य-वाद्य-भाण्ड-गूढ-लेख्य-संज्ञाभिर्वा चारं निर्हरेयुः- ।। ०१.१२.१३ ।।

दीर्घ-रोग-उन्माद-अग्नि-रस-विसर्गेण वा गूढ-निर्गमनं ।। ०१.१२.१४ ।।

त्रयाणां एक-वाक्ये सम्प्रत्ययः ।। ०१.१२.१५ ।।

तेषां अभीक्ष्ण-विनिपाते तूष्णीं-दण्डः प्रतिषेधः ।। ०१.१२.१६ ।।

कण्टक-शोधन-उक्ताश्चापसर्पाः परेषु कृत-वेतना वसेयुरसम्पातिनश्चार-अर्थं ।। ०१.१२.१७ ।।

त उभय-वेतनाः ।। ०१.१२.१८ ।।

गृहीत-पुत्र-दारांश्च कुर्यादुभय-वेतनान् ।। ०१.१२.१९अ ब ।।

तांश्चारि-प्रहितान्विद्यात्तेषां शौचं च तद्विधैः ।। ०१.१२.१९च्द् ।।

एवं शत्रौ च मित्रे च मध्यमे चऽवपेच्चरान् ।। ०१.१२.२०अ ब ।।

उदासीने च तेषां च तीर्थेष्वष्टादशस्वपि ।। ०१.१२.२०च्द् ।।

अन्तर्-गृह-चरास्तेषां कुब्ज-वामन-पण्डकाः || ०१.१२.२१अ ब ||

शिल्पवत्यः स्त्रियो मूकाश्चित्राश्च म्लेच्छ-जातयः || ०१.१२.२१च्द् ||

दुर्गेषु वणिजः संस्था दुर्ग-अन्ते सिद्ध-तापसाः || ०१.१२.२२अ ब ||

कर्षक-उदास्थिता राष्ट्रे राष्ट्र-अन्ते व्रज-वासिनः || ०१.१२.२२च्द् ||

वने वन-चराः कार्याः श्रमण-आटविक-आदयः || ०१.१२.२३अ ब ||

पर-प्रवृत्ति-ज्ञान-अर्थाः शीघ्राश्-चार-परम्पराः || ०१.१२.२३च्द् ||

परस्य चएते बोद्धव्यास्तादृशैरेव तादृशाः || ०१.१२.२४अ ब ||

चार-संचारिणः संस्था गूढाश्चागूढ-संज्ञिताः || ०१.१२.२४च्द् ||

अकृत्यान्कृत्य-पक्षीयैर्दर्शितान्कार्य-हेतुभिः || ०१.१२.२५अ ब ||

पर-अपसर्प-ज्ञान-अर्थं मुख्यानन्तेषु वासयेत् || ०१.१२.२५च्द् ||

कृत-महा-मात्र-अपसर्पः पौर-जानपदानपसर्पयेत् ।। ०१.१३.०१ ।।

सत्त्रिणो द्वन्द्विनस्तीर्थ-सभा-पूग-जन-समवायेषु विवादं कुर्युः ।। ०१.१३.०२ ।।

"सर्व-गुण-सम्पन्नश्चायं राजा श्रूयते । न चास्य कश्चिद्गुणो दृश्यते यः पौर-जानपदान्दण्ड-कराभ्यां पीडयति" इति ।। ०१.१३.०३ ।।

तत्र येअनुप्रशंसेयुस्तानितरस्तं च प्रतिषेधयेत् ।। ०१.१३.०४ ।।

"मात्स्य-न्याय-अभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे ।। ०१.१३.०५ ।।

धान्य-षड्-भागं पण्य-दश-भागं हिरण्यं चास्य भाग-धेयं प्रकल्पयामासुः ।। ०१.१३.०६ ।।

तेन भृता राजानः प्रजानां योग-क्षेम-आवहाः ।। ०१.१३.०७ ।।

तेषां किल्बिषं अदण्ड-करा हरन्त्ययोग-क्षेम-आवहाश्च प्रजानां ।। ०१.१३.०८ ।।

तस्मादुञ्छ-षड्-भागं आरण्यकाअपि निर्वपन्ति "तस्यएतद्भाग-धेयं योअस्मान्गोपायति" इति ।। ०१.१३.०९ ।।

इन्द्र-यम-स्थानं एतद्राजानः प्रत्यक्ष-हेड-प्रसादाः ।। ०१.१३.१० ।।

तानवमन्यमानान्दैवोअपि दण्डः स्पृशति ।। ०१.१३.११ ।।

तस्माद्राजानो नावमन्तव्याः ।। ०१.१३.१२ ।।

इत्येवं क्षुद्रकान्प्रतिषेधयेत् ।। ०१.१३.१३ ।।

किं-वदन्तीं च विद्युः ।। ०१.१३.१४ ।।

ये चास्य धान्य-पशु-हिरण्यान्याजीवन्ति । तैरुपकुर्वन्ति व्यसनेअभ्युदये वा । कुपितं बन्धुं राष्ट्रं वा व्यावर्तयन्ति । अमित्रं आटविकं वा प्रतिषेधयन्ति । तेषां मुण्ड-जटिल-व्यञ्जनास्तुष्ट-अतुष्टत्वं विद्युः ।। ०१.१३.१५ ।।

तुष्टान्भूयोअर्थ-मानाभ्यां पूजयेत् ।। ०१.१३.१६ ।।

अतुष्टांस्तुष्टि-हेतोस्त्यागेन साम्ना च प्रसादयेत् ।। ०१.१३.१७ ।।

परस्पराद्वा भेदयेदेनान् । सामन्त-आटविक-तत्-कुलीन-अपरुद्धेभ्यश्च ।। ०१.१३.१८ ।।

तथाअप्यतुष्यतो दण्ड-कर-साधन-अधिकारेण जनपद-विद्वेषं ग्राहयेत् ।। ०१.१३.१९ ।।

विविष्टानुपांशु-दण्डेन जनपद-कोपेन वा साधयेत् ।। ०१.१३.२० ।।

गुप्त-पुत्र-दारानाकर-कर्म-अन्तेषु वा वासयेत्परेषां आस्पद-भयात् ।। ०१.१३.२१ ।।

क्रुद्ध-लुब्ध-भीत-मानिनस्तु परेषां कृत्याः ।। ०१.१३.२२ ।।

तेषां कार्तान्तिक-नैमित्तिक-मौहूर्तिक-व्यञ्जनाः परस्पर-अभिसम्बन्धं अमित्र-आटविक-सम्बन्धं वा विद्युः ।। ०१.१३.२३ ।।

तुष्टानर्थ-मानाभ्यां पूजयेत् ।। ०१.१३.२४ ।।

अतुष्टान्साम-दान-भेद-दण्डैः साधयेत् ।। ०१.१३.२५ ।।

एवं स्व-विषये कृत्यानकृत्यांश्च विचक्षणः ।। ०१.१३.२६अ ब ।।

पर-उपजापात्सम्रक्षेत्प्रधानान्क्षुद्रकानपि ।। ०१.१३.२६च्द् ।।

कृत्य-अकृत्य-पक्ष-उपग्रहः स्व-विषये व्याख्यातः । पर-विषये वाच्यः ।। ०१.१४.०१ ।।

संश्रुत्यार्थान्विप्रलब्धः । तुल्य-कारिणोः शिल्पे वाउपकारे वा विमानितः । वल्लभ-अवरुद्धः । समाहूय पराजितः । प्रवास-उपतप्तः । कृत्वा व्ययं अलब्ध-कार्यः । स्वधर्माद्दायाद्याद्वाउपरुद्धः । मान-अधिकाराभ्यां भ्रष्टः । कुल्यैरन्तर्हितः । प्रसभ-अभिमृष्ट-स्त्रीकः । कार-अभिन्यस्तः । पर-उक्त-दण्डितः । मिथ्या-आचार-वारितः । सर्व-स्वम् आहारितः । बन्धन-परिक्लिष्टः । प्रवासित-बन्धुः इति क्रुद्ध-वर्गः ।। ०१.१४.०२ ।।

स्वयं उपहतः । विप्रकृतः । पाप-कर्म-अभिख्यातः । तुल्य-दोष-दण्डेनौद्विग्नः । पर्यात्त-भूमिः । दण्डेनौपनतः । सर्व-अधिकरणस्थः । सहसा-उपचित-अर्थः । तत्-कुलीन-उपाशंसुः । प्रद्विष्टो राज्ञा । राज-द्वेषी च इति भीत-वर्गः ।। ०१.१४.०३ ।।

परिक्षीणः । अन्य-आत्त-स्वः । कदर्यः । व्यसनी । अत्याहित-व्यवहारश्च इति लुब्ध-वर्गः ।। ०१.१४.०४ ।।

आत्म-सम्भावितः । मान-कामः । शत्रु-पूजा-अमर्षितः । नीचैरुपहितः । तीक्ष्णः । साहसिकः । भोगेनासंतुष्टः इति मानि-वर्गः ।। ०१.१४.०५ ।।

तेषां मुण्ड-जटिल-व्यञ्जनैर्यो यद्-भक्तिः कृत्य-पक्षीयस्तं तेनौपजापयेत् ।। ०१.१४.०६ ।।

"यथा मद-अन्धो हस्ती मत्तेनाधिष्ठितो यद्यदासादयति तत्सर्वं प्रमृद्नाति । एवं अयं अशास्त्र-चक्षुरन्धो राजा पौर-जानपद-वधायाभ्युत्थितः । शक्यं अस्य प्रतिहस्ति-प्रोत्साहनेनापकर्तुम् । अमर्षः क्रियताम्" इति क्रुद्ध-वर्गं उपजापयेत् ।। ०१.१४.०७ ।।

"यथा लीनः सर्पो यस्माद्भयं पश्यति तत्र विषं उत्सृजति । एवं अयं राजा जात-दोष-आशङ्कस्त्वयि पुरा क्रोध-विषं उत्सृजति । अन्यत्र गम्यताम्" इति भीत-वर्गं-उपजापयेत् ।। ०१.१४.०८ ।।

"यथा श्व-गणिनां धेनुः श्वभ्यो दुह्यते न ब्राह्मणेभ्यः । एवं अयं राजा सत्त्व-प्रज्ञा-वाक्य-शक्ति-हीनेभ्यो दुह्यते नऽत्म-गुण-सम्पन्नेभ्यः । असौ राजा पुरुष-विशेषज्ञः । तत्र गम्यताम्" इति लुब्ध-वर्गं-उपजापयेत् ।। ०१.१४.०९ ।।

"यथा चण्डाल-उद-पानश्चण्डालानां एवौपभोग्यो नान्येषाम् । एवं अयं राजा नीचो नीचानां एवौपभोग्यो न त्वद्विधानां आर्याणाम् । असौ राजा पुरुष-विशेषज्ञः । तत्र गम्यताम्" इति मानि-वर्गं उपजापयेत् ।। ०१.१४.१० ।।

तथाइति प्रतिपन्नांस्तान्संहितान्पण-कर्मणा ।। ०१.१४.११अ ब ।।

योजयेत यथा-शक्ति सापसर्पान्स्व-कर्मसु ।। ०१.१४.११च्द् ।।

लभेत साम-दानाभ्यां कृत्यांश्च पर-भूमिषु ।। ०१.१४.१२अ ब ।।

अकृत्यान्भेद-दण्डाभ्यां पर-दोषांश्च दर्शयन् ।। ०१.१४.१२च्द् ।।

कृत-स्व-पक्ष-पर-पक्ष-उपग्रहः कार्य-आरम्भांश्चिन्तयेत् || ०१.१५.०१ ||

मन्त्र-पूर्वाः सर्व-आरम्भाः || ०१.१५.०२ ||

तद्-उद्देशः संवृतः कथानां अनिह्श्रावी पक्षिभिरप्यनालोक्यः स्यात् || ०१.१५.०३ ||

श्रूयते हि शुक-सारिकाभिर्मन्त्रो भिन्नः | श्वभिरप्यन्यैश्च तिर्यग्-योनिभिरिति || ०१.१५.०४ ||

तस्मान्मन्त्र-उद्देशं अनायुक्तो नौपगच्छेत् || ०१.१५.०५ ||

उच्छिद्येत मन्त्र-भेदी || ०१.१५.०६ ||

मन्त्र-भेदो हि दूत-अमात्य-स्वामिनां इङ्गित-आकाराभ्यां || ०१.१५.०७ ||

इङ्गितं अन्यथा-वृत्तिः || ०१.१५.०८ ||

आकृति-ग्रहणं आकारः || ०१.१५.०९ ||

तस्य संवरणं आयुक्त-पुरुष-रक्षणं आ-कार्य-कालादिति || ०१.१५.१० ||

तेषां हि प्रमाद-मद-सुप्त-प्रलापाः | काम-आदिरुत्सेकः | प्रच्छन्नोअवमतो वा मन्त्रं भिनत्ति || ०१.१५.११ ||

तस्मादाद्रक्षेन्मन्त्रं || ०१.१५.१२ ||

"मन्त्र-भेदो ह्ययोग-क्षेम-करो राज्ञस्तद्-आयुक्त-पुरुषाणां च || ०१.१५.१३ ||

तस्माद्गुह्यं एको मन्त्रयेत" इति भारद्वाजः || ०१.१५.१४ ||

"मन्त्रिणां अपि हि मन्त्रिणो भवन्ति | तेषां अप्यन्ये || ०१.१५.१५ ||

साएषा मन्त्रि-परम्परा मन्त्रं भिनत्ति || ०१.१५.१६ ||

"तस्मान्नास्य परे विद्युः कर्म किंचिच्चिकीर्षितं || ०१.१५.१७अ ब ||

आरब्धारस्तु जानीयुरारब्धं कृतं एव वा || ०१.१५.१७च्द् ||

"नएकस्य मन्त्र-सिद्धिरस्ति" इति विशाल-अक्षः || ०१.१५.१८ ||

"प्रत्यक्ष-परोक्ष-अनुमेया हि राज-वृत्तिः || ०१.१५.१९ ||

अनुपलब्धस्य ज्ञानं उपलब्धस्य निश्चित-बल-आधानं अर्थ-द्वैधस्य संशयच्-छेदनं एक-देश-दृष्टस्य शेष-उपलब्धिरिति मन्त्रि-साध्यं एतत् || ०१.१५.२० ||

तस्माद्बुद्धि-वृद्धैः सार्धं अध्यासीत मन्त्रं || ०१.१५.२१ ||

"न कंचिदवमन्येत सर्वस्य शृणुयान्मतं || ०१.१५.२२अ ब ||

बालस्याप्यर्थवद्-वाक्यं उपयुञ्जीत पण्डितः || ०१.१५.२२च्द् ||

"एतन्मन्त्र-ज्ञानम् | नएतन्मन्त्र-रक्षणम्" इति पाराशराः || ०१.१५.२३ ||

"यदस्य कार्यं अभिप्रेतं तत्-प्रतिरूपकं मन्त्रिणः पृच्छेत् "कार्यं इदं एवं आसीत् । एवं वा यदि भवेत् । तत्कथं कर्तव्यम्" इति ।। ०१.१५.२४ ।।

ते यथा ब्रूयुस्तत्कुर्यात् ।। ०१.१५.२५ ।।

एवं मन्त्र-उपलब्धिः संवृतिश्च भवति" इति ।। ०१.१५.२६ ।।

नैति पिशुनः ।। ०१.१५.२७ ।।

"मन्त्रिणो हि व्यवहितं अर्थं वृत्तं अवृत्तं वा पृष्टा अनादरेण ब्रुवन्ति प्रकाशयन्ति वा ।। ०१.१५.२८ ।।

स दोषः ।। ०१.१५.२९ ।।

तस्मात्कर्मसु ये येष्वभिप्रेतास्तैः सह मन्त्रयेत ।। ०१.१५.३० ।।

तैर्मन्त्रयमाणो हि मन्त्र-सिद्धिं गुप्तिं च लभते" इति ।। ०१.१५.३१ ।।

नैति कौटिल्यः ।। ०१.१५.३२ ।।

अनवस्था ह्येषा ।। ०१.१५.३३ ।।

मन्त्रिभिस्त्रिभिश्चतुर्भिर्वा सह मन्त्रयेत ।। ०१.१५.३४ ।।

मन्त्रयमाणो ह्येकेनार्थ-कृच्छ्रेषु निश्चयं नाधिगच्छेत् ।। ०१.१५.३५ ।।

एकश्च मन्त्री यथा-इष्टं अनवग्रहश्चरति ।। ०१.१५.३६ ।।

द्वाभ्यां मन्त्रयमाणो द्वाभ्यां संहताभ्यां अवगृह्यते । विगृहीताभ्यां विनाश्यते ।। ०१.१५.३७ ।।

तत्त्रिषु चतुषु वा कृच्छ्रेणौपपद्यते ।। ०१.१५.३८ ।।

महा-दोषं उपपन्नं तु भवति ।। ०१.१५.३९ ।।

ततः परेषु कृच्छ्रेणार्थ-निश्चयो गम्यते । मन्त्रो वा रक्ष्यते ।। ०१.१५.४० ।।

देश-काल-कार्य-वशेन त्वेकेन सह द्वाभ्यां एको वा यथा-सामर्थ्यं मन्त्रयेत (अल्तेर्णतिवे विएwसप्प्रोवेद्) ।। ०१.१५.४१ ।।

कर्मणां आरम्भ-उपायः पुरुष-द्रव्य-सम्पद्देश-काल-विभागो विनिपात-प्रतीकारः कार्य-सिद्धिरिति पञ्च-अङ्गो मन्त्रः ।। ०१.१५.४२ ।।

तानेकैकशः पृच्छेत्समस्तांश्च ।। ०१.१५.४३ ।।

हेतुभिश्चएषां मति-प्रविवेकान्विद्यात् ।। ०१.१५.४४ ।।

अवाप्त-अर्थः कालं नातिक्रामयेत् ।। ०१.१५.४५ ।।

न दीर्घ-कालं मन्त्रयेत । न तेषां पक्षीयैर्येषां अपकुर्यात् ।। ०१.१५.४६ ।।

"मन्त्रि-परिषदं द्वादश-अमात्यान्कुर्वीत" इति मानवाः ।। ०१.१५.४७ ।।

"षोडश" इति बार्हस्पत्याः ।। ०१.१५.४८ ।।

"विंशतिम्" इत्यौशनसाः ।। ०१.१५.४९ ।।

यथा-सामर्थ्यं इति कौटिल्यः ।। ०१.१५.५० ।।

ते ह्यस्य स्व-पक्षं पर-पक्षं च चिन्तयेयुः ।। ०१.१५.५१ ।।

अकृत-आरम्भं आरब्ध-अनुष्ठानं अनुष्ठित-विशेषं नियोग-सम्पदं च कर्मणां कुर्युः ।। ०१.१५.५२ ।।

आसन्नैः सह कर्माणि पश्येत् ।। ०१.१५.५३ ।।

अनासन्नैः सह पत्त्र-सम्प्रेषणेन मन्त्रयेत ।। ०१.१५.५४ ।।

इन्द्रस्य हि मन्त्रि-परिषद्-ऋषीणां सहस्रं ।। ०१.१५.५५ ।।

स तच्चक्षुः ।। ०१.१५.५६ ।।

तस्मादिमं द्व्य्-अक्षं सहस्र-अक्षं आहुः ।। ०१.१५.५७ ।।

आत्ययिके कार्ये मन्त्रिणो मन्त्रि-परिषदं चऽहूय ब्रूयात् ।। ०१.१५.५८ ।।

तत्र यद्-भूयिष्ठा ब्रूयुः कार्य-सिद्धि-करं वा तत्कुर्यात् ।। ०१.१५.५९ ।।

कुर्वतश्च ।। ०१.१५.६० ।।

नास्य गुह्यं परे विद्युश्छिद्रं विद्यात्परस्य च ।। ०१.१५.६०अ ब ।।

गूहेत्कूर्मैवाङ्गानि यत्स्याद्विवृतं आत्मनः ।। ०१.१५.६०च्द् ।।

यथा ह्यश्रोत्रियः श्राद्धं न सतां भोक्तुं अर्हति ।। ०१.१५.६१अ ब ।।

एवं अश्रुत-शास्त्र-अर्थो न मन्त्रं श्रोतुं अर्हति ।। ०१.१५.६१च्द् ।।

उद्वृत्त-मन्त्रो दूत-प्रणिधिः ।। ०१.१६.०१ ।।

अमात्य-सम्पदाउपेतो निसृष्ट-अर्थः ।। ०१.१६.०२ ।।

पाद-गुण-हीनः परिमित-अर्थः ।। ०१.१६.०३ ।।

अर्ध-गुण-हीनः शासन-हरः ।। ०१.१६.०४ ।।

सुप्रतिविहित-यान-वाहन-पुरुष-परिवापः प्रतिष्ठेत ।। ०१.१६.०५ ।।

शासनं एवं वाच्यः परः । स वक्ष्यत्येवम् । तस्यैदं प्रतिवाक्यम् । एवं अतिसंधातव्यम् । इत्यधीयानो गच्छेत् ।। ०१.१६.०६ ।।

अटव्य्-अन्त-पाल-पुर-राष्ट्र-मुख्यैश्च प्रतिसंसर्गं गच्छेत् ।। ०१.१६.०७ ।।

अनीक-स्थान-युद्ध-प्रतिग्रह-अपसार-भूमीरात्मनः परस्य चावेक्षेत ।। ०१.१६.०८ ।।

दुर्ग-राष्ट्र-प्रमाणं सार-वृत्ति-गुप्तिच्-छिद्राणि चौपलभेत ।। ०१.१६.०९ ।।

पर-अधिष्ठानं अनुज्ञातः प्रविशेत् ।। ०१.१६.१० ।।

शासनं च यथा-उक्तं ब्रूयात् । प्राण-आबाधेअपि दृष्टे ।। ०१.१६.११ ।।

परस्य वाचि वक्त्रे दृष्ट्यां च प्रसादं वाक्य-पूजनं इष्ट-परिप्रश्नं गुण-कथा-सङ्गं आसन्नं आसनं सत्कारं इष्टेषु स्मरणं विश्वास-गमनं च लक्षयेत्तुष्टस्य । विपरीतं अतुष्टस्य ।। ०१.१६.१२ ।।

तं ब्रूयात् "दूत-मुखा हि राजानः । त्वं चान्ये च ।। ०१.१६.१३ ।।

तस्मादुद्यतेष्वपि शस्त्रेषु यथा-उक्तं वक्तारो दूताः ।। ०१.१६.१४ ।।

तेषां अन्त-अवसायिनोअप्यवध्याः । किं अङ्ग पुनर्ब्राह्मणाः ।। ०१.१६.१५ ।।

परस्यएतद्वाक्यं ।। ०१.१६.१६ ।।

एष दूत-धर्मः" इति ।। ०१.१६.१७ ।।

वसेदविसृष्टः पूजया नौत्सिक्तः ।। ०१.१६.१८ ।।

परेषु बलित्वं न मन्येत ।। ०१.१६.१९ ।।

वाक्यं अनिष्टं सहेत ।। ०१.१६.२० ।।

स्त्रियः पानं च वर्जयेत् ।। ०१.१६.२१ ।।

एकः शयीत ।। ०१.१६.२२ ।।

सुप्त-मत्तयोर्हि भाव-ज्ञानं दृष्टं ।। ०१.१६.२३ ।।

कृत्य-पक्ष-उपजापं अकृत्य-पक्षे गूढ-प्रणिधानं राग-अपरागौ भर्तरि रन्ध्रं च प्रकृतीनां तापस-वैदेहक-व्यञ्जनाभ्यां उपलभेत । तयोरन्तेवासिभिश्चिकित्सक-पाषण्ड-व्यञ्जन-उभय-वेतनैर्वा ।। ०१.१६.२४ ।।

तेषां असम्भाषायां याचक-मत्त-उन्मत्त-सुप्त-प्रलापैः पुण्य-स्थान-देव-गृह-चित्र-लेख्य-संज्ञाभिर्वा चारं उपलभेत ।। ०१.१६.२५ ।।

उपलब्धस्यौपजापं उपेयात् ।। ०१.१६.२६ ।।

परेण चौक्तः स्वासां प्रकृतीनां प्रमाणं नऽचक्षीत ।। ०१.१६.२७ ।।

"सर्वं वेद भवान्" इति ब्रूयात् । कार्य-सिद्धि-करं वा ।। ०१.१६.२८ ।।

कार्यस्यासिद्धावुपरुध्यमानस्तर्कयेत् "किं भर्तुर्मे व्यसनं आसन्नं पश्यन् । स्वं वा व्यसनं प्रतिकर्तु-कामः । पार्ष्णि-ग्राहं आसारं अन्तः-कोपं आटविकं वा समुत्थापयितु-कामः । मित्रं आक्रन्दं वा व्याघातयितु-कामः । स्वं वा परतो विग्रहं अन्तः-कोपं आटविकं वा प्रतिकर्तु-कामः । संसिद्धं वा मे भर्तुर्यात्रा-कालं अभिहन्तु-कामः । ।। ०१.१६.२९ ।।

।। सस्य-पण्य-कुप्य-संग्रहं दुर्ग-कर्म बल-समुद्दानं वा कर्तु-कामः । स्व-सैन्यानां वा व्यायामस्य देश-कालावाकाङ्क्षमाणः । परिभव-प्रमादाभ्यां वा । संसर्ग-अनुबन्ध-अर्थी वा । मां उपरुणद्धि" इति ।।

ज्ञात्वा वसेदपसरेद्वा ।। ०१.१६.३० ।।

प्रयोजनं इष्टं अवेक्षेत वा ।। ०१.१६.३१ ।।

शासनं अनिष्टं उक्त्वा बन्ध-वध-भयादविसृष्टोअप्यपगच्छेत् । अन्यथा नियम्येत ।। ०१.१६.३२ ।।

प्रेषणं संधि-पालत्वं प्रतापो मित्र-संग्रहः ।। ०१.१६.३३अ ब ।।

उपजापः सुहृद्-भेदो गूढ-दण्ड-अतिसारणं ।। ०१.१६.३३च्द् ।।

बन्धु-रत्न-अपहरणं चार-ज्ञानं पराक्रमः ।। ०१.१६.३४अ ब ।।

समाधि-मोक्षो दूतस्य कर्म योगस्य चऽश्रयः ।। ०१.१६.३४च्द् ।।

स्व-दूतैः कारयेदेतत्पर-दूतांश्च रक्षयेत् ।। ०१.१६.३५अ ब ।।

प्रतिदूत-अपसर्पाभ्यां दृश्य-अदृश्यैश्च रक्षिभिः ।। ०१.१६.३५च्द् ।।

रक्षितो राजा राज्यं रक्षत्यासन्नेभ्यः परेभ्यश्च । पूर्वं दारेभ्यः पुत्रेभ्यश्च ।। ०१.१७.०१ ।।

दार-रक्षणं निशान्त-प्रणिधौ वक्ष्यामः ।। ०१.१७.०२ ।।

"पुत्र-रक्षणं तु ।। ०१.१७.०३ ।।

"जन्म-प्रभृति राज-पुत्रान्रक्षेत् ।। ०१.१७.०४ ।।

कर्कटक-सधर्माणो हि जनक-भक्षा राज-पुत्राः ।। ०१.१७.०५ ।।

तेषां अजात-स्नेहे पितर्युपांशु-दण्डः श्रेयान्" इति भारद्वाजः ।। ०१.१७.०६ ।।

"नृशंसं अदुष्ट-वधः क्षत्र-बीज-विनाशश्च" इति विशाल-अक्षः ।। ०१.१७.०७ ।।

"तस्मादेक-स्थान-अवरोधः श्रेयान्" इति ।। ०१.१७.०८ ।।

अहि-भयं एतद्" इति पाराशराः ।। ०१.१७.०९ ।।

"कुमारो हि "विक्रम-भयान्मां पिताअवरुणद्धि" इति ज्ञात्वा तं एवाङ्के कुर्यात् ।। ०१.१७.१० ।।

तस्मादन्त-पाल-दुर्गे वासः श्रेयान्" इति ।। ०१.१७.११ ।।

"औरभ्रं भयं एतद्" इति पिशुनः ।। ०१.१७.१२ ।।

"प्रत्यापत्तेर्हि तदेव कारणं ज्ञात्वाअन्त-पाल-सखः स्यात् ।। ०१.१७.१३ ।।

तस्मात्स्व-विषयादपकृष्टे सामन्त-दुर्गे वासः श्रेयान्" इति ।। ०१.१७.१४ ।।

"वत्स-स्थानं एतद्" इति कौणपदन्तः ।। ०१.१७.१५ ।।

"वत्सेनैव हि धेनुं पितरं अस्य सामन्तो दुह्यात् ।। ०१.१७.१६ ।।

तस्मान्मातृ-बन्धुषु वासः श्रेयान्" इति ।। ०१.१७.१७ ।।

"ध्वज-स्थानं एतद्" इति वात-व्याधिः ।। ०१.१७.१८ ।।

"तेन हि ध्वजेनादिति-कौशिकवदस्य मातृ-बान्धवा भिक्षेरन् ।। ०१.१७.१९ ।।

तस्माद्ग्राम्य सुखेष्वेनं अवसृजेत् ।। ०१.१७.२० ।।

सुख-उपरुद्धा हि पुत्राः पितरं नाभिद्रुह्यन्ति" इति ।। ०१.१७.२१ ।।

जीवन्-मरणं एतदिति कौटिल्यः ।। ०१.१७.२२ ।।

काष्ठं इव घुण-जग्धं राज-कुलं अविनीत-पुत्रं अभियुक्त-मात्रं भज्येत ।। ०१.१७.२३ ।।

तस्मादृतुमत्यां महिष्यां ऋत्विजश्चरुं ऐन्द्राबार्हस्पत्यं निर्वपेयुः ।। ०१.१७.२४ ।।

आपन्न-सत्त्वायाः कौमार-भृत्यो गर्भ-भर्मणि प्रसवे च वियतेत ।। ०१.१७.२५ ।।

प्रजातायाः पुत्र-संस्कारं पुरोहितः कुर्यात् ।। ०१.१७.२६ ।।

समर्थं तद्विदो विनयेयुः ।। ०१.१७.२७ ।।

"सत्त्रिणां एकश्चएनं मृगया-द्यूत-मद्य-स्त्रीभिः प्रलोभयेत्"पितरि विक्रम्य राज्यं गृहाण" इति ।। ०१.१७.२८ ।।

तं अन्यः सत्त्री प्रतिषेधयेत्" इत्याम्भीयाः ।। ०१.१७.२९ ।।

महा-दोषं अबुद्ध-बोधनं इत्कौटिल्यः ।। ०१.१७.३० ।।

नवं हि द्रव्यं येन येनार्थ-जातेनौपदिह्यते तत्तदाचूषति ।। ०१.१७.३१ ।।

एवं अयं नव-बुद्धिर्यद्यदुच्यते तत्तत्-शास्त्र-उपदेशं इवाभिजानाति ।। ०१.१७.३२ ।।

तस्माद्धर्म्यं अर्थ्यं चास्यौपदिशेन्नाधर्म्यं अनर्थ्यं च ।। ०१.१७.३३ ।।

सत्त्रिणस्त्वेनं "तव स्मः" इति वदन्तः पालयेयुः ।। ०१.१७.३४ ।।

यौवन-उत्सेकात्पर-स्त्रीषु मनः कुर्वाणं आर्या-व्यञ्जनाभिः स्त्रीभिरमेध्याभिः शून्य-आगारेषु रात्रावुद्वेजयेयुः ।। ०१.१७.३५ ।।

मद्य-कामं योग-पानेनौद्वेजयेयुः ।। ०१.१७.३६ ।।

द्यूत-कामं कापटिकैरुद्वेजयेयुः ।। ०१.१७.३७ ।।

मृगया-कामं प्रतिरोधक-व्यञ्जनैस्त्रासयेयुः ।। ०१.१७.३८ ।।

पितरि विक्रम-बुद्धिं "तथा" इत्यनुप्रविश्य भेदयेयुः "अप्रार्थनीयो राजा । विपन्ने घातः । सम्पन्ने नरक-पातः । संक्रोशः । प्रजाभिरेक-लोष्ट-वधश्च" इति ।। ०१.१७.३९ ।।

विरागं वेदयेयुः ।। ०१.१७.४० ।।

प्रियं एक-पुत्रं बध्नीयात् ।। ०१.१७.४१ ।।

बहु-पुत्रः प्रत्यन्तं अन्य-विषयं वा प्रेषयेद्यत्र गर्भः पण्यं डिम्बो वा न भवेत् ।। ०१.१७.४२ ।।

आत्म-सम्पन्नं सैनापत्ये यौवराज्ये वा स्थापयेत् ।। ०१.१७.४३ ।।

बुद्धिमान्-आहार्य-बुद्धिर्दुर्बुद्धिरिति पुत्र-विशेषाः ।। ०१.१७.४४ ।।

शिष्यमाणो धर्म-अर्थावुपलभते चानुतिष्ठति च बुद्धिमान् ।। ०१.१७.४५ ।।

उपलभमानो नानुतिष्ठत्याहार्य-बुद्धिः ।। ०१.१७.४६ ।।

अपाय-नित्यो धर्म-अर्थ-द्वेषी चैति दुर्बुद्धिः ।। ०१.१७.४७ ।।

स यद्येक-पुत्रः पुत्र-उत्पत्तावस्य प्रयतेत ।। ०१.१७.४८ ।।

पुत्रिका-पुत्रानुत्पादयेद्वा ।। ०१.१७.४९ ।।

वृद्धस्तु व्याधितो वा राजा मातृ-बन्धु-कुल्य-गुणवत्-सामन्तानां अन्यतमेन क्षेत्रे बीजं उत्पादयेत् ।। ०१.१७.५० ।।

न चएक-पुत्रं अविनीतं राज्ये स्थापयेत् ।। ०१.१७.५१ ।।

बहूनां एक-सम्रोधः पिता पुत्र-हितो भवेत् ।। ०१.१७.५२अ ब ।।

अन्यत्रऽपद ऐश्वर्यं ज्येष्ठ-भागि तु पूज्यते ।। ०१.१७.५२च्द् ।।

कुलस्य वा भवेद्राज्यं कुल-संघो हि दुर्जयः ।। ०१.१७.५३अ ब ।।

अराज-व्यसन-आबाधः शश्वदावसति क्षितिं ।। ०१.१७.५३च्द् ।।

विनीतो राज-पुत्रः कृच्छ्र-वृत्तिरसदृशे कर्मणि नियुक्तः पितरं अनुवर्तेत । अन्यत्र प्राण-आबाधक-प्रकृति-कोपक-पातकेभ्यः ।। ०१.१८.०१ ।।

पुण्ये कर्मणि नियुक्तः पुरुषं अधिष्ठातारं याचेत् ।। ०१.१८.०२ ।।

पुरुष-अधिष्ठितश्च सविशेषं आदेशं अनुतिष्ठेत् ।। ०१.१८.०३ ।।

अभिरूपं च कर्म-फलं औपायनिकं च लाभं पितुरुपनाययेत् ।। ०१.१८.०४ ।।

तथाअप्यतुष्यन्तं अन्यस्मिन्पुत्रे दारेषु वा स्निह्यन्तं अरण्यायऽपृच्छेत ।। ०१.१८.०५ ।।

बन्ध-वध-भयाद्वा यः सामन्तो न्याय-वृत्तिर्धार्मिकः सत्य-वाग्-अविसंवादकः प्रतिग्रहीता मानयिता चाभिपन्नानां तं आश्रयेत ।। ०१.१८.०६ ।।

तत्रस्थः कोश-दण्ड-सम्पन्नः प्रवीर-पुरुष-कन्या-सम्बन्धं अटवी-सम्बन्धं कृत्य-पक्ष-उपग्रहं च कुर्यात् ।। ०१.१८.०७ ।।

एक-चरः सुवर्ण-पाक-मणि-राग-हेम-रूप्य-पण्य-आकर-कर्म-अन्तानाजीवेत् ।। ०१.१८.०८ ।।

पाषण्ड-संघ-द्रव्यं अश्रोत्रिय-उपभोग्यं वा देव-द्रव्यं आढ्य-विधवा-द्रव्यं वा गूढं अनुप्रविश्य सार्थ-यान-पात्राणि च मदन-रस-योगेनातिसंधायापहरेत् ।। ०१.१८.०९ ।।

पारग्रामिकं वा योगं आतिष्ठेत् ।। ०१.१८.१० ।।

मातुः परिजन-उपग्रहेण वा चेष्टेत ।। ०१.१८.११ ।।

कारु-शिल्पि-कुशीलव-चिकित्सक-वाग्-जीवन-पाषण्डच्-छद्मभिर्वा नष्ट-रूपस्तद्-व्यञ्जन-सखश्-छिद्रेषु प्रविश्य राज्ञः शस्त्र-रसाभ्यां प्रहृत्य ब्रूयात् "अहं असौ कुमारः । सह-भोग्यं इदं राज्यम् । एको नार्हति भोक्तुम् । ये कामयन्ते मां भर्तुं तानहं द्विगुणेन भक्त-वेतनेनौपस्थास्यामि" इति इत्यपरुद्ध-वृत्तं ।। ०१.१८.१२ ।।

अपरुद्धं तु मुख्य-पुत्र-अपसर्पाः प्रतिपाद्यऽनयेयुः । माता वा प्रतिगृहीता ।। ०१.१८.१३ ।।

त्यक्तं गूढ-पुरुषाः शस्त्र-रसाभ्यां हन्युः ।। ०१.१८.१४ ।।

अत्यक्तं तुल्य-शीलाभिः स्त्रीभिः पानेन मृगयया वा प्रसञ्जयित्वा रात्रावुपगृह्यऽनयेयुः ।। ०१.१८.१५ ।।

उपस्थितं च राज्येन मद्-ऊर्ध्वं इति सान्त्वयेत् ।। ०१.१८.१६अ ब ।।

एकस्थं अथ समुन्ध्यात्पुत्रवांस्तु प्रवासयेत् ।। ०१.१८.१६च्द् ।।

राजानं उत्थितं अनूत्तिष्ठन्ते भृत्याः ।। ०१.१९.०१ ।।

प्रमाद्यन्तं अनुप्रमाद्यन्ति ।। ०१.१९.०२ ।।

कर्माणि चास्य भक्षयन्ति ।। ०१.१९.०३ ।।

द्विषद्भिश्चातिसंधीयते ।। ०१.१९.०४ ।।

तस्मादुत्थानं आत्मनः कुर्वीत ।। ०१.१९.०५ ।।

नालिकाभिरहरष्टधा रात्रिं च विभजेत् । छाया-प्रमाणेन वा ।। ०१.१९.०६ ।।

त्रिपौरुषी पौरुषी चतुर्-अङ्गुला नष्टच्-छायो मध्य-अह्नैति चत्वारः पूर्वे दिवसस्याष्ट-भागाः ।। ०१.१९.०७ ।।

तैः पश्चिमा व्याख्याताः ।। ०१.१९.०८ ।।

तत्र पूर्वे दिवसस्याष्ट-भागे रक्षा-विधानं आय-व्ययौ च शृणुयात् ।। ०१.१९.०९ ।।

द्वितीये पौर-जानपदानां कार्याणि पश्येत् ।। ०१.१९.१० ।।

तृतीये स्नान-भोजनं सेवेत । स्वाध्यायं च कुर्वीत ।। ०१.१९.११ ।।

चतुर्थे हिरण्य-प्रतिग्रहं अध्यक्षांश्च कुर्वीत ।। ०१.१९.१२ ।।

पञ्चमे मन्त्रि-परिषदा पत्त्र-सम्प्रेषणेन मन्त्रयेत । चार-गुह्य-बोधनीयानि च बुध्येत ।। ०१.१९.१३ ।।

षष्ठे स्वैर-विहारं मन्त्रं वा सेवेत ।। ०१.१९.१४ ।।

सप्तमे हस्त्य्-अश्व-रथ-आयुधीयान्पश्येत् ।। ०१.१९.१५ ।।

अष्टमे सेना-पति-सखो विक्रमं चिन्तयेत् ।। ०१.१९.१६ ।।

प्रतिष्ठितेअहनि संध्यां उपासीत ।। ०१.१९.१७ ।।

प्रथमे रात्रि-भागे गूढ-पुरुषान्पश्येत् ।। ०१.१९.१८ ।।

द्वितीये स्नान-भोजनं कुर्वीत । स्वाध्यायं च ।। ०१.१९.१९ ।।

तृतीये तूर्य-घोषेण संविष्टश्चतुर्थ-पञ्चमौ शयीत ।। ०१.१९.२० ।।

षष्ठे तूर्य-घोषेण प्रतिबुद्धः शास्त्रं इतिकर्तव्यतां च चिन्तयेत् ।। ०१.१९.२१ ।।

सप्तमे मन्त्रं अध्यासीत । गूढ-पुरुषांश्च प्रेषयेत् ।। ०१.१९.२२ ।।

अष्टमे ऋत्विग्-आचार्य-पुरोहित-स्वस्त्ययनानि प्रतिगृह्णीयात् । चिकित्सक-माहानसिक-मौहूर्तिकांश्च पश्येत् ।। ०१.१९.२३ ।।

सवत्सां धेनुं वृषभं च प्रदक्षिणी-कृत्यौपस्थानं गच्छेत् ।। ०१.१९.२४ ।।

आत्म-बल-आनुकूल्येन वा निशा-अहर्-भागान्प्रविभज्य कार्याणि सेवेत ।। ०१.१९.२५ ।।

उपस्थान-गतः कार्य-अर्थिनां अद्वार-आसङ्गं कारयेत् ।। ०१.१९.२६ ।।

दुर्दर्शो हि राजा कार्य-अकार्य-विपर्यासं आसन्नैः कार्यते ।। ०१.१९.२७ ।।

तेन प्रकृति-कोपं अरि-वशं वा गच्छेत् ।। ०१.१९.२८ ।।

तस्माद्देवता-आश्रम-पाषण्ड-श्रोत्रिय-पशु-पुण्य-स्थानानां बाल-वृद्ध-व्याधित-व्यसन्य्-अनाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत् । कार्य-गौरवादात्ययिक-वशेन वा ।। ०१.१९.२९ ।।

सर्वं आत्ययिकं कार्यं शृणुयान्नातिपातयेत् ।। ०१.१९.३०अ ब ।।

कृच्छ्र-साध्यं अतिक्रान्तं असाध्यं वाअपि जायते ।। ०१.१९.३०च्द् ।।

अग्न्य्-अगार-गतः कार्यं पश्येद्वैद्य-तपस्विनां ।। ०१.१९.३१अ ब ।।

पुरोहित-आचार्य-सखः प्रत्युत्थायाभिवाद्य च ।। ०१.१९.३१च्द् ।।

तपस्विनां तु कार्याणि त्रैविद्यैः सह कारयेत् ।। ०१.१९.३२अ ब ।।

माया-योगविदां चैव न स्वयं कोप-कारणात् ।। ०१.१९.३२च्द् ।।

राज्ञो हि व्रतं उत्थानं यज्ञः कार्य-अनुशासनं ।। ०१.१९.३३अ ब ।।

दक्षिणा वृत्ति-साम्यं तु दीक्षा तस्याभिषेचनं ।। ०१.१९.३३च्द् ।।

प्रजा-सुखे सुखं राज्ञः प्रजानां च हिते हितं ।। ०१.१९.३४अ ब ।।

नऽत्म-प्रियं हितं राज्ञः प्रजानां तु प्रियं हितं ।। ०१.१९.३४च्द् ।।

तस्मान्नित्य-उत्थितो राजा कुर्यादर्थ-अनुशासनं ।। ०१.१९.३५अ ब ।।

अर्थस्य मूलं उत्थानं अनर्थस्य विपर्ययः ।। ०१.१९.३५च्द् ।।

अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च ।। ०१.१९.३६अ ब ।।

प्राप्यते फलं उत्थानाल्लभते चार्थसम्पदं ।। ०१.१९.३६च्द् ।।

वास्तुक-प्रशस्ते देशे सप्राकार-परिखा-द्वारं अनेक-कक्ष्या-परिगतं अन्तःपुरं कारयेत् ।। ०१.२०.०१ ।।

कोशगृह-विधानेन मध्ये वास-गृहम् । गूढ-भित्ति-संचारं मोहन-गृहं तन्-मध्ये वा वास-गृहम् । भूमि-गृहं वाआसन्न-चैत्य-काष्ठ-देवता-अपिधान-द्वारं अनेक-सुरुङ्गा-संचारं तस्यौपरि प्रासादं गूढ-भित्ति-सोपानं सुषिर-स्तम्भ-प्रवेश-अपसारं वा वास-गृहं यन्त्र-बद्ध-तल-अवपातं कारयेत् । आपत्-प्रतीकार-अर्थं आपदि वा ।। का०१.२०.०२ ।।

अतोअन्यथा वा विकल्पयेत् । सह-अध्यायि-भयात् ।। ०१.२०.०३ ।।

मानुषेणाग्निना त्रिरपसव्यं परिगतं अन्तःपुरं अग्निरन्यो न दहति । न चात्रान्योअग्निर्ज्वलति । वैद्युतेन भस्मना मृत्-सम्युक्तेन करक-वारिणाअवलिप्तं च ।। ०१.२०.०४ ।।

जीवन्ती-श्वेता-मुष्कक-पुष्प-वन्दाकाभिरक्षीवे जातस्याश्वत्थस्य प्रतानेन गुप्तं सर्पा विषाणि वा न प्रभवन्ति ।। ०१.२०.०५ ।।

मयूर-नकुल-पृषत-उत्सर्गः सर्पान्भक्षयति ।। ०१.२०.०६ ।।

शुकः सारिका भृङ्ग-राजो वा सर्प-विष-शङ्कायां क्रोशति ।। ०१.२०.०७ ।।

क्रौञ्चो विष-अभ्याशे माद्यति । ग्लायति जीवं-जीवकः । म्रियते मत्त-कोकिलः । चकोरस्याक्षिणी विरज्येते ।। ०१.२०.०८ ।।

इत्येवं अग्नि-विष-सर्पेभ्यः प्रतिकुर्वीत ।। ०१.२०.०९ ।।

पृष्ठतः कक्ष्या-विभागे स्त्री-निवेशो गर्भ-व्याधि-संस्था वृक्ष-उदक-स्थानं च ।। ०१.२०.१० ।।

बहिः कन्या-कुमार-पुरं ।। ०१.२०.११ ।।

पुरस्तादलङ्कार-भूमिर्मन्त्र-भूमिरुपस्थानं कुमार-अध्यक्ष-स्थानं च ।। ०१.२०.१२ ।।

कक्ष्य-अन्तरेष्वन्तर्वंशिक-सैन्यं तिष्ठेत् ।। ०१.२०.१३ ।।

अन्तर्-गृह-गतः स्थविर-स्त्री-परिशुद्धां देवीं पश्येत् ।। ०१.२०.१४ ।।

देवी-गृहे लीनो हि भ्राता भद्रसेनं जघान । मातुः शय्या-अन्तर्गतश्च पुत्रः कारूषं ।। ०१.२०.१५ ।।

लाजान्मधुनाइति विषेण पर्यस्य देवी काशि-राजम् । विष-दिग्धेन नूप्रेण वैरन्त्यम् । मेखला-मणिना सौवीरम् । जालूथं आदर्शेन । वेण्यां गूढं शस्त्रं कृत्वा देवी विदूरथं जघान ।। ०१.२०.१६ ।।

तस्मादेतान्यास्पदानि परिहरेत् ।। ०१.२०.१७ ।।

मुण्ड-जटिल-कुहक-प्रतिसंसर्गं बाह्याभिश्च दासीभिः प्रतिषेधयेत् ।। ०१.२०.१८ ।।

न चएनाः कुल्याः पश्येयुः । अन्यत्र गर्भ-व्याधि-संस्थाभ्यः ।। ०१.२०.१९ ।।

रूप-आजीवाः स्नान-प्रघर्ष-शुद्ध-शरीराः परिवर्तित-वस्त्र-अलंकाराः पश्येयुः ।। ०१.२०.२० ।।

अशीतिकाः पुरुषाः पञ्चाशत्काः स्त्रियो वा माता-पितृ-व्यञ्जनाः स्थविर-वर्षधर-अभ्यागारिकाश्चावरोधानां शौच-आशौचं विद्युः । स्थापयेयुश्च स्वामि-हिते । ।। ०१.२०.२१ ।।

स्व-भूमौ च वसेत्सर्वः पर-भूमौ न संचरेत् ।। ०१.२०.२२अ ब ।।

न च बाहयेन संसर्गं कश्चिदाभ्यन्तरो व्रजेत् ।। ०१.२०.२२च्द् ।।

सर्वं चावेक्षितं द्रव्यं निबद्ध-आगम-निर्गमं ।। ०१.२०.२३अ ब ।।

निर्गच्छेदभिगच्छेद्वा मुद्रा-संक्रान्त-भूमिकं ।। ०१.२०.२३च्द् ।।

शयनादुत्थितः स्त्री-गणैर्धन्विभिः परिगृह्यते । द्वितीयस्यां कक्ष्यायां कञ्चुक-उष्णीषिभिर्वर्ष-धर-अभ्यागारिकैः । तृतीयस्यां कुब्ज-वामन-किरातैः । चतुर्थ्यां मन्त्रिभिः सम्बन्धिभिर्दौवारिकैश्च प्रास-पाणिभिः ।। ०१.२१.०१ ।।

पितृ-पैतामहं सम्बन्ध-अनुबद्धं शिक्षितं अनुरक्तं कृत-कर्माणं च जनं आसन्नं कुर्वीत । नान्यतो-देशीयं अकृत-अर्थ-मानं स्व-देशीयं वाअप्यपकृत्यौपगृहीतं ।। ०१.२१.०२ ।।

अन्तर्-वंशिक-सैन्यं राजानं अन्तःपुरं च रक्षेत् ।। ०१.२१.०३ ।।

गुप्ते देशे माहानसिकः सर्वं आस्वाद-बाहुल्येन कर्म कारयेत् ।। ०१.२१.०४ ।।

तद्राजा तथैव प्रतिभुञ्जीत पूर्वं अग्नये वयोभ्यश्च बलिं कृत्वा ।। ०१.२१.०५ ।।

अग्नेर्ज्वाला-धूम-नीलता शब्द-स्फोटनं च विष-युक्तस्य । वयसां विपत्तिश्च ।। ०१.२१.०६ ।।

अन्नस्य ऊष्मा मयूर-ग्रीव-आभः शैत्यं आशु क्लिष्टस्यैव वैवर्ण्यं सौदकत्वं अक्लिन्नत्वं च ।। ०१.२१.०७अ ।।

व्यञ्जनानां आशु शुष्कत्वं च क्वाथ-ध्याम-फेन-पटल-विच्छिन्न-भावो गन्ध-स्पर्श-रस-वधश्च ।। ०१.२१.०७ब ।।

द्रवेषु हीन-अतिरिक्तच्-छाया-दर्शनं फेन-पटल-सीमन्त-ऊर्ध्व-राजी-दर्शनं च ।। ०१.२१.०७क ।।

रसस्य मध्ये नीला राजी । पयसस्ताम्रा । मद्य-तोययोः काली । दध्नः श्यामा । मधुनः श्वेता । द्रव्याणां आर्द्राणां आशु प्रम्लानत्वं उत्पक्व-भावः क्वाथ-नील-श्यावता च ।। ०१.२१.०७ड ।।

शुष्काणां आशु शातनं वैवर्ण्यं च । ।। ०१.२१.०७ए ।।

कठिनानां मृदुत्वं मृदूनां च कठिनत्वम् । तद्-अभ्याशे क्षुद्र-सत्त्व-वधश्च । ।। ०१.२१.०७फ़् ।।

आस्तरण-प्रवरणानां ध्याम-मण्डलता तन्तुरोम-पक्ष्म-शातनं च । ।। ०१.२१.०७ग् ।।

लोह-मणिमयानां पङ्कम-लोपदेहता स्नेह-राग-गौरव-प्रभाव-वर्ण-स्पर्शवधश्च इति विषयुक्तस्य लिङ्गानि ।। ०१.२१.०७ह् ।।

विष-प्रदस्य तु शुष्क-श्याव-वक्त्रता वाक्-सङ्गः स्वेदो विजृम्भणं चातिमात्रं वेपथुः प्रस्खलनं वाक्य-विप्रेक्षणं आवेगः कर्मणि स्व-भूमौ चानवस्थानं इति ।। ०१.२१.०८ ।।

तस्मादस्य जाङ्गुलीविदो भिषजश्चऽसन्नाः स्युः ।। ०१.२१.०९ ।।

भिषग्-भैषज्य-अगारादास्वाद-विशुद्धं औषधं गृहीत्वा पाचक-पेषकाभ्यां आत्मना च प्रतिस्वाद्य राज्ञे प्रयच्छेत् ।। ०१.२१.१० ।।

पानं पानीयं चाउषधेन व्याख्यातं ।। ०१.२१.११ ।।

कल्पक-प्रसाधकाः स्नान-शुद्ध-वस्त्र-हस्ताः समुद्रं उपकरणं अन्तर्वंशिक-हस्तादादाय परिचरेयुः ।। ०१.२१.१२ ।।

स्नापक-संवाहक-आस्तरक-रजक-माला-कार-कर्म दास्यः प्रसिद्ध-शौचाः कुर्युः । ताभिरधिष्ठिता वा शिल्पिनः ।। ०१.२१.१३ ।।

आत्म-चक्षुषि निवेश्य वस्त्र-माल्यं दद्युः । स्नान-अनुलेपन-प्रघर्ष-चूर्ण-वास-स्नानीयानि च स्व-वक्षो-बाहुषु च ।। ०१.२१.१४ ।।

एतेन परस्मादागतकं व्याख्यातं ।। ०१.२१.१५ ।।

कुशीलवाः शस्त्र-अग्नि-रस-क्रीडा-वर्जं नर्मयेयुः ।। ०१.२१.१६ ।।

आतोद्यानि चएषां अन्तस्तिष्ठेयुः । अश्व-रथ-द्विप-अलंकाराश्च ।। ०१.२१.१७ ।।

आप्त-पुरुष-अधिष्ठितं यान-वाहनं आरोहेत् । नावं चऽप्त-नाविक-अधिष्ठितं ।। ०१.२१.१८ ।।

अन्य-नौ-प्रतिबद्धां वात-वेग-वशां च नौपेयात् ।। ०१.२१.१९ ।।

उदक-अन्ते सैन्यं आसीत ।। ०१.२१.२० ।।

मत्स्य-ग्राह-विशुद्धं उदकं अवगाहेत ।। ०१.२१.२१ ।।

व्याल-ग्राह-विशुद्धं उद्यानं गच्छेत् ।। ०१.२१.२२ ।।

लुब्धक-श्व-गणिभिरपास्त-स्तेन-व्याल-पर-आबाध-भयं चल-लक्ष्य-परिचय-अर्थं मृग-अरण्यं गच्छेत् ।। ०१.२१.२३ ।।

आप्त-शस्त्र-ग्राह-अधिष्ठितः सिद्ध-तापसं पश्येत् । मन्त्रि-परिषदा सह सामन्त-दूतं ।। ०१.२१.२४ ।।

सम्नद्धोअश्वं हस्तिनं वाआरूढः सम्नद्धं अनीकं पश्येत् ।। ०१.२१.२५ ।।

निर्याणेअभियाने च राज-मार्गं उभयतः कृत-आरक्षं शस्त्रिभिर्दण्डिभिश्चापास्त-शस्त्र-हस्त-प्रव्रजित-व्यङ्गं गच्छेत् ।। ०१.२१.२६ ।।

न पुरुष-सम्बाधं अवगाहेत ।। ०१.२१.२७ ।।

यात्रा-समाज-उत्सव-प्रहवणानि च दश-वर्गिक-अधिष्ठितानि गच्छेत् ।। ०१.२१.२८ ।।

यथा च योग-पुरुषैरन्यान्राजाअधितिष्ठति ।। ०१.२१.२९अ ब ।।

तथाअयं अन्य-आबाधेभ्यो रक्षेदात्मानं आत्मवान् ।। ०१.२१.३०च्द् ।।

भूत-पूर्वं अभूत-पूर्वं वा जन-पदं पर-देश-अपवाहनेन स्व-देश-अभिष्यन्द-वमनेन वा निवेशयेत् ।। ०२.०१.०१ ।।

शूद्र-कर्षक-प्रायं कुल-शत-अवरं पञ्च-कुल-शत-परं ग्रामं क्रोशद्-विक्रोश-सीमानं अन्योन्य-आरक्षं निवेशयेत् ।। ०२.०१.०२ ।।

नली-शैल-वन-भृष्टि-दरी-सेतु-बन्ध-शमी-शाल्मली-क्षीर-वृक्षानन्तेषु सीम्नां स्थापयेत् ।। ०२.०१.०३ ।।

अष्टशत-ग्राम्या मध्ये स्थानीयम् । चतुह्शत-ग्राम्या द्रोण-मुखम् । द्विशत-ग्राम्याः कार्वटिकम् । दश-ग्रामी-संग्रहेण संग्रहं स्थापयेत् ।। ०२.०१.०४ ।।

अन्तेष्वन्त-पाल-दुर्गाणि जन-पद-द्वाराण्यन्त-पाल-अधिष्ठितानि स्थापयेत् ।। ०२.०१.०५ ।।

तेषां अन्तराणि वागुरिक-शबर-पुलिन्द-चण्डाल-अरण्य-चरा रक्षेयुः ।। ०२.०१.०६ ।।

ऋत्विग्-आचार्य-पुरोहित-श्रोत्रियेभ्यो ब्रह्म-देयान्यदण्ड-कराण्यभिरूप-दायादकानि प्रयच्छेत् ०२.०१.०७अ ।।

अध्यक्ष-संख्यायक-आदिभ्यो गोप-स्थानिक-अनीकस्थ-चिकित्सक-अश्व-दमक-जङ्घाकारिकेभ्यश्च विक्रय-आधान-वर्जानि ।। ०२.०१.०७ब ।।

करदेभ्यः कृत-क्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत् ।। ०२.०१.०८ ।।

अकृतानि कर्तृभ्यो नऽदेयानि ।। ०२.०१.०९ ।।

अकृषतां आच्छिद्यान्येभ्यः प्रयच्छेत् ।। ०२.०१.१० ।।

ग्राम-भृतक-वैदेहका वा कृषेयुः ।। ०२.०१.११ ।।

अकृषन्तो वाअवहीनं दद्युः ।। ०२.०१.१२ ।।

धान्य-पशु-हिरण्यैश्चएतानानुगृह्णीयात् ।। ०२.०१.१३ ।।

तान्यनु सुखेन दद्युः ।। ०२.०१.१४ ।।

अनुग्रह-परिहारौ चएतेब्भ्यः कोश-वृद्धि-करौ दद्यात् । कोश-उपघातकौ वर्जयेत् ।। ०२.०१.१५ ।।

अल्प-कोशो हि राजा पौर-जानपदानेव ग्रसते ।। ०२.०१.१६ ।।

निवेश-सम-कालं यथा-आगतकं वा परिहारं दद्यात् ।। ०२.०१.१७ ।।

निवृत्त-परिहारान्पिताइवानुगृह्णीयात् ।। ०२.०१.१८ ।।

आकर-कर्म-अन्त-द्रव्य-हस्ति-वन-व्रज-वणिक्-पथ-प्रचारान्वारि-स्थल-पथ-पण्य-पत्तनानि च निवेशयेत् ।। ०२.०१.१९ ।।

सह-उदकं आहार्यौदकं वा सेतुं बन्धयेत् ।। ०२.०१.२० ।।

अन्येषां वा बध्नतां भूमि-मार्ग-वृक्ष-उपकरण-अनुग्रहं कुर्यात् । पुण्य-स्थान-आरामाणां च ।। ०२.०१.२१ ।।

सम्भूय-सेतु-बन्धादपक्रामतः कर्मकर-बलीवर्दाः कर्म कुर्युः ।। ०२.०१.२२ ।।

व्ययकर्मणि च भागी स्यात् । न चांशं लभेत ।। ०२.०१.२३ ।।

मत्स्य-प्लव-हरि-तपण्यानां सेतुषु राजा स्वाम्यं गच्छेत् ।। ०२.०१.२४ ।।

दास-आहितक-बन्धूनशृण्वतो राजा विनयं ग्राहयेत् ।। ०२.०१.२५ ।।

बाल-वृद्ध-व्यसन्य्-अनाथांश्च राजा बिभृयात् । स्त्रियं अप्रजातां प्रजातायश्च पुत्रान् ।। ०२.०१.२६ ।।

बाल-द्रव्यं ग्राम-वृद्धा वर्धयेयुरा व्यवहार-प्रापणात् । देव-द्रव्यं च ।। ०२.०१.२७ ।।

अपत्य-दारं माता-पितरौ भ्रातृऋनप्राप्त-व्यवहारान्भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादश-पणो दण्डः । अन्यत्र पतितेभ्यः । अन्यत्र मातुः ।। ०२.०१.२८ ।।

पुत्र-दारं अप्रतिविधाय प्रव्रजतः पूर्वः साहस-दण्डः । स्त्रियं च प्रव्राजयतः ।। ०२.०१.२९ ।।

लुप्त-व्यायामः प्रव्रजेदापृच्छ्य धर्मस्थान् ।। ०२.०१.३० ।।

अन्यथा नियम्येत ।। ०२.०१.३१ ।।

वानप्रस्थादन्यः प्रव्रजित-भावः । सजातादन्यः संघः । सामुत्थायिकादन्यः समय-अनुबन्धो वा नास्य जन-पदं उपनिविशेत ।। ०२.०१.३२ ।।

न च तत्रऽरामा विहार-अर्था वा शालाः स्युः ।। ०२.०१.३३ ।।

नट-नर्तक-गायन-वादक-वाग्-जीवन-कुशीलवा न कर्म-विघ्नं कुर्युः ।। ०२.०१.३४ ।।

निराश्रयत्वाद्ग्रामाणां क्षेत्र-अभिरतत्वाच्च पुरुषाणां कोश-विष्टि-द्रव्य-धान्य-रस-वृद्धिर्भवति ।। ०२.०१.३५ ।।

पर-चक्र-अटवी-ग्रस्तं व्याधि-दुर्भिक्ष-पीडितं । ०२.०१.३६अ ब ।।

देशं परिहरेद्राजा व्यय-क्रीडाश्च वारयेत् ।। ०२.०१.३६च्द् ।।

दण्ड-विष्टि-कर-आबाधै रक्षेदुपहतां कृषिं । ०२.०१.३७अ ब ।।

स्तेन-व्याल-विष-ग्राहैर्व्याधिभिश्च पशु-व्रजान् ।। ०२.०१.३७च्द् ।।

वल्लभैः कार्मिकैः स्तेनैरन्त-पालैश्च पीडितं । ०२.०१.३८अ ब ।।

शोधयेत्पशु-संघैश्च क्षीयमाणं वणिक्-पथं ।। ०२.०१.३८च्द् ।।

एवं द्रव्य-द्वि-पवनं सेतु-बन्धं अथऽकरान् । ०२.०१.३९अ ब ।।

रक्षेत्पूर्व-कृतान्राजा नवांश्चाभिप्रवर्तयेत् ।। ०२.०१.३९च्द् ।।

अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेत् ।। ०२.२.०१ ।।

प्रदिष्ट-अभय-स्थावर-जङ्गमानि च ब्रह्म-सोम-अरण्यानि तपस्विभ्यो गो-रुत-पराणि प्रयच्छेत् ।। ०२.२.०२ ।।

तावन्-मात्रं एक-द्वारं खात-गुप्तं स्वादु-फल-गुल्म-गुच्छं अकण्टकि-द्रुमं उत्तान-तोय-आशयं दान्त-मृग-चतुष्पदं भग्न-नख-दंष्ट्र-व्यालं मार्गयुक-हस्ति-हस्तिनीक-लभं मृग-वनं विहार-अर्थं राज्ञः कारयेत् ।। ०२.२.०३ ।।

सर्व-अतिथि-मृगं प्रत्यन्ते चान्यन्-मृग-वनं भूमि-वशेन वा निवेशयेत् ।। ०२.२.०४ ।।

कुप्य-प्रदिष्टानां च द्रव्याणां एक-एकशो वनानि निवेशयेत् । द्रव्य-वन-कर्म-अन्तानटवीश्च द्रव्य-वन-अपाश्रयाः ।। ०२.२.०५ ।।

प्रत्यन्ते हस्ति-वनं अटव्य्-आरक्षं निवेशयेत् ।। ०२.२.०६ ।।

नाग-वन-अध्यक्षः पार्वतं नऽदेयं सार-सम-अनूपं च नाग-वनं विदित-पर्यन्त-प्रवेश-निष्कासं नाग-वन-पालैः पालयेत् ।। ०२.२.०७ ।।

हस्ति-घातिनं हन्युः ।। ०२.२.०८ ।।

दन्त-युगं स्वयं-मृतस्यऽहरतः सपाद-चतुष्पणो लाभः ।। ०२.२.०९ ।।

नाग-वन-पाला हस्तिपक-पाद-पाशिक-सैमिक-वन-चरक-पारिकर्मिक-सखा हस्ति-मूत्र-पुरीषच्-छन्न-गन्धा भल्लातकी-शाखा-प्रच्छन्नाः पञ्चभिः सप्तभिर्वा हस्ति-बन्धकीभिः सह चरन्तः शय्या-स्थान-पद्या-लेण्ड-कूल-घात-उद्देशेन हस्ति-कुल-पर्यग्रं विद्युः ।। ०२.२.१० ।।

यूथ-चरं एक-चरं निर्यूथं यूथ-पतिं हस्तिनं व्यालं मत्तं पोतं बन्ध-मुक्तं च निबन्धेन विद्युः ।। ०२.२.११ ।।

अनीकस्थ-प्रमाणैः प्रशस्त-व्यञ्जन-आचारान्हस्तिनो गृह्णीयुः ।। ०२.२.१२ ।।

हस्ति-प्रधानं विजयो राज्ञः ।। ०२.२.१३ ।।

पर-अनीक-व्यूह-दुर्ग-स्कन्ध-आवार-प्रमर्दना ह्यतिप्रमाण-शरीराः प्राण-हर-कर्माणो हस्तिनः ।। ०२.२.१४ ।।

कालिङ्ग-अङ्गरजाः श्रेष्ठाः प्राच्याश्चेदि-करूषजाः । ।। ०२.२.१५अ ब ।।

दाशार्णाश्चापर-अन्ताश्च द्विपानां मध्यमा मताः ।। ०२.२.१५च्द् ।।

सौराष्ट्रिकाः पाञ्चनदास्तेषां प्रत्यवराः स्मृताः । ।। ०२.२.१६अ ब ।।

सर्वेषां कर्मणा वीर्यं जवस्तेजश्च वर्धते ।। ०२.२.१६च्द् ।।

चतुर्दिशं जन-पद-अन्ते साम्परायिकं दैव-कृतं दुर्गं कारयेत् । अन्तर्-द्वीपं स्थलं वा निम्न-अवरुद्धं औदकम् । प्रास्तरं गुहां वा पार्वतम् । निरुदक-स्तम्बं इरिणं वा धान्वनम् । खञ्जन-उदकं स्तम्ब-गहनं वा वन-दुर्गं ।। ०२.३.०१ ।।

तेषां नदी-पर्वत-दुर्गं जन-पद-आरक्ष-स्थानम् । धान्वन-वन-दुर्गं अटवी-स्थानं आपद्यपसारो वा ।। ०२.३.०२ ।।

जन-पद-मध्ये समुदय-स्थानं स्थानीयं निवेशयेत् । वास्तुक-प्रशस्ते देशे नदी-सङ्गमे ह्रदस्याविशोषस्याङ्के सरसस्तटाकस्य वा । वृत्तं दीर्घं चतुर्-अश्रं वा वास्तु-वशेन वा प्रदक्षिण-उदकं पण्य-पुट-भेदनं अंसपथ-वारि-पथाभ्यां उपेतं ।। ०२.३.०३ ।।

तस्य परिखास्तिस्रो दण्ड-अन्तराः कारयेत्चतुर्दश द्वादश दशैति दण्डान्विस्तीर्णाः । विस्तारादवगाढाः पाद-ऊनं अर्धं वा । त्रिभाग-मूलाः । मूल-चतुर्-अश्रा वा । पाषाण-उपहिताः पाषाण-इष्टका-बद्ध-पार्श्वा वा । तोय-अन्तिकीरागन्तु-तोय-पूर्णा वा सपरिवाहाः पद्म-ग्राहवतीश्च ।। ०२.३.०४ ।।

चतुर्दण्ड-अपकृष्टं परिखायाः षड्दण्ड-उच्छ्रितं अवरुद्धं तद्-द्विगुण-विष्कम्भं खातादवप्रं कारयेदूर्ध्व-चयं मञ्च-पृष्ठं कुम्भ-कुक्षिकं वा हस्तिभिर्गोभिश्च क्षुण्णं कण्टकि-गुल्म-विष-वल्ली-प्रतानवन्तं ।। ०२.३.०५ ।।

पांसु-शेषेण वास्तुच्-छिद्रं राज-भवनं वा पूरयेत् ।। ०२.३.०६ ।।

वप्रस्यौपरि प्राकारं विष्कम्भ-द्विगुण-उत्सेधं ऐष्टकं द्वादश-हस्तादूर्ध्वं ओजं युग्मं वा आ चतुर्विंशति-हस्तादिति कारयेत् ।। ०२.३.०७अ ।।

रथ-चर्या-संचारं ताल-मूलं मुरजकैः कपि-शीर्षकैश्चऽचित-अग्रं ।। ०२.३.०७ब ।।

पृथु-शिला-संहतं वा शैलं कारयेत् । न त्वेव काष्टमयं ।। ०२.३.०८ ।।

अग्निरवहितो हि तस्मिन्वसति ।। ०२.३.०९ ।।

विष्कम्भ-चतुर्-अश्रं अट्टालकं उत्सेध-सम-अवक्षेप-सोपानं कारयेत्त्रिंशद्-दण्ड-अन्तरं च ।। ०२.३.१० ।।

द्वयोरट्टालकयोर्मध्ये सहर्म्य-द्वि-तलां अध्यर्धाय-आयामां प्रतोलीं कारयेत् ।। ०२.३.११ ।।

अट्टालक-प्रतोली-मध्ये त्रि-धानुष्क-अधिष्ठानं सापिधानच्-छिद्र-फलक-संहतं इन्द्र-कोशं कारयेत् ।। ०२.३.१२ ।।

अन्तरेषु द्विहस्त-विष्कम्भं पार्श्वे चतुर्-गुण-आयामं देव-पथं कारयेत् ।। ०२.३.१३ ।।

दण्ड-अन्तरा द्वि-दण्ड-अन्तरा वा चर्याः कारयेत् । अग्राह्ये देशे प्रधावनिकां निष्किर-द्वारं च ।। ०२.३.१४ ।।

बहिर्-जानु-भञ्जनी-शूल-प्रकर-कूप-कूट-अवपात-कण्टक-प्रतिसर-अहि-पृष्ठ-ताल-पत्त्र-शृङ्ग-अटक-श्व-दंष्ट्र-अर्गल-उपस्कन्दन-पादुक-अम्बरीष-उद-पानकैः प्रतिच्छन्नं छन्न-पथं कारयेत् ।। ०२.३.१५ ।।

प्राकारं उभयतो मेण्ढकं अध्यर्ध-दण्डं कृत्वा प्रतोली-षट्-तुला-अन्तरं द्वारं निवेशयेत्पञ्च-दण्डादेक-उत्तरं आ-अष्ट-दण्डादिति चतुर्-अश्रं षड्-भागं आयामाद्-अधिकं अष्ट-भागं वा ।। ०२.३.१६ ।।

पञ्च-दश-हस्तादेक-उत्तरं आ-अष्टादश-हस्तादिति तल-उत्सेधः ।। ०२.३.१७ ।।

स्तम्भस्य परिक्षेपः षड्-आयामो । द्विगुणो निखातः । चूलिकायाश्चतुर्-भागः ।। ०२.३.१८ ।।

आदि-तलस्य पञ्च-भागाः शाला वापी सीमा-गृहं च ।। ०२.३.१९ ।।

दश-भागिकौ द्वौ प्रतिमञ्चौ । अन्तरं आणी-हर्म्यं च ।। ०२.३.२० ।।

समुच्छ्रयादर्ध-तले स्थूणा-बन्धश्च ।। ०२.३.२१ ।।

अर्ध-वास्तुकं उत्तम-अगारम् । त्रिभाग-अन्तरं वा । इष्टका-अवबद्ध-पार्श्वम् । वामतः प्रदक्षिण-सोपानं गूढ-भित्ति-सोपानं इतरतः ।। ०२.३.२२ ।।

द्वि-हस्तं तोरण-शिरः ।। ०२.३.२३ ।।

त्रि-पञ्च-भागिकौ द्वौ कपाट-योगौ ।। ०२.३.२४ ।।

द्वौ परिघौ ।। ०२.३.२५ ।।

अरत्निरिन्द्र-कीलः ।। ०२.३.२६ ।।

पञ्च-हस्तं आणि-द्वारं ।। ०२.३.२७ ।।

चत्वारो हस्ति-परिघाः ।। ०२.३.२८ ।।

निवेश-अर्धं हस्ति-नखं ।। ०२.३.२९ ।।

मुख-समः संक्रमः संहार्यो भूमिमयो वा निरुदके ।। ०२.३.३० ।।

प्राकार-समं मुखं अवस्थाप्य त्रि-भाग-गोधा-मुखं गोपुरं कारयेत् ।। ०२.३.३१ ।।

प्राकार-मध्ये वापीं कृत्वा पुष्करिणी-द्वारम् । चतुः-शालं अध्यर्ध-अन्तरं साणिकं कुमारी-पुरम् । मुण्ड-हर्म्य-द्वि-तलं मुण्डक-द्वारम् । भूमि-द्रव्य-वशेन वा निवेशयेत् ।। ०२.३.३२ ।।

त्रि-भाग-अधिक-आयामा भाण्ड-वाहिनीः कुल्याः कारयेत् ।। ०२.३.३३ ।।

तासु पाषाण-कुद्दालाः कुठारी-काण्ड-कल्पनाः । ।। ०२.३.३४अ ब ।।

मुषुण्ढी-मुद्गरा दण्डाश्चक्र-यन्त्र-शतघ्नयः ।। ०२.३.३४च्द् ।।

कार्याः कार्मारिकाः शूला वेधन-अग्राश्च वेणवः । ।। ०२.३.३५अ ब ।।

उष्ट्र-ग्रीव्योअग्नि-सम्योगाः कुप्य-कल्पे च यो विधिः ।। ०२.३.३५च्द् ।।

त्रयः प्राचीना राज-मार्गास्त्रय उदीचीना इति वास्तु-विभागः ।। ०२.४.०१ ।।

स द्वादश-द्वारो युक्त-उदक-भ्रमच्-छन्न-पथः ।। ०२.४.०२ ।।

चतुर्-दण्ड-अन्तरा रथ्याः ।। ०२.४.०३ ।।

राज-मार्ग-द्रोण-मुख-स्थानीय-राष्ट्र-विवीत-पथाः सम्यानीय-व्यूह-श्मशान-ग्राम-पथाश्चाष्ट-दण्डाः ।। ०२.४.०४ ।।

चतुर्-दण्डः सेतु-वन-पथः । द्वि-दण्डो हस्ति-क्षेत्र-पथः । पञ्च-अरत्नयो रथ-पथः । चत्वारः पशु-पथः । द्वौ क्षुद्र-पशु-मनुष्य-पथः ।। ०२.४.०५ ।।

प्रवीरे वास्तुनि राज-निवेशश्चातुर्वर्ण्य-समाजीवे ।। ०२.४.०६ ।।

वास्तु-हृदयादुत्तरे नव-भागे यथा-उक्त-विधानं अन्तःपुरं प्रान्-मुखं उदन्-मुखं वा कारयेत् ।। ०२.४.०७ ।।

तस्य पूर्व-उत्तरं भागं आचार्य-पुरोहित-इज्या-तोय-स्थानं मन्त्रिणश्चऽवसेयुः । पूर्व-दक्षिणं भागं महानसं हस्ति-शाला कोष्ठ-अगारं च ।। ०२.४.०८ ।।

ततः परं गन्ध-माल्य-रस-पण्याः प्रसाधन-कारवः क्षत्रियाश्च पूर्वां दिशं अधिवसेयुः ।। ०२.४.०९ ।।

दक्षिण-पूर्वं भागं भाण्ड-अगारं अक्ष-पटलं कर्म-निषद्याश्च । दक्षिण-पश्चिमं भागं कुप्य-गृहं आयुध-अगारं च ।। ०२.४.१० ।।

ततः परं नगर-धान्य-व्यावहारिक-कार्मान्तिक-बल-अध्यक्षाः पक्व-अन्न-सुरा-मांस-पण्या रूपाजीवास्तालावचरा वैश्याश्च दक्षिणां दिशं अधिवसेयुः ।। ०२.४.११ ।।

पश्चिम-दक्षिणं भागं खर-उष्ट्र-गुप्ति-स्थानं कर्म-गृहं च । पश्चिम-उत्तरं भागं यान-रथ-शालाः ।। ०२.४.१२ ।।

ततः परं ऊर्णा-सूत्र-वेणु-चर्म-वर्म-शस्त्र-आवरण-कारवः शूद्राश्च पश्चिमां दिशं अधिवसेयुः ।। ०२.४.१३ ।।

उत्तर-पश्चिमं भागं पण्य-भैषज्य-गृहम् । उत्तर-पूर्वं भागं कोशो गव-अश्वं च ।। ०२.४.१४ ।।

ततः परं नगर-राज-देवता-लोह-मणि-कारवो ब्राह्मणाश्चौत्तरां दिशं अधिवसेयुः ।। ०२.४.१५ ।।

वास्तुच्-छिद्र-अनुशालेषु श्रेणी-प्रपणि-निकाया आवसेयुः ।। ०२.४.१६ ।।

अपर-अजित-अप्रतिहत-जयन्त-वैजयन्त-कोष्ठान्शिव-वैश्रवण-अश्वि-श्री-मदिरा-गृहाणि च पुर-मध्ये कारयेत् ।। ०२.४.१७ ।।

यथा-उद्देशं वास्तु-देवताः स्थापयेत् ।। ०२.४.१८ ।।

ब्राह्म-ऐन्द्र-याम्य-सैनापत्यानि द्वाराणि ।। ०२.४.१९ ।।

बहिः परिखाया धनुः-शत-अपकृष्टाश्चैत्य-पुण्य-स्थान-वन-सेतु-बन्धाः कार्याः । यथा-दिशं च दिग्-देवताः ।। ०२.४.२० ।।

उत्तरः पूर्वो वा श्मशान-भागो वर्ण-उत्तमानाम् । दक्षिणेन श्मशानं वर्ण-अवराणां ।। ०२.४.२१ ।।

तस्यातिक्रमे पूर्वः साहस-दण्डः ।। ०२.४.२२ ।।

पाषण्ड-चण्डालानां श्मशान-अन्ते वासः ।। ०२.४.२३ ।।

कर्म-अन्त-क्षेत्र-वशेन कुटुम्बिनां सीमानं स्थापयेत् ।। ०२.४.२४ ।।

तेषु पुष्प-फल-वाटान्धान्य-पण्य-निचयांश्चानुज्ञाताः कुर्युः ।। ०२.४.२५ ।।

दश-कुली-वाटं कूप-स्थानं ।। ०२.४.२६ ।।

सर्व-स्नेह-धान्य-क्षार-लवण-गन्ध-भैषज्य-शुष्क-शाक-यवस-वल्लूर-तृण-काष्ठ-लोह-चर्म-अङ्गार-स्नायु-विष-विषाण-वेणु-वल्कल-सार-दारु-प्रहरण-आवरण-अश्म-निचयाननेक-वर्ष-उपभोग-सहान्कारयेत् ।। ०२.४.२७ ।।

नवेनानवं शोधयेत् ।। ०२.४.२८ ।।

हस्ति-अश्व-रथ-पादातं अनेक-मुख्यं अवस्थापयेत् ।। ०२.४.२९ ।।

अनेक-मुख्यं हि परस्पर-भयात्पर-उपजापं नौपैति ।। ०२.४.३० ।।

एतेनान्त-पाल-दुर्ग-संस्कारा व्याख्याताः ।। ०२.४.३१ ।।

न च बाहिरिकान्कुर्यात्पुरे राष्ट्र-उपघातकान् । ।। ०२.४.३२अ ब ।।

क्षिपेज्जन-पदे चएतान्सर्वान्वा दापयेत्करान् ।। ०२.४.३२च्द् ।।

सन्निधाता कोश-गृहं पण्य-गृहं कोष्ठ-अगारं कुप्य-गृहं आयुध-अगारं बन्धन-अगारं च कारयेत् ।। ०२.५.०१ ।।

चतुर्-अश्रां वापीं अनुदक-उपस्नेहां खानयित्वा पृथु-शिलाभिरुभयतः पार्श्वं मूलं च प्रचित्य सार-दारु-पञ्जरं भूमि-समं त्रि-तलं अनेक-विधानं कुट्टिम-देश-स्थान-तलं एक-द्वारं यन्त्र-युक्त-सोपानं भूमि-गृहं कारयेत् ।। ०२.५.०२ ।।

तस्यौपरिउभयतो-निषेधं सप्रग्रीवं ऐष्टकं भाण्ड-वाहिनी-परिक्षिप्तं कोश-गृहं कारयेत् । प्रासादं वा ।। ०२.५.०३ ।।

जन-पद-अन्ते ध्रुव-निधिं आपद्-अर्थं अभित्यक्तैः कारयेत् ।। ०२.५.०४ ।।

पक्व-इष्टका-स्तम्भं चतुः-शालं एक-द्वारं अनेक-स्थान-तलं विवृत-स्तम्भ-अपसारं उभयतः पण्य-गृहं कोष्ठ-अगारं च ।। ०२.५.०५अ ।।

दीर्घ-बहु-शालं कक्ष्य-आवृत-कुड्यं अन्तः कुप्य-गृहम् । तदेव भूमि-गृह-युक्तं आयुध-अगारं ।। ०२.५.०५ब ।।

पृथग्-धर्म-स्थीयं महा-मात्रीयं विभक्त-स्त्री-पुरुष-स्थानं अपसारतः सुगुप्त-कक्ष्यं बन्धन-अगारं कारयेत् ।। ०२.५.०५क ।।

सर्वेषां शालाः खात-उद-पान-वर्च-स्नान-गृह-अग्नि-विष-त्राण-मार्जार-नकुल-आरक्षा-स्व-दैवत-पूजन-युक्ताः कारयेत् ।। ०२.५.०६ ।।

कोष्ठ-अगारे वर्षमानं अरत्नि-मुखं कुण्डं स्थापयेत् ।। ०२.५.०७ ।।

तत्-जात-करण-अधिष्ठितः पुराणं नवं च रत्नं सारं फल्गु कुप्यं वा प्रतिगृह्णीयात् ।। ०२.५.०८ ।।

तत्र रत्न-उपधावुत्तमो दण्डः कर्तुः कारयितुश्च सार-उपधौ मध्यमः । फल्गु-कुप्य-उपधौ तत् च तावत् च दण्डः ।। ०२.५.०९ ।।

रूप-दर्शक-विशुद्धं हिरण्यं प्रतिगृह्णीयात् ।। ०२.५.१० ।।

अशुद्धं छेदयेत् ।। ०२.५.११ ।।

आहर्तुः पूर्वः साहस-दण्डः ।। ०२.५.१२ ।।

शुद्धं पूर्णं अभिनवं च धान्यं प्रतिगृह्णीयात् ।। ०२.५.१३ ।।

विपर्यये मूल्य-द्विगुणो दण्डः ।। ०२.५.१४ ।।

तेन पण्यं कुप्यं आयुधं च व्याख्यातं ।। ०२.५.१५ ।।

सर्व-अधिकरणेषु युक्त-उपयुक्त-तत्पुरुषाणां पण-आदि-चतुष्-पण-परम-अपहारेषु पूर्व-मध्यम-उत्तम-वधा दण्डाः ।। ०२.५.१६ ।।

कोश-अधिष्ठितस्य कोश-अवच्छेदे घातः ।। ०२.५.१७ ।।

तद्-वैयावृत्य-कराणां अर्ध-दण्डाः ।। ०२.५.१८ ।।

परिभाषणं अविज्ञाते ।। ०२.५.१९ ।।

चोराणां अभिप्रधर्षणे चित्रो घातः ।। ०२.५.२० ।।

तस्मादाप्त-पुरुWअ-अधिष्ठितः सन्निधाता निचयाननुतिष्ठेत् ०२.५.२२अ ।। ०२.५.२१ ।।

यथा पृष्टो न सज्जेत व्यये शेषे च संचये ।। ०२.५.२२ब ।।

समाहर्ता दुर्गं राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्-पथं चावेक्षेत ।। ०२.६.०१ ।।

शुल्कं दण्डः पौतवं नागरिको लक्षण-अध्यक्षो मुद्रा-अध्यक्षः सुरा सूना सूत्रं तैलं घृतं क्षारः सौवर्णिकः पण्य-संस्था वेश्या द्यूतं वास्तुकं कारु-शिल्पि-गणो देवता-अध्यक्षो द्वार-बहिरिका-आदेयं च दुर्गं ।। ०२.६.०२ ।।

सीता भागो बलिः करो वणिक्नदी-पालस्तरो नावः पत्तनं विविचितं वर्तनी रज्जुश्चोर-रज्जुश्च राष्ट्रं ।। ०२.६.०३ ।।

सुवर्ण-रजत-वज्र-मणि-मुक्ता-प्रवाल-शङ्ख-लोह-लवण-भूमि-प्रस्तर-रस-धातवः खनिः ।। ०२.६.०४ ।।

पुष्प-फल-वाट-षण्ड-केदार-मूल-वापाः सेतुः ।। ०२.६.०५ ।।

पशु-मृग-द्रव्य-हस्ति-वन-परिग्रहो वनं ।। ०२.६.०६ ।।

गो-महिषं अज-अविकं खर-उष्ट्रं अश्व-अश्वतरं च व्रजः ।। ०२.६.०७ ।।

स्थल-पथो वारि-पथश्च वणिक्-पथः ।। ०२.६.०८ ।।

इत्याय-शरीरं ।। ०२.६.०९ ।।

मूल्यं भागो व्याजी परिघः क्ल्प्तम्(क्लृप्तम्) रूपिकं अत्ययश्चऽय-मुखं ।। ०२.६.१० ।।

देव-पितृ-पूजा-दान-अर्थम् । स्वस्ति-वाचनम् । अन्तःपुरम् । महानसम् । दूत-प्रावर्तिमम् । कोष्ठ-अगारम् । आयुध-अगारम् । पण्य-गृहम् । कुप्य-गृहम् । कर्म-अन्तो । विष्टिः । पत्ति-अश्व-रथ-द्विप-परिग्रहो । गो-मण्डलम् । पशु-मृग-पक्षि-व्याल-वाटाः । काष्ठ-तृण-वाटाश्चैति व्यय-शरीरं ।। ०२.६.११ ।।

राज-वर्षं मासः पक्षो दिवसश्च व्युष्टम् । वर्षा-हेमन्त-ग्रीष्माणां तृतीय-सप्तमा दिवस-ऊनाः पक्षाः शेषाः पूर्णाः । पृथग्-अधिमासकः । इति कालः ।। ०२.६.१२ ।।

करणीयं सिद्धं शेषं आय-व्ययौ नीवी च ।। ०२.६.१३ ।।

संस्थानं प्रचारः शरीर-अवस्थापनं आदानं सर्व-समुदय-पिण्डः संजातं एतत्करणीयं ।। ०२.६.१४ ।।

कोश-अर्पितं राज-हारः पुर-व्ययश्च प्रविष्टं परम-संवत्सर-अनुवृत्तं शासन-मुक्तं मुख-आज्ञप्तं चापातनीयं एतत्सिद्धं ।। ०२.६.१५ ।।

सिद्धि-कर्म-योगः दण्ड-शेषं आहरणीयं बलात्-कृत-प्रतिष्टब्धं अवमृष्टं च प्रशोध्यं एतत्शेषम् । असारं अल्प-सारं च ।। ०२.६.१६ ।।

वर्तमानः पर्युषितोअन्य-जातश्चऽयः ।। ०२.६.१७ ।।

दिवस-अनुवृत्तो वर्तमानः ।। ०२.६.१८ ।।

परम-सांवत्सरिकः पर-प्रचार-संक्रान्तो वा पर्युषितः ।। ०२.६.१९ ।।

नष्ट-प्रस्मृतं आयुक्त-दण्डः पार्श्वं पारिहीणिकं औपायनिकं डमर-गतक-स्वं अपुत्रकं निधिश्चान्य-जातः ।। ०२.६.२० ।।

विक्षेप-व्याधित-अन्तर-आरम्भ-शेषं च व्यय-प्रत्यायः ।। ०२.६.२१ ।।

विक्रिये पण्यानां अर्घ-वृद्धिरुपजा । मान-उन्मान-विशेषो व्याजी । क्रय-संघर्षे वार्ध-वृद्धिः इत्यायः ।। ०२.६.२२ ।।

नित्यो नित्य-उत्पादिको लाभो लाभ-उत्पादिक इति व्ययः बाहयं अभ्यन्तरं चायं विद्याद्वर्ष-शतादपि ।। ०२.६.२३ ।।

दिवस-अनुवृत्तो नित्यः ।। ०२.६.२४ ।।

पक्ष-मास-संवत्सर-लाभो लाभः ।। ०२.६.२५ ।।

तयोरुत्पन्नो नित्य-उत्पादिको लाभ-उत्पादिक इति व्ययः ।। ०२.६.२६ ।।

संजातादाय-व्यय-विशुद्धा नीवी । प्राप्ता चानुवृत्ता च ।। ०२.६.२७ ।।

एवं कुर्यात्समुदयं वृद्धिं चऽयस्य दर्शयेत् । ।। ०२.६.२८अ ब ।।

ह्रासं व्ययस्य च प्राज्ञः साधयेच्च विपर्ययं ।। ०२.६.२८च्द् ।।

अक्ष-पटलं अध्यक्षः प्रान्-मुखं उदन्-मुखं वा विभक्त-उपस्थानं निबन्ध-पुस्तक-स्थानं कारयेत् ।। ०२.७.०१ ।।

तत्राधिकरणानां संख्या-प्रचार-संजात-अग्रम् । कर्म-अन्तानां द्रव्य-प्रयोग-वृद्धि-क्षय-व्यय-प्रयाम-व्याजी-योग-स्थान-वेतन-विष्टि-प्रमाणम् । रत्न-सार-फल्गु-कुप्यानां अर्घ-प्रतिवर्णक-मान-प्रतिमान-उन्मान-अवमान-भाण्डम् । देश-ग्राम-जाति-कुल-संघानां धर्म-व्यवहार-चरित्र-संस्थानम् । राज-उपजीविनां प्रग्रह-प्रदेश-भोग-परिहार-भक्त-वेतन-लाभम् । राज्ञश्च पत्नी-पुत्राणां रत्न-भूमि-लाभं निर्देश-उत्पातिक-प्रतीकार-लाभम् । मित्र-अमित्राणां च संधि-विग्रह-प्रदान-आदानं निबन्ध-पुस्तकस्थं कारयेत् ।। ०२.७.०२ ।।

ततः सर्व-अधिकरणानां करणीयं सिद्धं शेषं आय-व्ययौ नीवीं उपस्थानं प्रचारं चरित्रं संस्थानं च निबन्धेन प्रयच्छेत् ।। ०२.७.०३ ।।

उत्तम-मध्यम-अवरेषु च कर्मसु तज्-जातिकं अध्यक्षं कुर्यात् । सामुदयिकेष्ववक्लृप्तिकम्(अवक्लिप्तकम्) यं उपहत्य राजा नानुतप्येत ।। ०२.७.०४ ।।

सहग्राहिणः प्रतिभुवः कर्म-उपजीविनः पुत्रा भ्रातरो भार्या दुहितरो भृत्याश्चास्य कर्मच्-छेदं वहेयुः ।। ०२.७.०५ ।।

त्रि-शतं चतुः-पञ्चाशत् चाहोरात्राणां कर्म-संवत्सरः ।। ०२.७.०६ ।।

तं आषाढी-पर्यवसानं ऊनं पूर्णं वा दद्यात् ।। ०२.७.०७ ।।

करण-अधिष्ठितं अधिमासकं कुर्यात् ।। ०२.७.०८ ।।

अपसर्प-अधिष्ठितंच प्रचारं ।। ०२.७.०९ ।।

प्रचार-चरित्र-संस्थानान्यनुपलभमानो हि प्रकृतः समुदयं अज्ञानेन परिहापयति । उत्थान-क्लेश-असहत्वादालस्येन । शब्दादिष्विन्द्रिय-अर्थेषु प्रसक्तः प्रमादेन । संक्रोश-अधर्म-अनर्थ-भीरु-भायेन । कार्य-अर्थिष्वनुग्रह-बुद्धिः कामेन । हिंसा-बुद्धिः कोपेन । विद्या-द्रव्य-वल्लभ-अपाश्रयाद्दर्पेण । तुला-मान-तर्क-गणित-अन्तर-उपधानात् लोभेन ।। ०२.७.१० ।।

"तेषां आनुपूर्व्या यावानर्थ-उपघातस्तावानेक-उत्तरो दण्डः" इति मानवाः ।। ०२.७.११ ।।

"सर्वत्राष्ट-गुणः" इति पाराशराः ।। ०२.७.१२ ।।

"दश-गुणः" इति बार्हस्पत्याः ।। ०२.७.१३ ।।

"विंशति-गुणः" इत्यौशनसाः ।। ०२.७.१४ ।।

यथा-अपराधं इति कौटिल्यः ।। ०२.७.१५ ।।

गाणनिक्यानि आषाढीं आगच्छेयुः ।। ०२.७.१६ ।।

आगतानां समुद्र-पुस्तक-भाण्ड-नीवीकानां एकत्र-असम्भाषा-अवरोधं कारयेत् ।। ०२.७.१७ ।।

आय-व्यय-नीवीनां अग्राणि श्रुत्वा नीवीं अवहारयेत् ।। ०२.७.१८ ।।

यच्चाग्रादायस्यान्तर-पर्णे नीव्यां वर्धेत व्ययस्य वा यत्परिहापयेत् । तदष्ट-गुणं अध्यक्षं दापयेत् ।। ०२.७.१९ ।।

विपर्यये तं एव प्रति स्यात् ।। ०२.७.२० ।।

यथा-कालं अनागतानां अपुस्तक-भाण्ड-नीवीकानां वा देय-दश-बन्धो दण्डः ।। ०२.७.२१ ।।

कार्मिके चौपस्थिते कारणिकस्याप्रतिबध्नतः पूर्वः साहस-दण्डः ।। ०२.७.२२ ।।

विपर्यये कार्मिकस्य द्वि-गुणः ।। ०२.७.२३ ।।

प्रचार-समं महा-मात्राः समग्राः श्रावयेयुरविषम-मन्त्राः ।। ०२.७.२४ ।।

पृथग्-भूतो मिथ्या-वादी चएषां उत्तमं दण्डं दद्यात् ।। ०२.७.२५ ।।

अकृत-अहो-रूप-हरं मासं आकाङ्क्षेत ।। ०२.७.२६ ।।

मासादूर्ध्वं मास-द्विशत-उत्तरं दण्डं दद्यात् ।। ०२.७.२७ ।।

अल्प-शेष-लेख्य-नीवीकं पञ्च-रात्रं आकाङ्क्षेत ।। ०२.७.२८ ।।

ततः परं कोश-पूर्वं अहो-रूप-हरं धर्म-व्यवहार-चरित्र-संस्थान-संकलन-निर्वर्तन-अनुमान-चार-प्रयोगैरवेक्षेत ।। ०२.७.२९ ।।

दिवस-पञ्च-रात्र-पक्ष-मास-चातुर्मास्य-संवत्सरैश्च प्रतिसमानयेत् ।। ०२.७.३० ।।

व्युष्ट-देश-काल-मुख-उत्पत्ति-अनुवृत्ति-प्रमाण-दायक-दापक-निबन्धक-प्रतिग्राहकैश्चायं समानयेत् ।। ०२.७.३१ ।।

व्युष्ट-देश-काल-मुख-लाभ-कारण-देय-योग-प्रमाण-आज्ञापक-उद्धारक-विधातृक-प्रतिग्राहकैश्च व्ययं समानयेत् ।। ०२.७.३२ ।।

व्युष्ट-देश-काल-मुख-अनुवर्तन-रूप-लक्षण-प्रमाण-निक्षेप-भाजन-गोपायकैश्च नीवीं समानयेत् ।। ०२.७.३३ ।।

राज-अर्थे कारणिकस्याप्रतिबध्नतः प्रतिषेधयतो वाआज्ञां निबन्धादाय-व्ययं अन्यथा नीवीं अवलिखतो द्वि-गुणः ।। ०२.७.३४ ।।

क्रम-अवहीनं उत्क्रमं अविज्ञातं पुनर्-उक्तं वा वस्तुकं अवलिखतो द्वादश-पणो दण्डः ।। ०२.७.३५ ।।

नीवीं अवलिखतो द्वि-गुणः ।। ०२.७.३६ ।।

भक्षयतोअष्ट-गुणः ।। ०२.७.३७ ।।

नाशयतः पञ्च-बन्धः प्रतिदानं च ।। ०२.७.३८ ।।

मिथ्या-वादे स्तेय-दण्डः ।। ०२.७.३९ ।।

पश्चात्-प्रतिज्ञाते द्वि-गुणः । प्रस्मृत-उत्पन्ने च ।। ०२.७.४० ।।

अपराधं सहेताल्पं तुष्येदल्पेअपि चौदये ।। ०२.७.४१अ ब ।।

महा-उपकारं चाध्यक्षं प्रग्रहेणाभिपूजयेत् ।। ०२.७.४१च्द् ।।

कोश-पूर्वाः सर्व-आरम्भाः ।। ०२.८.०१ ।।

तस्मात्पूर्वं कोशं अवेक्षेत ।। ०२.८.०२ ।।

प्रचार-समृद्धिश्चरित्र-अनुग्रहश्चोर-निग्रहो युक्त-प्रतिषेधः सस्य-सम्पत्पण्य-बाहुल्यं उपसर्ग-प्रमोक्षः परिहार-क्षयो हिरण्य-उपायनं इति कोश-वृद्धिः ।। ०२.८.०३ ।।

प्रतिबन्धः प्रयोगो व्यवहारोअवस्तारः परिहापणं उपभोगः परिवर्तनं अपहारश्चैति कोश-क्षयः ।। ०२.८.०४ ।।

सिद्धीनां असाधनं अनवतारणं अप्रवेशनं वा प्रतिबन्धः ।। ०२.८.०५ ।।

तत्र दश-बन्धो दण्डः ।। ०२.८.०६ ।।

कोश-द्रव्याणां वृद्धि-प्रयोगाः प्रयोगः ।। ०२.८.०७ ।।

पण्य-व्यवहारो व्यवहारः ।। ०२.८.०८ ।।

तत्र फल-द्वि-गुणो दण्डः ।। ०२.८.०९ ।।

सिद्धं कालं अप्राप्तं करोति अप्राप्तं प्राप्तं वाइत्यवस्तारः ।। ०२.८.१० ।।

तत्र पञ्च-बन्धो दण्डः ।। ०२.८.११ ।।

क्लृप्तम्(क्ल्प्तम्) आयं परिहापयति व्ययं वा विवर्धयतिइति परिहापणं ।। ०२.८.१२ ।।

तत्र हीन-चतुर्-गुणो दण्डः ।। ०२.८.१३ ।।

स्वयं अन्यैर्वा राज-द्रव्याणां उपभोजनं उपभोगः ।। ०२.८.१४ ।।

तत्र रत्न-उपभोगे घातः । सार-उपभोगे मध्यमः साहस-दण्डः । फल्गु-कुप्य-उपभोगे तच्च तावत् च दण्डः ।। ०२.८.१५ ।।

राज-द्रव्याणां अन्य-द्रव्येनऽदानं परिवर्तनं ।। ०२.८.१६ ।।

तदुपभोगेन व्याख्यातं ।। ०२.८.१७ ।।

सिद्धं आयं न प्रवेशयति । निबद्धं व्ययं न प्रयच्छति । प्राप्तां नीवीं विप्रतिजानीत इत्यपहारः ।। ०२.८.१८ ।।

तत्र द्वादश-गुणो दण्डः ।। ०२.८.१९ ।।

तेषां हरण-उपायाश्चत्वारिंशत् ।। ०२.८.२० ।।

पूर्वं सिद्धं पश्चादवतारितम् । पश्चात्सिद्धं पूर्वं अवतारितम् । साध्यं न सिद्धम् । असाध्यं सिद्धम् । सिद्धं असिद्धं कृतम् । असिद्धं सिद्धं कृतम् । अल्प-सिद्धं बहु कृतम् । बहु-सिद्धं अल्पं कृतम् । अन्यत्सिद्धं अन्यत्कृतम् । अन्यतः सिद्धं अन्यतः कृतम् । ।। ०२.८.२१अ ।।

देयं न दत्तम् । अदेयं दत्तम् । काले न दत्तम् । अकाले दत्तम् । अल्पं दत्तं बहु कृतम् । बहु दत्तं अल्पं कृतम् । अन्यद्दत्तं अन्यत्कृतम् । अन्यतो दत्तं अन्यतः कृतम् । ।। ०२.८.२१ब ।।

प्रविष्टं अप्रविष्टं कृतम् । अप्रविष्टं प्रविष्टं कृतम् । कुप्यं अदत्त-मूल्यं प्रविष्टम् । दत्त-मूल्यं न प्रविष्टं ।। ०२.८.२१क ।।

संक्षेपो विक्षेपः कृतः । विक्षेपः संक्षेपो वा । महा-अर्घं अल्प-अर्घेण परिवर्तितम् । अल्प-अर्घं महा-अर्घेण वा ।। ०२.८.२१ड ।।

समारोपितोअर्घः । प्रत्यवरोपितो वा । संवत्सरो मास-विषमः कृतः । मासो दिवस-विषमो वा । समागम-विषमः । मुख-विषमः । कार्मिक-विषमः ।। ०२.८.२१ए ।।

निर्वर्तन-विषमः । पिण्ड-विषमः । वर्ण-विषमः । अर्घ-विषमः । मान-विषमः । मापन-विषमः । भाजन-विषमः इति हरण-उपायाः ।। ०२.८.२१फ़् ।।

तत्रौपयुक्त-निधायक-निबन्धक-प्रतिग्राहक-दायक-दापक-मन्त्रि-वैयावृत्य-करानेक-एकशोअनुयुञ्जीत ।। ०२.८.२२ ।।

मिथ्या-वादे चएषां युक्त-समो दण्डः ।। ०२.८.२३ ।।

प्रचारे चावघोषयेत्"अमुना प्रकृतेनौपहताः प्रज्ञापयन्तु" इति ।। ०२.८.२४ ।।

प्रज्ञापयतो यथा-उपघातं दापयेत् ।। ०२.८.२५ ।।

अनेकेषु चाभियोगेष्वपव्ययमानः सकृदेव पर-उक्तः सर्वं भजेत ।। ०२.८.२६ ।।

वैषम्ये सर्वत्रानुयोगं दद्यात् ।। ०२.८.२७ ।।

महत्यर्थ-अपहारे चाल्पेनापि सिद्धः सर्वं भजेत ।। ०२.८.२८ ।।

कृत-प्रतिघात-अवस्थः सूचको निष्पन्न-अर्थः षष्ठं अंशं लभेत । द्वादशं अंशं भृतकः ।। ०२.८.२९ ।।

प्रभूत-अभियोगादल्प-निष्पत्तौ निष्पन्नस्यांशं लभेत ।। ०२.८.३० ।।

अनिष्पन्ने शारीरं हैरण्यं वा दण्डं लभेत । न चानुग्राह्यः ।। ०२.८.३१ ।।

निष्पत्तौ निक्षिपेद्वादं आत्मानं वाअपवाहयेत् । ।। ०२.८.३२अ ब ।।

अभियुक्त-उपजापात्तु सूचको वधं आप्नुयात् ।। ०२.८.३२च्द् ।।

अमात्य-सम्पदाउपेताः सर्व-अध्यक्षाः शक्तितः कर्मसु नियोज्याः ।। ०२.९.०१ ।।

कर्मसु चएषां नित्यं परीक्षां कारयेत् । चित्त-अनित्यत्वात् मनुष्यानां ।। ०२.९.०२ ।।

अश्व-सधर्माणो हि मनुष्या नियुक्ताः कर्मसु विकुर्वते ।। ०२.९.०३ ।।

तस्मात्कर्तारं करणं देशं कालं कार्यं प्रक्षेपं उदयं चएषु विद्यात् ।। ०२.९.०४ ।।

ते यथा-संदेशं असंहता अविगृहीताः कर्माणि कुर्युः ।। ०२.९.०५ ।।

संहता भक्षयेयुः । विगृहीता विनाशयेयुः ।। ०२.९.०६ ।।

न चानिवेद्य भर्तुः कंचिदारम्भं कुर्युः । अन्यत्रऽपत्-प्रतीकारेभ्यः ।। ०२.९.०७ ।।

प्रमाद-स्थानेषु चएषां अत्ययं स्थापयेद्दिवस-वेतन-व्यय-द्वि-गुणं ।। ०२.९.०८ ।।

यश्चएषां यथा-आदिष्टं अर्थं सविशेषं वा करोति स स्थान-मानौ लभेत ।। ०२.९.०९ ।।

"अल्प-आयतिश्चेत् महा-व्ययो भक्षयति ।। ०२.९.१० ।।

विपर्यये यथा-आयति-व्ययश्च न भक्षयति" इत्याचार्याः ।। ०२.९.११ ।।

अपसर्पेणएवौपलभ्येतैति कौटिल्यः ।। ०२.९.१२ ।।

यः समुदयं परिहापयति स राज-अर्थं भक्षयति ।। ०२.९.१३ ।।

स चेदज्ञान-आदिभिः परिहापयति तदेनं यथा-गुणं दापयेत् ।। ०२.९.१४ ।।

यः समुदयं द्वि-गुणं उद्भावयति स जन-पदं भक्षयति ।। ०२.९.१५ ।।

स चेद्राज-अर्थं उपनयत्यल्प-अपराधे वारयितव्यः । महति यथा-अपराधं दण्डयितव्यः ।। ०२.९.१६ ।।

यः समुदयं व्ययं उपनयति स पुरुष-कर्माणि भक्षयति ।। ०२.९.१७ ।।

स कर्म-दिवस-द्रव्य-मूल्य-पुरुष-वेतन-अपहारेषु यथा-अपराधं दण्डयितव्यः ।। ०२.९.१८ ।।

तस्मादस्य यो यस्मिन्नधिकरणे शासनस्थः स तस्य कर्मणो याथातथ्यं आय-व्ययौ च व्यास-समासाभ्यां आचक्षीत ।। ०२.९.१९ ।।

मूल-हर-तादात्विक-कदर्यांश्च प्रतिषेधयेत् ।। ०२.९.२० ।।

यः पितृ-पैतामहं अर्थं अन्यायेन भक्षयति स मूल-हरः ।। ०२.९.२१ ।।

यो यद्यदुत्पद्यते तत्तद्भक्षयति स तादात्विकः ।। ०२.९.२२ ।।

यो भृत्य-आत्म-पीडाभ्यां उपचिनोत्यर्थं स कदर्यः ।। ०२.९.२३ ।।

स पक्षवांश्चेदनादेयः । विपर्यये पर्यादातव्यः ।। ०२.९.२४ ।।

यो महत्यर्थ-समुदये स्थितः कदर्यः सम्निधत्तेअवनिधत्तेअवस्रावयति वा सम्निधत्ते स्व-वेश्मनि । अवनिधत्ते पौर-जानपदेषु । अवस्रावयति पर-विषये तस्य सत्त्री मन्त्रि-मित्र-भृत्य-बन्धु-पक्षं आगतिं गतिं च द्रव्याणां उपलभेत ।। ०२.९.२५ ।।

यश्चास्य पर-विषये संचारं कुर्यात्तं अनुप्रविश्य मन्त्रं विद्यात् ।। ०२.९.२६ ।।

सुविदिते शत्रु-शासन-अपदेशेनएनं घातयेत् ।। ०२.९.२७ ।।

तस्मादस्याध्यक्षाः संख्यायक-लेखक-रूप-दर्शक-नीवी-ग्राहक-उत्तर-अध्यक्ष-सखाः कर्मणि कुर्युः ।। ०२.९.२८ ।।

उत्तर-अध्यक्षा हस्ति-अश्व-रथ-आरोहाः ।। ०२.९.२९ ।।

तेषां अन्तेवासिनः शिल्प-शौच-युक्ताः संख्यायक-आदीनां अपसर्पाः ।। ०२.९.३० ।।

बहु-मुख्यं अनित्यं चाधिकरणं स्थापयेत् ।। ०२.९.३१ ।।

यथा ह्यनास्वादयितुं न शक्यम् जिह्वा-तलस्थं मधु७ वा विषं वा ।। ०२.९.३२अ ब ।।

अर्थस्तथा ह्यर्थ-चरेण राज्ञः स्वल्पोअप्यनास्वादयितुं न शक्यः ।। ०२.९.३२च्द् ।।

मत्स्या यथाअन्तः सलिले चरन्तो ज्ञातुं न शक्याः सलिलं पिबन्तः । ।। ०२.९.३३अ ब ।।

युक्तास्तथा कार्य-विधौ नियुक्ता ज्ञातुं न शक्या धनं आददानाः ।। ०२.९.३३च्द् ।।

अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणां । ।। ०२.९.३४अ ब ।।

न तु प्रच्छन्न-भावानां युक्तानां चरतां गतिः ।। ०२.९.३४च्द् ।।

आस्रावयेच्चौपचितान्विपर्यस्येच्च कर्मसु । ।। ०२.९.३५अ ब ।।

यथा न भक्षयन्त्यर्थं भक्षितं निर्वमन्ति वा ।। ०२.९.३५च्द् ।।

न भक्षयन्ति ये त्वर्थान्न्यायतो वर्धयन्ति च । ।। ०२.९.३६अ ब ।।

नित्य-अधिकाराः कार्यास्ते राज्ञः प्रिय-हिते रताः ।। ०२.९.३६च्द् ।।

शासने शासनं इत्याचक्षते ।। ०२.१०.०१ ।।

शासन-प्रधाना हि राजानः । तन्-मूलत्वात्संधि-विग्रहयोः ।। ०२.१०.०२ ।।

तस्मादमात्य-सम्पदाउपेतः सर्व-समयविदाशु-ग्रन्थश्चारु-अक्षरो लेखन-वाचन-समर्थो लेखकः स्यात् ।। ०२.१०.०३ ।।

सोअव्यग्र-मना राज्ञः संदेशं श्रुत्वा निश्चित-अर्थं लेखं विदध्यात्देश-ऐश्वर्य-वंश-नामधेय-उपचारं ईश्वरस्य । देश-नामधेय-उपचारं अनीश्वरस्य ।। ०२.१०.०४ ।।

जातिं कुलं स्थान-वयः-श्रुतानि कर्म-ऋद्धि-शीलान्यथ देश-कालौ । ।। ०२.१०.०५अ ब ।।

यौन-अनुबन्धं च समीक्ष्य कार्ये लेखं विदध्यात्पुरुष-अनुरूपं ।। ०२.१०.०५च्द् ।।

अर्थ-क्रमः सम्बन्धः परिपूर्णता माधुर्यं औदार्यं स्पष्टत्वं इति लेख-सम्पत् ।। ०२.१०.०६ ।।

तत्र यथावदनुपूर्व-क्रिया प्रधानस्यार्थस्य पूर्वं अभिनिवेश इत्यर्थ-क्रमः ।। ०२.१०.०७ ।।

प्रस्तुतस्यार्थस्यानुपरोधादुत्तरस्य विधानं आ-समाप्तेरिति सम्बन्धः ।। ०२.१०.०८ ।।

अर्थ-पद-अक्षराणां अन्यून-अतिरिक्तता हेतु-उदाहरण-दृष्टान्तैरर्थ-उपवर्णनाअश्रान्त-पदताइति परिपूर्णता ।। ०२.१०.०९ ।।

सुख-उपनीत-चारु-अर्थ-शब्द-अभिधानं माधुर्यं ।। ०२.१०.१० ।।

अग्राम्य-शब्द-अभिधानं औदार्यं ।। ०२.१०.११ ।।

प्रतीत-शब्द-प्रयोगः स्पष्टत्वं इति ।। ०२.१०.१२ ।।

अ-कार-आदयो वर्णास्त्रिषष्टिः ।। ०२.१०.१३ ।।

वर्ण-संघातः पदं ।। ०२.१०.१४ ।।

तच्चतुर्विधं नाम-आख्यात-उपसर्ग-निपाताश्चैति ।। ०२.१०.१५ ।।

तत्र नाम सत्त्व-अभिधायि ।। ०२.१०.१६ ।।

अविशिष्ट-लिङ्गं आख्यातं क्रिया-वाचि ।। ०२.१०.१७ ।।

क्रिया-विशेषकाः प्र-आदय उपसर्गाः ।। ०२.१०.१८ ।।

अव्ययाश्च-आदयो निपाताः ।। ०२.१०.१९ ।।

पद-समूहो वाक्यं अर्थ-परिसमाप्तौ ।। ०२.१०.२० ।।

एक-पद-अवरस्त्रि-पद-परः पर-पद-अर्थ-अनुपरोधेन वर्गः कार्यः ।। ०२.१०.२१ ।।

लेख-परिसंहरण-अर्थ इति-शब्दो वाचिकं अस्यैति च ।। ०२.१०.२२ ।।

निन्दा प्रशंसा पृच्छा च तथाआख्यानं अथार्थना । ।। ०२.१०.२३अ ब ।।

प्रत्याख्यानं उपालम्भः प्रतिषेधोअथ चोदना ।। ०२.१०.२३च्द् ।।

सान्त्वं अभ्युपपत्तिश्च भर्त्सन-अनुनयौ तथा । ।। ०२.१०.२४अ ब ।।

एतेष्वर्थाः प्रवर्तन्ते त्रयोदशसु लेखजाः ।। ०२.१०.२४च्द् ।।

तत्राभिजन-शरीर-कर्मणां दोष-वचनं निन्दा ।। ०२.१०.२५ ।।

गुण-वचनं एतेषां एव प्रशंसा ।। ०२.१०.२६ ।।

"कथं एतद्" इति पृच्छा ।। ०२.१०.२७ ।।

"एवम्" इत्याख्यानं ।। ०२.१०.२८ ।।

"देहि" इत्यर्थना ।। ०२.१०.२९ ।।

"न प्रयच्छामि" इति प्रत्याख्यानं ।। ०२.१०.३० ।।

"अननुरूपं भवतः" इत्युपालम्भः ।। ०२.१०.३१ ।।

"मा कार्षीः" इति प्रतिषेधः ।। ०२.१०.३२ ।।

"इदं क्रियताम्" इति चोदना ।। ०२.१०.३३ ।।

"योअहं स भवान् । यन्मम द्रव्यं तद्भवतः" इत्युपग्रहः सान्त्वं ।। ०२.१०.३४ ।।

व्यसन-साहाय्यं अभ्युपपत्तिः ।। ०२.१०.३५ ।।

सदोषं आयति-प्रदर्शनं अभिभर्त्सनं ।। ०२.१०.३६ ।।

अनुनयस्त्रिविधोअर्थ-कृतावतिक्रमे पुरुष-आदि-व्यसने चैति ।। ०२.१०.३७ ।।

प्रज्ञापन-आज्ञा-परिदान-लेखास्तथा परीहार-निसृष्टि-लेखौ । ।। ०२.१०.३८अ ब ।।

प्रावृत्तिकश्च प्रतिलेख एव सर्वत्रगश्चैति हि शासनानि ।। ०२.१०.३८च्द् ।।

अनेन विज्ञापितं एवं आह तद्दीयतां चेद्यदि तत्त्वं अस्ति । ।। ०२.१०.३९अ ब ।।

राज्ञः समीपे वर-कारं आह प्रज्ञापनाएषा विविधाउपदिष्टा ।। ०२.१०.३९च्द् ।।

भर्तुराज्ञा भवेद्यत्र निग्रह-अनुग्रहौ प्रति । ।। ०२.१०.४०अ ब ।।

विशेषेण तु भृत्येषु तद्-आज्ञा-लेख-लक्षणं ।। ०२.१०.४०च्द् ।।

यथा-अर्ह-गुण-सम्युक्ता पूजा यत्रौपलक्ष्यते । ।। ०२.१०.४१अ ब ।।

अप्याधौ परिदाने वा भवतस्तावुपग्रहौ ।। ०२.१०.४१च्द् ।।

जातेर्विशेषेषु परेषु चैव ग्रामेषु देशेषु च तेषु तेषु । ।। ०२.१०.४२अ ब ।।

अनुग्रहो यो नृप्तेर्निदेशात्तज्-ज्ञः परीहार इति व्यवस्येत् ।। ०२ ।१०-४२च्द् ।।

निसृष्टिस्थाआपना कार्य-करणे वचने तथा । ।। ०२.१०.४३अ ब ।।

एष वाचिक-लेखः स्याद्भवेन्नैसृष्टिकोअपि वा ।। ०२.१०.४३च्द् ।।

विविधां दैव-सम्युक्तां तत्त्वजां चैव मानुषीं । ।। ०२.१०.४४अ ब ।।

द्वि-विधां तां व्यवस्यन्ति प्रवृत्तिं शासनं प्रति ।। ०२.१०.४४च्द् ।।

दृष्ट्वा लेखं यथा-तत्त्वं ततः प्रत्यनुभाष्य च । ।। ०२.१०.४५अ ब ।।

प्रतिलेखो भवेत्कार्यो यथा राज-वचस्तथा ।। ०२.१०.४५च्द् ।।

यत्रईश्वरांश्चाधिकृतांश्च राजा रक्षा-उपकारौ पथिक-अर्थं आह । ।। ०२.१०.४६अ ब ।।

सर्वत्रगो नाम भवेत्स मार्गे देशे च सर्वत्र च वेदितव्यः ।। ०२.१०.४६च्द् ।।

उपायाः साम-उपप्रदान-भेद-दण्डाः ।। ०२.१०.४७ ।।

तत्र साम पञ्चविधं गुण-संकीर्तनम् । सम्बन्ध-उपाख्यानम् । परस्पर-उपकार-संदर्शनम् । आयति-प्रदर्शनम् । आत्म-उपनिधानं इति ।। ०२.१०.४८ ।।

तत्राभिजन-शरीर-कर्म-प्रकृति-श्रुत-द्रव्य-आदीनां गुण-ग्रहणं प्रशंसा स्तुतिर्गुण-संकीर्तनं ।। ०२.१०.४९ ।।

ज्ञाति-यौन-मौख-स्रौव-कुल-हृदय-मित्र-संकीर्तनं सम्बन्ध-उपाख्यानं ।। ०२.१०.५० ।।

स्व-पक्ष-पर-पक्षयोरन्योन्य-उपकार-संकीर्तनं परस्पर-उपकार-संदर्शनं ।। ०२.१०.५१ ।।

"अस्मिन्नेवं कृत इदं आवयोर्भवति" इत्याशा-जननं आयति-प्रदर्शनं ।। ०२.१०.५२ ।।

"योअहं स भवान् । यन्मम द्रव्यं तद्भवता स्व-कृत्येषु प्रयोज्यताम्" इत्यात्म-उपनिधानं इति ।। ०२.१०.५३ ।।

उपप्रदानं अर्थ-उपकारः ।। ०२.१०.५४ ।।

शङ्का-जननं निर्भर्त्सनं च भेदः ।। ०२.१०.५५ ।।

वधः परिक्लेशोअर्थ-हरणं दण्डः इति ।। ०२.१०.५६ ।।

अकान्तिर्व्याघातः पुनर्-उक्तं अपशब्दः सम्प्लव इति लेख-दोषः ।। ०२.१०.५७ ।।

तत्र काल-पत्त्रकं अचारु-विषं अविराग-अक्षरत्वं अकान्तिः ।। ०२.१०.५८ ।।

पूर्वेण पश्चिमस्यानुपपत्तिर्व्याघातः ।। ०२.१०.५९ ।।

उक्तस्याविशेषेण द्वितीयं उच्चारणं पुनर्-उक्तं ।। ०२.१०.६० ।।

लिङ्ग-वचन-काल-कारकाणां अन्यथा-प्रयोगोअपशब्दः ।। ०२.१०.६१ ।।

अवर्गे वर्ग-करणं चावर्ग-क्रिया गुण-विपर्यासः सम्प्लवः इति ।। ०२.१०.६२ ।।

सर्व-शास्त्राण्यनुक्रम्य प्रयोगं उपलभ्य च । ।। ०२.१०.६३अ ब ।।

कौटिल्येन नर-इन्द्र-अर्थे शासनस्य विधिः कृतः ।। ०२.१०.६३च्द् ।।

कोश-अध्यक्षः कोश-प्रवेश्यं रत्नं सारं फल्गुं कुप्यं वा तज्-जात-करण-अधिष्ठितः प्रतिगृह्णीयात् || ०२.११.०१ ||

ताम्र-पर्णिकं पाण्ड्यक-वाटकं पाशिक्यं कौलेयं चौर्णेयं माहेन्द्रं कार्दमिकं स्रौतसीयं ह्रादीयं हैमवतं च मौक्तिकं || ०२.११.०२ ||

शुक्तिः शङ्खः प्रकीर्णकं च योनयः || ०२.११.०३ ||

मसूरकं त्रि-पुटकं कूर्मकं अर्ध-चन्द्रकं कञ्चुकितं यमकं कर्तकं खरकं सिक्तकं कामण्डलुकं श्यावं नीलं दुर्विद्धं चाप्रशस्तं || ०२.११.०४ ||

स्थूलं वृत्तं निस्तलं भ्राजिष्णु श्वेतं गुरु स्निग्धं देश-विद्धं च प्रशस्तं || ०२.११.०५ ||

शीर्षकं उपशीर्षकं प्रकाण्डकं अवघाटकं तरल-प्रतिबद्धं चैति यष्टि-प्रभेदाः || ०२.११.०६ ||

यष्टीनां अष्ट-सहस्रं इन्द्रच्-छन्दः || ०२.११.०७ ||

ततोअर्धं विजयच्-छन्दः || ०२.११.०८ ||

चतुष्षष्टिरर्ध-हारः || ०२.११.०९ ||

चतुष्-पञ्चाशद्रश्मि-कलापः || ०२.११.१० ||

द्वात्रिंशद्गुच्छः || ०२.११.११ ||

सप्त-विंशतिर्नक्षत्र-माला || ०२.११.१२ ||

चतुर्विंशतिरर्ध-गुच्छः || ०२.११.१३ ||

विंशतिर्माणवकः || ०२.११.१४ ||

ततोअर्धं अर्ध-माणवकः || ०२.११.१५ ||

एत एव मणि-मध्यास्तन्-माणवका भवन्ति || ०२.११.१६ ||

एक-शीर्षकः शुद्धो हारः || ०२.११.१७ ||

तद्वत्-शेषाः || ०२.११.१८ ||

मणि-मध्योअर्ध-माणवकः || ०२.११.१९ ||

त्रि-फलकः फलक-हारः | पञ्च-फलको वा || ०२.११.२० ||

सूत्रं एकावली शुद्धा || ०२.११.२१ ||

साएव मणि-मध्या यष्टिः || ०२.११.२२ ||

हेम-मणि-चित्रा रत्नावली || ०२.११.२३ ||

हेम-मणि-मुक्ता-अन्तरोअपवर्तकः || ०२.११.२४ ||

सुवर्ण-सूत्र-अन्तरं सोपानकं || ०२.११.२५ ||

मणि-मध्यं वा मणि-सोपानकं || ०२.११.२६ ||

तेन शिरो-हस्त-पाद-कटी-कलाप-जालक-विकल्पा व्याख्याताः || ०२.११.२७ ||

मणिः कौटो-मालेयकः पार-समुद्रकश्च || ०२.११.२८ ||

सौगन्धिकः पद्म-रागोअनवद्य-रागः पारिजात-पुष्पको बाल-सूर्यकः || ०२.११.२९ ||

वैडूर्यं उत्पल-वर्णः शिरीष-पुष्पक उदक-वर्णो वंश-रागः शुक-पत्त्र-वर्णः पुष्य-रागो गो-मूत्रको गो-मेदकः || ०२.११.३० ||

इन्द्र-नीलो नील-अवलीयः कलाय-पुष्पको महा-नीलो जम्ब्व्-आभो जीमूत-प्रभो नन्दकः स्रवन्-मध्यः || ०२.११.३१ ||

शुद्ध-स्फटिको मूलाट-वर्णः शीत-वृष्टिः सूर्य-कान्तश्च इति मणयः || ०२.११.३२ ||

षड्-अश्रश्चतुर्-अश्रो वृत्तो वा तीव्र-रागः संस्थानवानछः स्निग्धो गुरुरर्चिष्मानन्तर्-गत-प्रभः प्रभा-अनुलेपी चैति मणि-गुणाः || ०२.११.३३ ||

मन्द-राग-प्रभः सशर्करः पुष्पच्-छिद्रः खण्डो दुर्विद्धो लेख-आकीर्ण इति दोषाः || ०२.११.३४ ||

विमलकः सस्यकोअञ्जन-मूलकः पित्तकः सुलभको लोहित-अक्षो मृग-अश्मको ज्योती-रसको मालेयकोअहिच्-छत्रकः कूर्पः प्रतिकूर्पः सुगन्धि-कूर्पः क्षीरवकः श्शुक्ति-चूर्णकः शिला-प्रवालकः पुलकः शुक्ल-पुलक इत्यन्तर-जातयः || ०२.११.३५ ||

शेषाः काच-मणयः || ०२.११.३६ ||

सभा-राष्ट्रकं तज्जमा-राष्ट्रकं कास्तीर-राष्ट्रकं श्री-कटनकं मणिमन्तकं इन्द्र-वानकं च वज्रं || ०२.११.३७ ||

खनिः स्रोतः प्रकीर्णकं च योनयः || ०२.११.३८ ||

मार्जार-अक्षकं शिरीष-पुष्पकं गो-मूत्रकं गो-मेदकं शुद्ध-स्फटिकं मूलाटी-वर्णं मणि-वर्णानां अन्यतम-वर्णं इति वज्र-वर्णाः || ०२.११.३९ ||

स्थूलं गुरु प्रहार-सहं समकोटिकं भाजन-लेखि तर्कु-भ्रामि भ्राजिष्णु च प्रशस्तं || ०२.११.४० ||

नष्ट-कोणं निराश्रि पार्श्व-अपवृत्तं चाप्रशस्तं || ०२.११.४१ ||

प्रवालकं आल-कन्दकं वैवर्णिकं च | रक्तं पद्म-रागं च करट-गर्भिणिका-वर्जं इति || ०२.११.४२ ||

चन्दनं सातनं रक्तं भूमि-गन्धि || ०२.११.४३ ||

गो-शीर्षकं काल-ताम्रं मत्स्य-गन्धि || ०२.११.४४ ||

हरि-चन्दनं शुक-पत्त्र-वर्णं आम्र-गन्धि | तार्णसं च || ०२.११.४५ ||

ग्रामेरुकं रक्तं रक्त-कालं वा बस्त-मूत्र-गन्धि || ०२.११.४६ ||

दैवसभेयं रक्तं पद्म-गन्धि | जापकं च || ०२.११.४७ ||

जोङ्गकं रक्तं रक्त-कालं वा स्निग्धम् | तौरूपं च || ०२.११.४८ ||

मालेयकं पाण्डु-रक्तं || ०२.११.४९ ||

कुचन्दनं रूक्षं अगुरु-कालं रक्तं रक्त-कालं वा || ०२.११.५० ||

काल-पर्वतकं रक्त-कालं अनवद्य-वर्णं वा ।। ०२.११.५१ ।।

कोश-अगार-पर्वतकं कालं काल-चित्रं वा ।। ०२.११.५२ ।।

शीत-उदकीयं पद्म-आभं काल-स्निग्धं वा ।। ०२.११.५३ ।।

नाग-पर्वतकं रूक्षं शैवल-वर्णं वा ।। ०२.११.५४ ।।

शाकलं कपिलं इति ।। ०२.११.५५ ।।

लघु स्निग्धं अश्यानं सर्पिः-स्नेह-लेपि गन्ध-सुखं त्वग्-अनुसार्यनुल्बणं अविराग्युष्ण-सहं दाह-ग्राहि सुख-स्पर्शनं इति चन्दन-गुणाः ।। ०२.११.५६ ।।

अगुरु जोङ्गकं कालं काल-चित्रं मण्डल-चित्रं वा ।। ०२.११.५७ ।।

श्यामं दोङ्गकं इति ।। ०२.११.५८ ।।

पार-समुद्रकं चित्र-रूपं उशीर-गन्धि नव-मालिका-गन्धि वा ।। ०२.११.५९ ।।

गुरु स्निग्धं पेशल-गन्धि निर्हार्यग्नि-सहं असम्प्लुत-धूमं विमर्द-सहं इत्यगुरु-गुणाः ।। ०२.११.६० ।।

तैल-पर्णिकं अशोक-ग्रामिकं मांस-वर्णं पद्म-गन्धि ।। ०२.११.६१ ।।

जोङ्गकं रक्त-पीतकं उत्पल-गन्धि गो-मूत्र-गन्धि वा ।। ०२.११.६२ ।।

ग्रामेरुकं स्निग्धं गो-मूत्र-गन्धि ।। ०२.११.६३ ।।

सौवर्ण-कुड्यकं रक्त-पीतं मातुलुङ्ग-गन्धि ।। ०२.११.६४ ।।

पूर्णक-द्वीपकं पद्म-गन्धि नव-नीत-गन्धि वा ।। ०२.११.६५ ।।

भद्र-श्रियं पारलौहित्यकं जाती-वर्णं ।। ०२.११.६६ ।।

आन्तरवत्यं उशीर-वर्णं ।। ०२.११.६७ ।।

उभयं कुष्ठ-गन्धि च इति ।। ०२.११.६८ ।।

कालेयकः स्वर्ण-भूमिजः स्निग्ध-पीतकः ।। ०२.११.६९ ।।

औत्तर-पर्वतको रक्त-पीतकः इति साराः । ।। ०२.११.७० ।।

पिण्ड-क्वाथ-धूम-सहं अविरागि योग-अनुविधायि च ।। ०२.११.७१ ।।

चन्दन-अगुरुवच्च तेषां गुणाः ।। ०२.११.७२ ।।

कान्तनावकं प्रैयकं चौत्तर-पर्वतकं चर्म ।। ०२.११.७३ ।।

कान्तनावकं मयूर-ग्रीव-आभं ।। ०२.११.७४ ।।

प्रैयकं नील-पीत-श्वेत-लेखा-बिन्दु-चित्रं ।। ०२.११.७५ ।।

तद्-उभयं अष्ट-अङ्गुल-आयामं ।। ०२.११.७६ ।।

बिसी महा-बिसी च द्वादश-ग्रामीये ।। ०२.११.७७ ।।

अव्यक्त-रूपा दुहिलितिका चित्रा वा बिसी ।। ०२.११.७८ ।।

परुषा श्वेत-प्राया महाबिसी ।। ०२.११.७९ ।।

द्वादश-अङ्गुल-आयामं उभयं ।। ०२.११.८० ।।

श्यामिका कालिका कदली चन्द्र-उत्तरा शाकुला चऽरोहजाः ।। ०२.११.८१ ।।

कपिला बिन्दु-चित्रा वा श्यामिका ।। ०२.११.८२ ।।

कालिका कपिला कपोत-वर्णा वा ।। ०२.११.८३ ।।

तदुभयं अष्ट-अङ्गुल-आयामं ।। ०२.११.८४ ।।

परुषा कदली हस्त-आयता ।। ०२.११.८५ ।।

साएव चन्द्र-चित्रा चन्द्र-उत्तरा ।। ०२.११.८६ ।।

कदली-त्रि-भागा शाकुला कोठ-मण्डल-चित्रा कृत-कर्णिकाअजिन-चित्रा वा इति ।। ०२.११.८७ ।।

सामूरं चीनसी सामूली च बाह्लवेयाः ।। ०२.११.८८ ।।

षट्-त्रिंशद्-अङ्गुलं अञ्जन-वर्णं सामूरं ।। ०२.११.८९ ।।

चीनसी रक्त-काली पाण्डु-काली वा ।। ०२.११.९० ।।

सामूली गो-धूम-वर्णा इति ।। ०२.११.९१ ।।

सांतिना नल-तूला वृत्त-पृच्छा चौद्राः ।। ०२.११.९२ ।।

सातिना कृष्णा ।। ०२.११.९३ ।।

नल-तूला नल-तूल-वर्णा ।। ०२.११.९४ ।।

कपिला वृत्त-पुच्छा च इति चर्म-जातयः । ।। ०२.११.९५ ।।

चर्मणां मृदु स्निग्धं बहुल-रोम च श्रेष्ठं ।। ०२.११.९६ ।।

शुद्धं शुद्ध-रक्तं पक्ष-रक्तं चऽविकम् । खचितं वान-चित्रं खण्ड-संघात्यं तन्तु-विच्छिन्नं च ।। ०२.११.९७ ।।

कम्बलः कौचपकः कुलमितिका सौमितिका तुरग-आस्तरणं वर्णकं तलिच्छकं वार-वाणः परिस्तोमः समन्त-भद्रकं चऽविकं ।। ०२.११.९८ ।।

पिच्छिलं आर्द्रं इव च सूक्ष्मं मृदु च श्रेष्ठं ।। ०२.११.९९ ।।

अष्ट-प्रोति-संघात्या कृष्णा भिङ्गिसी वर्ष-वारणं अपसारक इति नैपालकं ।। ०२.११.१०० ।।

सम्पुटिका चतुर्-अश्रिका लम्बरा कटवानकं प्रावरकः सत्तलिकाइति मृग-रोम ।। ०२.११.१०१ ।।

वाङ्गकं श्वेतं स्निग्धं दुकूलं ।। ०२.११.१०२ ।।

पौण्ड्रकं श्यामं मणि-स्निग्धं ।। ०२.११.१०३ ।।

सौवर्ण-कुड्यकं सूर्य-वर्णं मणि-स्निग्ध-उदक-वानं चतुर्-अश्र-वानं व्यामिश्र-वानं च ।। ०२.११.१०४ ।।

एतेषां एक-अंशुकं अध्यर्ध-द्वि-त्रि-चतुर्-अंशुकं इति ।। ०२.११.१०५ ।।

तेन काशिकं पौण्ड्रकं च क्षौमं व्याख्यातं ।। ०२.११.१०६ ।।

मागधिका पौण्ड्रिका सौवर्ण-कुड्यका च पत्त्र-ऊर्णा ।। ०२.११.१०७ ।।

नाग-वृक्षो लिकुचो बकुलो वटश्च योनयः ।। ०२.११.१०८ ।।

पीतिका नाग-वृक्षिका ।। ०२.११.१०९ ।।

गो-धूम-वर्णा लैकुची ।। ०२.११.११० ।।

श्वेता बाकुली ।। ०२.११.१११ ।।

शेषा नव-नीत-वर्णा ।। ०२.११.११२ ।।

तासां सौवर्ण-कुड्यका श्रेष्ठा ।। ०२.११.११३ ।।

तया कौशेयं चीन-पट्टाश्च चीन-भूमिजा व्याख्याताः ।। ०२.११.११४ ।।

माधुरं आपरान्तकं कालिङ्गं काशिकं वाङ्गकं वात्सकं माहिषकं च कार्पासिकं श्रेष्ठं इति ।। ०२.११.११५ ।।

अतः परेषां रत्नानां प्रमाणं मूल्य-लक्षणं । ।। ०२.११.११६ ।।

जातिं रूपं च जानीयान्निधानं नव-कर्म च ।। ०२.११.११७ ।।

पुराण-प्रतिसंस्कारं कर्म गुह्यं उपस्करान् । ।। ०२.११.११८ ।।

देश-काल-परीभोगं हिंस्राणां च प्रतिक्रियां ।। ०२.११.११९ ।।

आकर-अध्यक्षः शुल्ब-धातु-शास्त्र-रस-पाक-मणि-रागज्ञस्तज्ज्ञ-सखो वा तज्-जात-कर्म-कर-उपकरण-सम्पन्नः किट्ट-मूष-अङ्गार-भस्म-लिङ्गं वाआकरं भूत-पूर्वं अभुत-पूर्वं वा भूमि-प्रस्तर-रस-धातुं अत्यर्थ-वर्ण-गौरवं उग्र-गन्ध-रसं परीक्षेत ।। ०२.१२.०१ ।।

पर्वतानां अभिज्ञात-उद्देशानां बिल-गुह-उपत्यक-आलयन-गूढ-खातेष्वन्तः प्रस्यन्दिनो जम्बू-चूत-ताल-फल-पक्व-हरिद्रा-भेद-गुड(गूड?)-हरि-ताल-मनः-शिला-क्षौद्र-हिङ्गुलुक-पुण्डरीक-शुक-मयूर-पत्त्र-वर्णाः सवर्ण-उदक-ओषधि-पर्यन्ताश्चिक्कणा विशदा भारिकाश्च रसाः काञ्चनिकाः ।। ०२.१२.०२ ।।

अप्सु निष्ठ्यूतास्तैलवद्-विसर्पिणः षङ्क-मल-ग्राहिणश्च ताम्र-रूप्ययोः शतादुपरि वेद्धारः ।। ०२.१२.०३ ।।

तत्-प्रतिरूपकं उग्र-गन्ध-रसं शिला-जतु विद्यात् ।। ०२.१२.०४ ।।

पीतकास्-ताम्रकास्ताम्र-पीतका वा भूमि-प्रस्तर-धातवो भिन्ना नील-राजीवन्तो मुद्ग-माष-कृसर-वर्णा वा दधि-बिन्दु-पिण्ड-चित्रा हरिद्रा-हरीतकी-पद्म-पत्त्र-शैवल-यकृत्-प्लीह-अनवद्य-वर्णा भिन्नाश्चुञ्चु-वालुक-आलेखा-बिन्दु-स्वस्तिकवन्तः सुगुलिका अर्चिष्मन्तस्ताप्यमाना न भिद्यन्ते बहु-फेन-धूमाश्च सुवर्ण-धातवः प्रतीवाप-अर्थास् ताम्र-रूप्य-वेधनाः ।। ०२.१२.०५ ।।

शङ्ख-कर्पूर-स्फटिक-नव-नीत-कपोत-पारावत-विमलक-मयूर-ग्रीवा-वर्णाः सस्यक-गोमेदक-गुड-मत्स्यण्डिका-वर्णाः कोविदार-पद्म-पाटलीक-लाय-क्षौम-अतसी-पुष्प-वर्णाः ससीसाः स-अञ्जना विस्रा भिन्नाः श्वेत-आभाः कृष्णाः कृष्ण-आभाः श्वेताः सर्वे वा लेखा-बिन्दु-चित्रा मृदवो ध्मायमाना न स्फुटन्ति बहु-फेन-धूमाश्च रूप्य-धातवः ।। ०२.१२.०६ ।।

सर्व-धातूनां गौरव-वृद्धौ सत्त्व-वृद्धिः ।। ०२.१२.०७ ।।

तेषां अशुद्धा मूढ-गर्भा वा तीक्ष्ण-मूत्र-क्षर-भाविता राज-वृक्ष-वट-पीलु-गो-पित्त-रोचना-महिष-खर-करभ-मूत्र-लेण्ड-पिण्ड-बद्धास्तत्-प्रतीवापास्तद्-अवलेपा वा विशुद्धाः स्रवन्ति ।। ०२.१२.०८ ।।

यव-माष-तिल-पलाश-पीलु-क्षारैर्-गो-क्षीर-अज-क्षीरैर्वा कदली-वज्र-कन्द-प्रतीवपो मार्दव-करः ।। ०२.१२.०९ ।।

मधु-मधुकं अजा-पयः सतैलं घृत-गुड-किण्व-युतं सकन्दलीकं । ।। ०२.१२.१०अ ब ।।

यदपि शत-सहस्रधा विभिन्नं भवति मृदु त्रिभिरेव तन्-निषेकैः ।। ०२.१२.१०च्द् ।।

गो-दन्त-शृङ्ग-प्रतीवापो मृदु-स्तम्भनः ।। ०२.१२.११ ।।

भारिकः स्निग्धो मृदुश्च प्रस्तर-धातुर्भूमि-भागो वा पिङ्गलो हरितः पाटलो लोहितो वा ताम्र-धातुः ।। ०२.१२.१२ ।।

काक-मोचकः कपोत-रोचना-वर्णः श्वेत-राजि-नद्धो वा विस्रः सीस-धातुः ।। ०२.१२.१३ ।।

ऊषर-कर्बुरः पक्व-लोष्ठ-वर्णो वा त्रपु-धातुः ।। ०२.१२.१४ ।।

खरुम्बः पाण्डु-रोहितः सिन्दु-वार-पुष्प-वर्णो वा तीक्ष्ण-धातुः ।। ०२.१२.१५ ।।

काक-अण्ड-भुज-पत्त्र-वर्णो वा वैकृन्तक-धातुः ।। ०२.१२.१६ ।।

अच्छः स्निग्धः सप्रभो घोषवान्शीतस्तीव्रस्तनु-रागश्च मणि-धातुः ।। ०२.१२.१७ ।।

धातु-समुत्थं तज्-जात-कर्म-अन्तेषु प्रयोजयेत् ।। ०२.१२.१८ ।।

कृत-भाण्ड-व्यवहारं एक-मुखम् । अत्ययं चान्यत्र कर्तृ-क्रेतृ-विक्रेतॄणां स्थापयेत् ।। ०२.१२.१९ ।।

आकरिकं अपहरन्तं अष्ट-गुणं दापयेदन्यत्र रत्नेभ्यः ।। ०२.१२.२० ।।

स्तेनं अनिसृष्ट-उपजीविनं च बद्धं कर्म कारयेत् । दण्ड-उपकारिणं च ।। ०२.१२.२१ ।।

व्यय-क्रिया-भारिकं आअकरं भागेन प्रक्रयेण वा दद्यात् । लाघविकं आत्मना कारयेत् ।। ०२.१२.२२ ।।

लोह-अध्यक्षस्ताम्र-सीस-त्रपु-वैकृन्त-कार-कूट-वृत्त-कंस-ताल-लोह-कर्म-अन्तान्कारयेत् । लोह-भाण्ड-व्यवहारं च ।। ०२.१२.२३ ।।

लक्षण-अध्यक्षश्चतुर्-भाग-ताम्रं रूप्य-रूपं तीक्ष्ण-त्रपु-सीस-अञ्जनानां अन्यतम-माष-बीज-युक्तं कारयेत् पणं अर्ध-पणं पादम् । अष्ट-भागं इति । पाद-आजीवं ताम्र-रूपं माषकं अर्ध-माषकं काकणीम् अर्ध-काकणीं इति ।। ०२.१२.२४ ।।

रूप-दर्शकः पण-यात्रां व्यावहारिकीं कोश-प्रवेश्यां च स्थापयेत् ।। ०२.१२.२५ ।।

रूपिकं अष्टकं शतम् । पञ्चकं शतं व्याजीम् । पारीक्षिकं अष्ट-भागिकम् । शतम् । पञ्च-विंशति-पणं अत्ययं च अन्यत्र-कर्तृ-क्रेतृ-विक्रेतृ-परीक्षितृभ्यः ।। ०२.१२.२६ ।।

खन्य्-अध्यक्षः शङ्ख-वज्र-मणि-मुक्ता-प्रवाल-क्षार-कर्म-अन्तान्कारयेत् । पणन-व्यवहारं च ।। ०२.१२.२७ ।।

लवण-अध्यक्षः पाक-मुक्तं लवण-भागं प्रक्रयं च यथा-कालं संगृहणीयाद् । विक्रयाच्च मूल्यं रूपं व्याजीं च ।। ०२.१२.२८ ।।

आगन्तु-लवणं षड्-भागं दद्यात् ।। ०२.१२.२९ ।।

दत्त-भाग-विभागस्य विक्रयः । पञ्चकं शतं व्याजीं रूपं रूपिकं च ।। ०२.१२.३० ।।

क्रेता शुल्कं राज-पण्यच्-छेद-अनुरूपं च वैधरणं दद्यात् । अन्यत्र क्रेता षट्-छतं अत्ययं च ।। ०२.१२.३१ ।।

विलवणं उत्तमं दण्डं दद्याद् । अनिषृष्ट-उपजीवी चान्यत्र वानप्रस्थेभ्यः ।। ०२.१२.३२ ।।

श्रोत्रियास्तपस्विनो विष्टयश्च भक्त-लवणं हरेयुः ।। ०२.१२.३३ ।।

अतोअन्यो लवण-क्षार-वर्गः शुल्कं दद्यात् ।। ०२.१२.३४ ।।

एवं मूल्यं च भागं च व्याजीं परिघं अत्ययं । ।। ०२.१२.३५अ ब ।।

शुल्कं वैधरणं दण्डं रूपं रूपिकं एव च ।। ०२.१२.३५च्द् ।।

खनिभ्यो द्वादश-विधं धातुं पण्यं च संहरेत् । ।। ०२.१२.३६अ ब ।।

एवं सर्वेषु पण्येषु स्थापयेन्मुख-संग्रहं ।। ०२.१२.३६च्द् ।।

आकर-प्रभः कोशः कोशाद्दण्डः प्रजायते । ।। ०२.१२.३७अ ब ।।

पृथिवी कोश-दण्डाभ्यां प्राप्यते कोश-भूषणा ।। ०२.१२.३७च्द् ।।

सुवर्ण-अध्यक्षः सुवर्ण-रजत-कर्म-अन्तानां असम्बन्ध-आवेशन-चतुः-शालां एक-द्वारां अक्ष-शालां कारयेत् ।। ०२.१३.०१ ।।

विशिखा-मध्ये सौवर्णिकं शिल्पवन्तं अभिजातं प्रात्ययिकं च स्थापयेत् ।। ०२.१३.०२ ।।

जाम्बूनदं शातकुम्भं हाटकं वैणवं शृङ्ग-शुक्तिजं जात-रूपं रस-विद्धं आकर-उद्गतं च सुवर्णं ।। ०२.१३.०३ ।।

किञ्जल्क-वर्णं मृदु स्निग्धं अनादि भ्राजिष्णु च श्रेष्ठम् । रक्त-पीतकं मध्यमम् । रक्तं अवरं ।। ०२.१३.०४ ।।

श्रेष्ठानां पाण्डु श्वेतं चाप्राप्तकं ।। ०२.१३.०५ ।।

तद्येनाप्राप्तकं तच्चतुर्-गुणेन सीसेन शोधयेत् ।। ०२.१३.०६ ।।

सीस-अन्वयेन भिद्यमानं शुष्क-पटलैर्ध्मापयेत् ।। ०२.१३.०७ ।।

रूक्षत्वाद्भिद्यमानं तैल-गोमये निषेचयेत् ।। ०२.१३.०८ ।।

आकर-उद्गतं सीस-अन्वयेन भिद्यमानं पाक-पत्त्राणि कृत्वा गण्डिकासु कुट्टयेत् । कदली-वज्र-कन्द-कल्के वा निषेचयेत् ।। ०२.१३.०९ ।।

तुत्थ-उद्गतं गौडिकं काम्बुकं चाक्रवालिकं च रूप्यं ।। ०२.१३.१० ।।

श्वेतं स्निग्धं मृदु च श्रेष्ठं ।। ०२.१३.११ ।।

विपर्यये स्फोटनं च दुष्टं ।। ०२.१३.१२ ।।

तत्-सीस-चतुर्-भागेन शोधयेत् ।। ०२.१३.१३ ।।

उद्गत-चूलिकं अच्छं भ्राजिष्णु दधि-वर्णं च शुद्धं ।। ०२.१३.१४ ।।

शुद्धस्यएको हारिद्रस्य सुवर्णो वर्णकः ।। ०२.१३.१५ ।।

ततः शुल्ब-काकण्य्-उत्तर-अपसारिता आ-चतुः-सीम-अन्तादिति षोडश वर्णकाः ।। ०२.१३.१६ ।।

सुवर्णं पूर्वं निकष्य पश्चाद्वर्णिकां निकषयेत् ।। ०२.१३.१७ ।।

सम-राग-लेखं अनिम्न-उन्नते देशे निकषितम् । परिमृदितं परिलीढं नख-अन्तराद्वा गैरिकेण-अवचूर्णितं उपधिं विद्यात् ।। ०२.१३.१८ ।।

जाति-हिङ्गुलुकेन पुष्पका-सीसेन वा गो-मूत्र-भावितेन दिग्धेनाग्र-हस्तेन संस्पृष्टं सुवर्णं श्वेती-भवति ।। ०२.१३.१९ ।।

सकेसरः स्निग्धो मृदुर्भाजिष्णुश्च निकष-रागः श्रेष्ठः ।। ०२.१३.२० ।।

कालिङ्गकस्तापी-पाषाणो वा मुद्ग-वर्णो निकषः श्रेष्ठः ।। ०२.१३.२१ ।।

सम-रागी विक्रय-क्रय-हितः ।। ०२.१३.२२ ।।

हस्तिच्-छविकः सहरितः प्रति-रागी विक्रय-हितः ।। ०२.१३.२३ ।।

स्थिरः परुषो विषम-वर्णश्चाप्रतिरागी क्रय-हितः ।। ०२.१३.२४ ।।

छेदश्चिक्कणः सम-वर्णः श्लक्ष्णो मृदुर्भाजिष्णुश्च श्रेष्ठः ।। ०२.१३.२५ ।।

तापो बहिर्-अन्तश्च समः किञ्जल्क-वर्णः कुरण्डक-पुष्प-वर्णो वा श्रेष्ठः ।। ०२.१३.२६ ।।

श्यावो नीलश्चाप्राप्तकः ।। ०२.१३.२७ ।।

तुला-प्रतिमानं पौतव-अध्यक्षे वक्ष्यामः ।। ०२.१३.२८ ।।

तेनौपदेशेन रूप्य-सुवर्णं दद्यादाददीत च ।। ०२.१३.२९ ।।

अक्ष-शालां अनायुक्तो नौपगच्छेत् ।। ०२.१३.३० ।।

अभिगच्छन्नुच्छेद्यः ।। ०२.१३.३१ ।।

आयुक्तो वा सरूप्य-सुवर्णस्तेनएव जीयेत ।। ०२.१३.३२ ।।

विचित-वस्त्र-हस्त-गुह्याः काञ्चन-पृषत-त्वष्टृ-तपनीय-कारवो ध्मायक-चरक-पांसु-धावकाः प्रविशेयुर्निष्कसेयुश्च ।। ०२.१३.३३ ।।

सर्वं चएषां उपकरणं अनिष्ठिताश्च प्रयोगास्तत्रएवावतिष्ठेरन् ।। ०२.१३.३४ ।।

गृहीतं सुवर्णं धृतं च प्रयोगं करण-मध्ये दद्यात् ।। ०२.१३.३५ ।।

सायं प्रातश्च लक्षितं कर्तृ-कारयितृ-मुद्राभ्यां निदध्यात् ।। ०२.१३.३६ ।।

क्षेपणो गुणः क्षुद्रकं इति कर्माणि ।। ०२.१३.३७ ।।

क्षेपणः काच-अर्पण-आदीनि ।। ०२.१३.३८ ।।

गुणः सूत्र-वान-आदीनि ।। ०२.१३.३९ ।।

घनं सुषिरं पृषत-आदि-युक्तं क्षुद्रकं इति ।। ०२.१३.४० ।।

अर्पयेत्काच-कर्मणः पञ्च-भागं काञ्चनं दश-भागं कटु-मानं ।। ०२.१३.४१ ।।

ताम्र-पाद-युक्तं रूप्यं रूप्य-पाद-युक्तं वा सुवर्णं संस्कृतकम् । तस्माद्रक्षेत् ।। ०२.१३.४२ ।।

पृषत-काच-कर्मणः त्रयो हि भागाः परिभाण्डं द्वौ वास्तुकम् । चत्वारो वा वास्तुकं त्रयः परिभाण्डं ।। ०२.१३.४३ ।।

त्वष्टृ-कर्मणः शुल्ब-भाण्डं सम-सुवर्णेन सम्यूहयेत् ।। ०२.१३.४४ ।।

रूप्य-भाण्डं घनं सुषिरं वा सुवर्ण-अर्धेनावलेपयेत् ।। ०२.१३.४५ ।।

चतुर्-भाग-सुवर्णं वा वालुका-हिङ्गुलुकस्य रसेन चूर्णेन वा वासयेत् । ।। ०२.१३.४६ ।।

तपनीयं ज्येष्ठं सुवर्णं सुरागं सम-सीस-अतिक्रान्तं पाक-पत्त्र-पक्वं सैन्धविकयाउज्ज्वालितं नील-पीत-श्वेत-हरित-शुक-पत्त्र-वर्णानां प्रकृतिर्भवति ।। ०२.१३.४७ ।।

तीक्ष्णं चास्य मयूर-ग्रीव-आभं श्वेत-भङ्गं चिमिचिमायितं पीत-चूर्णितं काकणिकः सुवर्ण-रागः ।। ०२.१३.४८ ।।

तारं उपशुद्धं वा अस्थि-तुत्थे चतुः सम-सीसे चतुः शुष्क-तुत्थे चतुः कपाले त्रिर्गोमये द्विरेवं सप्त-दश-तुत्थ-अतिक्रान्तं सैन्धविकयाउज्ज्वालितं ।। ०२.१३.४९ ।।

एतस्मात्काकण्य्-उत्तरमाद्विमाषादिति सुवर्णे देयम् । पश्चाद्राग-योगः । श्वेत-तारं भवति । ।। ०२.१३.५० ।।

त्रयोअंशास्तपनीयस्य द्वात्रिंशद्-भाग-श्वेत-तारं ऊर्च्छिताः तत्श्वेत-लोहितकं भवति ।। ०२.१३.५१ ।।

ताम्रं पीतकं करोति ।। ०२.१३.५२ ।।

तपनीयं उज्ज्वाल्य राग-त्रि-भागं दद्यात् । पीत-रागं भवति ।। ०२.१३.५३ ।।

श्वेत-तार-भागौ द्वावेकस्तपनीयस्य मुद्ग-वर्णं करोति ।। ०२.१३.५४ ।।

काल-अयसस्यार्ध-भाग-अभ्यक्तं कृष्णं भवति ।। ०२.१३.५५ ।।

प्रतिलेपिना रसेन द्वि-गुण-अभ्यक्तं तपनीयं शुक-पत्त्र-वर्णं भवति ।। ०२.१३.५६ ।।

तस्य-आरम्भे राग-विशेषेषु प्रतिवर्णिकां गृह्णीयात् ।। ०२.१३.५७ ।।

तीक्ष्ण-ताम्र-संस्कारं च बुध्येत ।। ०२.१३.५८ ।।

तस्माद्वज्र-मणि-मुक्ता-प्रवाल-रूपाणां अपनेयि-मानं च रूप्य-सुवर्ण-भाण्ड-बन्ध-प्रमाणानि च ।। ०२.१३.५९ ।।

सम-रागं सम-द्वन्द्वं असक्त-पृषतं स्थिरं । ।। ०२.१३.६०अ ब ।।

सुप्रमृष्टं असम्पीतं विभक्तं धारणे सुखं ।। ०२.१३.६०च्द् ।।

अभिनीतं प्रभा-युक्तं संस्थानं अधुरं समं । ।। ०२.१३.६१अ ब ।।

मनो-नेत्र-अभिरामं च तपनीय-गुणाः स्मृताः ।। ०२.१३.६१च्द् ।।

सौवर्णिकः पौर-जान-पदानां रूप्य-सुवर्णं आवेशनिभिः कारयेत् ।। ०२.१४.०१ ।।

निर्दिष्ट-काल-कार्यं च कर्म कुर्युः । अनिर्दिष्ट-कालं कार्य-अपदेशं ।। ०२.१४.०२ ।।

कार्यस्य-अन्यथा-करणे वेतन-नाशः । तद्-द्वि-गुणश्च दण्डः ।। ०२.१४.०३ ।।

काल-अतिपातने पाद-हीनं वेतनं तद्-द्वि-गुणश्च दण्डः ।। ०२.१४.०४ ।।

यथा-वर्ण-प्रमाणं निक्षेपं गृह्णीयुस्तथा-विधं एवार्पयेयुः ।। ०२.१४.०५ ।।

काल-अन्तरादपि च तथा-विधं एव प्रतिगृह्णीयुः । अन्यत्र क्षीण-परिशीर्णाभ्यां ।। ०२.१४.०६ ।।

आवेशनिभिः सुवर्ण-पुद्गल-लक्षण-प्रयोगेषु तत्-तज्जानीयात् ।। ०२.१४.०७ ।।

तप्त-कल-धौतकयोः काकणिकः सुवर्णे क्षयो देयः ।। ०२.१४.०८ ।।

तीक्ष्ण-काकणी रूप्य-द्वि-गुणः राग-प्रक्षेपः । तस्य षड्-भागः क्षयः ।। ०२.१४.०९ ।।

वर्ण-हीने माष-अवरे पूर्वः साहस-दण्डः । प्रमाण-हीने मध्यमः । तुला-प्रतिमान-उपधावुत्तमः । कृत-भाण्ड-उपधौ च ।। ०२.१४.१० ।।

सौवर्णिकेनादृष्टं अन्यत्र वा प्रयोगं कारयतो द्वादश-पणो दण्डः ।। ०२.१४.११ ।।

कर्तुर्द्वि-गुणः सापसारश्चेत् ।। ०२.१४.१२ ।।

अनपसारः कण्टक-शोधनाय नीयेत ।। ०२.१४.१३ ।।

कर्तुश्च द्वि-शतो दण्डः पणच्-छेदनं वा ।। ०२.१४.१४ ।।

तुला-प्रतिमान-भाण्डं पौतव-हस्तात्क्रीणीयुः ।। ०२.१४.१५ ।।

अन्यथा द्वादश-पणो दण्डः ।। ०२.१४.१६ ।।

घनं सुषिरं सम्यूहयं अवलेप्यं संघात्यं वासितकं च कारु-कर्म ।। ०२.१४.१७ ।।

तुला-विषमं अपसारणं विस्रावणं पेटकः पिङ्कश्चैति हरण-उपायाः ।। ०२.१४.१८ ।।

सम्नामिन्युत्कीर्णिका भिन्न-मस्तक-उपकण्ठी कुशिक्या सकटु-कक्ष्या परिवेल्याअयस्-कान्ता च दुष्ट-तुलाः ।। ०२.१४.१९ ।।

रूप्यस्य द्वौ भागावेकः शुल्बस्य त्रिपुटकं ।। ०२.१४.२० ।।

तेनाकरोद्गतं अपसार्यते तत्-त्रिपुटक-अपसारितं ।। ०२.१४.२१ ।।

शुल्बेन शुल्ब-अपसारितम् । वेल्लकेन वेल्लक-अपसारितम् । शुल्ब-अर्ध-सारेण हेम्ना हेम-अपसारितं ।। ०२.१४.२२ ।।

मूक-मूषा पूति-किट्टः करटुक-मुखं नाली संदंशो जोङ्गनी सुवर्चिका-लवणं तदेव सुवर्णं इत्यपसारण-मार्गाः ।। ०२.१४.२३ ।।

पूर्व-प्रणिहिता वा पिण्ड-वालुका मूषा-भेदादग्निष्ठादुद्ध्रियन्ते ।। ०२.१४.२४ ।।

पश्चाद्बन्धने आचितक-पत्त्र-परीक्षायां वा रूप्य-रूपेण परिवर्तनं विस्रावणम् । पिण्ड-वालुकानां लोह-पिण्ड-वालुकाभिर्वा ।। ०२.१४.२५ ।।

गाढश्चाभ्युद्धार्यश्च पेटकः सम्यूहयावलेप्य-संघात्येषु क्रियते ।। ०२.१४.२६ ।।

सीस-रूपं सुवर्ण-पत्त्रेणावलिप्तं अभ्यन्तरं अष्टकेन बद्धं गाढ-पेटकः ।। ०२.१४.२७ ।।

स एव पटल-सम्पुटेष्वभ्युद्धार्यः ।। ०२.१४.२८ ।।

पत्त्रं आश्लिष्टं यमकपत्त्रं वाअवलेप्येषु क्रियते ।। ०२.१४.२९ ।।

शुल्बं तारं वा गर्भः पत्त्राणां संघात्येषु क्रियते ।। ०२.१४.३० ।।

शुल्ब-रूपं सुवर्ण-पत्त्र-संहतं प्रमृष्टं सुपार्श्वम् । तदेव यमक-पत्त्र-संहतं प्रमृष्टं ताम्र-तार-रुपं चौत्तर-वर्णकः ।। ०२.१४.३१ ।।

तदुभयं तापनि-कषाभ्यां निहशब्द-उल्लेखनाभ्यां वा विद्यात् ।। ०२.१४.३२ ।।

अभ्युद्धार्यं बदर-आम्ले लवण-उदके वा सादयन्ति इति पेटकः ।। ०२.१४.३३ ।।

घने सुषिरे वा रूपे सुवर्ण-मृन्-मालुका-हिङ्गुलुक-कल्पो वा तप्तोअवतिष्ठते ।। ०२.१४.३४ ।।

दृढ-वास्तुके वा रूपे वालुका-मिश्रं जतु गान्धार-पङ्को वा तप्तोअवतिष्ठते ।। ०२.१४.३५ ।।

तयोस्तापनं अवध्वंसनं वा शुद्धिः ।। ०२.१४.३६ ।।

सपरिभाण्डे वा रूपे लवणं उल्कया कटु-शर्करया तप्तं अवतिष्ठते ।। ०२.१४.३७ ।।

तस्य क्वाथनं शुद्धिः ।। ०२.१४.३८ ।।

अभ्र-पटलं अष्टकेन द्वि-गुण-वास्तुके वा रूपे बध्यते ।। ०२.१४.३९ ।।

तस्यापिहित-काचकस्यौदके निमज्जत एक-देशः सीदति । पटल-अन्तरेषु वा सूच्या भिद्यते ।। ०२.१४.४० ।।

मणयो रूप्यं सुवर्णं वा घन-सुषिराणां पिङ्कः ।। ०२.१४.४१ ।।

तस्य तापनं अवध्वंसनं वा शुद्धिः इति पिङ्कः ।। ०२.१४.४२ ।।

तस्माद्वज्र-मणि-मुक्ता-प्रवाल-रूपाणां जाति-रूप-वर्ण-प्रमाण-पुद्गल-लक्षणान्युपलभेत ।। ०२.१४.४३ ।।

कृत-भाण्ड-परीक्षायां पुराण-भाण्ड-प्रतिसंस्कारे वा चत्वारो हरण-उपायाः परिकुट्टनं अवच्छेदनं उल्लेखनं परिमर्दनं वा ।। ०२.१४.४४ ।।

पेटक-अपदेशेन पृषतं गुणं पिटकां वा यत्परिशातयन्ति तत्-परिकुट्टनं ।। ०२.१४.४५ ।।

यद्-द्वि-गुण-वास्तुकानां वा रूपे सीस-रूपं प्रक्षिप्यऽभ्यन्तरं अवच्छिन्दन्ति तदवच्छेदनं ।। ०२.१४.४६ ।।

यद्घनानां तीक्ष्णेनौल्लिखन्ति तदुल्लेखनं ।। ०२.१४.४७ ।।

हरि-ताल-मनः-शिला-हिङ्गुलुक-चूर्णानां अन्यतमेन कुरु-विन्द-चूर्णेन वा वस्त्रं सम्यूह्य यत्परिमृद्नन्ति तत्परिमर्दनं ।। ०२.१४.४८ ।।

तेन सौवर्ण-राजतानि भाण्डानि क्षीयन्ते । न चएषां किंचिदवरुग्णं भवति ।। ०२.१४.४९ ।।

भग्न-खण्ड-घृष्टानां सम्यूहयानां सदृशेनानुमानं कुर्यात् ।। ०२.१४.५० ।।

अवलेप्यानां यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात् ।। ०२.१४.५१ ।।

विरूपाणां वा तापनं उदक-पेषणं च बहुशः कुर्यात् ।। ०२.१४.५२ ।।

अवक्षेपः प्रतिमानं अग्निर्गण्डिका भण्डिक-अधिकरणी पिञ्छः सूत्रं चेल्लं बोल्लनं शिर उत्सङ्गो मक्षिका स्व-काय-ईक्षा दृतिरुदक-शरावं अग्निष्ठं इति काचं विद्यात् ।। ०२.१४.५३ ।।

राजतानां विस्रं मल-ग्राहि परुषं प्रस्तीनं विवर्णं वा दुष्टं इति विद्यात् ।। ०२.१४.५४ ।।

एवं नवं च जीर्णं च विरूपं चापि भाण्डकं । ।। ०२.१४.५५अ ब ।।

परीक्षेतात्ययं चएषां यथा-उद्दिष्टं प्रकल्पयेत् ।। ०२.१४.५५च्द् ।।

कोष्ठ-अगार-अध्यक्षः सीता-राष्ट्र-क्रयिम-परिवर्तक-प्रामित्यक-आपमित्यक-संहनिक-अन्य-जात-व्यय-प्रत्याय-उपस्थानान्युपलभेत् ।। ०२.१५.०१ ।।

सीता-अध्यक्ष-उपनीतः सस्य-वर्णकः सीता ।। ०२.१५.०२ ।।

पिण्ड-करः षड्-भागः सेना-भक्तं बलिः कर उत्सङ्गः पार्श्वं पारिहीणिकं औपायनिकं कौष्ठेयकं च राष्ट्रं ।। ०२.१५.०३ ।।

धान्य-मूल्यं कोश-निर्हारः प्रयोग-प्रत्यादानं च क्रयिमं ।। ०२.१५.०४ ।।

सस्य-वर्णानां अर्घ-अन्तरेण विनिमयः परिवर्तकः ।। ०२.१५.०५ ।।

सस्य-याचनं अन्यतः प्रामित्यकं ।। ०२.१५.०६ ।।

तदेव प्रतिदान-अर्थं आपमित्यकं ।। ०२.१५.०७ ।।

कुट्टक-रोचक-सक्तु-शुक्त-पिष्ट-कर्म तज्-जीवनेषु तैल-पीडन-मौद्र-चाक्रिकेष्विक्षूणां च क्षार-कर्म संहनिका ।। ०२.१५.०८ ।।

नष्ट-प्रस्मृत-आदिरन्य-जातः ।। ०२.१५.०९ ।।

विक्षेप-व्याधित-अन्तर-आरम्भ-शेषं च व्यय-प्रत्यायः ।। ०२.१५.१० ।।

तुला-मान-अन्तरं हस्त-पूरणं उत्करो व्याजी पर्युषितं प्रार्जितं चौपस्थानं इति ।। ०२.१५.११ ।।

धान्य-स्नेह-क्षार-लवणानां धान्य-कल्पं सीता-अध्यक्षे वक्ष्यामः ।। ०२.१५.१२ ।।

सर्पिस्-तैल-वसा-मज्जानः स्नेहाः ।। ०२.१५.१३ ।।

फाणित-गुड-मत्स्यण्डिक-अखण्ड-शर्कराः क्षार-वर्गः ।। ०२.१५.१४ ।।

सैन्धव-सामुद्र-बिड-यव-क्षार-सौवर्चल-उद्भेदजा लवण-वर्गः ।। ०२.१५.१५ ।।

क्षौद्रं मार्द्वीकं च मधु ।। ०२.१५.१६ ।।

इक्षु-रस-गुड-मधु-फाणित-जाम्बव-पनसानां अन्यतमो मेष-शृङ्गी-पिप्पली-क्वाथ-अभिषुतो मासिकः षाण्मासिकः सांवत्सरिको वा चिद्भिटोर्वारुक-इक्षु-काण्ड-आम्र-फल-आमलक-अवसुतः शुद्धो वा शुक्त-वर्गः ।। ०२.१५.१७ ।।

वृक्ष-आम्ल-कर-मर्द-आम्र-विदल-आमलक-मातुलुङ्ग-कोल-बदर-सौवीरक-परूषक-आदिः फल-आम्ल-वर्गः ।। ०२.१५.१८ ।।

दधि-धान्य-आम्ल-आदिर्द्रव-आम्ल-वर्गः ।। ०२.१५.१९ ।।

पिप्पली-मरिच-शृङ्गि-बेरा-अजाजी-किरात-तिक्त-गौर-सर्षप-कुस्तुम्बुरु-चोरक-दमनक-मरुवक-शिग्रु-काण्ड-आदिः कटुक-वर्गः ।। ०२.१५.२० ।।

शुष्क-मत्स्य-मांस-कन्द-मूल-फल-शाक-आदि च शाक-वर्गः ।। ०२.१५.२१ ।।

ततोअर्धं आपद्-अर्थं जानपदानां स्थापयेद् । अर्धं उपयुञ्जीत ।। ०२.१५.२२ ।।

नवेन चानवं शोधयेत् ।। ०२.१५.२३ ।।

क्षुण्ण-घृष्ट-पिष्ट-भृष्टानां आर्द्र-शुष्क-सिद्धानां च धान्यानां वृद्धि-क्षय-प्रमाणानि प्रत्यक्षी-कुर्वीत ।। ०२.१५.२४ ।।

कोद्रव-व्रीहीणां अर्धं सारः । शालीनां अर्ध-भाग-ऊनः । त्रि-भाग-ऊनो वरकाणां ।। ०२.१५.२५ ।।

प्रियङ्गूणां अर्धं सारो नव-भाग-वृद्धिश्च ।। ०२.१५.२६ ।।

उदारकस्तुल्यः । यवा गो-धूमाश्च क्षुण्णाः । तिला यवा मुद्ग-माषाश्च घृष्टाः ।। ०२.१५.२७ ।।

पञ्च-भाग-वृद्धिर्-गो-धूमः । सक्तवश्च ।। ०२.१५.२८ ।।

पाद-ऊना कलाय-चमसी ।। ०२.१५.२९ ।।

मुद्ग-माषाणां अर्ध-पाद-ऊना ।। ०२.१५.३० ।।

।। ०२.१५.३१ ।शौम्ब्यानां अर्धं सारः । त्रि-भाग-ऊनो मसूराणां ।।

पिष्टं आमं कुल्माषाश्चाध्यर्ध-गुणाः ।। ०२.१५.३२ ।।

द्वि-गुणो यावकः । पुलाकः । पिष्टं च सिद्धं ।। ०२.१५.३३ ।।

कोद्रव-वरक-उदारक-प्रियङ्गूणां त्रि-गुणं अन्नम् । चतुर्-गुणं व्रीहीणाम् । पञ्च-गुणं शालीनां ।। ०२.१५.३४ ।।

तिमितं अपर-अन्नं द्वि-गुणम् । अर्ध-अधिकं विरूढानां ।। ०२.१५.३५ ।।

पञ्च-भाग-वृद्धिर्भृष्टानां ।। ०२.१५.३६ ।।

कलायो द्वि-गुणः । लाजा भरुजाश्च ।। ०२.१५.३७ ।।

।। ०२.१५.३८ ।षट्कं तैलं अतसीनां ।।

निम्ब-कुश-आम्रक-पित्थ-आदीनां पञ्च-भागः ।। ०२.१५.३९ ।।

चतुर्-भागिकास्तिल-कुसुम्भ-मधूक-इङ्गुदी-स्नेहाः ।। ०२.१५.४० ।।

कार्पास-क्षौमाणां पञ्च-पले पलं सूत्रं ।। ०२.१५.४१ ।।

पञ्च-द्रोणे शालीनां द्वादश-आढकं तण्डुलानां कलभ-भोजनम् । एकादशकं व्यालानाम् । दशकं औपवाह्यानां नवकं साम्नाह्यानाम् । अष्टकं पत्तीनाम् । सप्तकं मुख्यानाम् । षट्कं देवी-कुमाराणाम् । पञ्चकं राज्ञाम् । अखण्ड-परिशुद्धानां वा तुअण्डुलानां प्रस्थः ।। ०२.१५.४२ ।।

तण्डुलानां प्रस्थः चतुर्-भागः सूपः सूप-षोडशो लवणस्यांशः चतुर्-भागः सर्पिषस्तैलस्य वाएकं आर्य-भक्तं पुंसः ।। ०२.१५.४३ ।।

।। ०२.१५.४४ ।षड्-भागः सूपः अर्ध-स्नेहं अवराणां ।।

पाद-ऊनं स्त्रीणां ।। ०२.१५.४५ ।।

अर्धं बालानां ।। ०२.१५.४६ ।।

मांस-पल-विंशत्या स्नेह-अर्ध-कुडुबः पलिको लवणस्यांशः क्षार-पल-योगो द्वि-धरणिकः कटुक-योगो दध्नुश्चार्ध-प्रस्थः ।। ०२.१५.४७ ।।

तेनौत्तरं व्याख्यातं ।। ०२.१५.४८ ।।

शाकानां अध्यर्ध-गुणः । शुष्काणां द्वि-गुणः । स चैव योगः ।। ०२.१५.४९ ।।

हस्त्य्-अश्वयोस्तद्-अध्यक्षे विधा-प्रमाणं वक्ष्यामः ।। ०२.१५.५० ।।

बली-वर्दानां माष-द्रोणं यवानां वा पुलाकः । शेषं अश्व-विधानं ।। ०२.१५.५१ ।।

विशेषो घाण-पिण्याक-तुला । कण-कुण्डकं दश-आढकं वा ।। ०२.१५.५२ ।।

द्वि-गुणं महिष-उष्ट्राणां ।। ०२.१५.५३ ।।

अर्ध-द्रोणं खर-पृषत-रोहितानां ।। ०२.१५.५४ ।।

आढकं एण-कुरङ्गाणां ।। ०२.१५.५५ ।।

अर्ध-आढकं अज-एडक-वराहाणाम् । द्वि-गुणं वा कण-कुण्डकं ।। ०२.१५.५६ ।।

प्रस्थ-ओदनः शुनां ।। ०२.१५.५७ ।।

हंस-क्रौञ्च-मयूराणां अर्ध-प्रस्थः ।। ०२.१५.५८ ।।

शेषाणां अतो मृग-पशु-पक्षि-व्यालानां एक-भक्तादनुमानं ग्राहयेत् ।। ०२.१५.५९ ।।

अङ्गारांस्तुषान्लोह-कर्म-अन्त-भित्ति-लेप्यानां हारयेत् ।। ०२.१५.६० ।।

कणिका दास-कर्म-कर-सूप-काराणाम् । अतोअन्यदौदनिक-अपूपिकेभ्यः प्रयच्छेत् ।। ०२.१५.६१ ।।

तुला-मान-भाण्डं रोचनी-दृषन्-मुसल-उलूखल-कुट्टक-रोचक-यन्त्र-पत्त्रक-शूर्प-चालनिक-अकण्डोली-पिटक-सम्मार्जन्यश्चौपकरणानि ।। ०२.१५.६२ ।।

मार्जक-रक्षक-धरक-मायक-मापक-दायक-दापक-शलाक-अप्रतिग्राहक-दास-कर्म-कर-वर्गश्च विष्टिः ।। ०२.१५.६३ ।।

उच्चैर्धान्यस्य निक्षेपो मूताः क्षारस्य संहताः । ।। ०२.१५.६४अ ब ।।

मृत्-काष्ठ-कोष्ठाः स्नेहस्य पृथिवी लवणस्य च ।। ०२.१५.६४च्द् ।।

पण्य-अध्यक्षः स्थल-जलजानां नाना-विधानां पण्यानां स्थल-पथ-वारि-पथ-उपयातानां सार-फल्ग्व्-अर्घ-अन्तरं प्रिय-अप्रियतां च विद्यात् । तथा विक्षेप-संक्षेप-क्रय-विक्रय-प्रयोग-कालान् ।। ०२.१६.०१ ।।

यच्च पण्यं प्रचुरं स्यात्तदेकी-कृत्यार्घं आरोपयेत् ।। ०२.१६.०२ ।।

प्राप्तेअर्घे वाअर्घ-अन्तरं कारयेत् ।। ०२.१६.०३ ।।

स्व-भूमिजानां राज-पण्यानां एक-मुखं व्यवहारं स्थापयेत् । पर-भूमिजानां अनेक-मुखं ।। ०२.१६.०४ ।।

उभयं च प्रजानां अनुग्रहेण विक्रापयेत् ।। ०२.१६.०५ ।।

स्थूलं अपि च लाभं प्रजानां औपघातिकं वारयेत् ।। ०२.१६.०६ ।।

अजस्र-पण्यानां काल-उपरोधं संकुल-दोषं वा नौत्पादयेत् ।। ०२.१६.०७ ।।

बहु-मुखं वा राज-पण्यं वैदेहकाः कृत-अर्घं विक्रीणीरन् ।। ०२.१६.०८ ।।

छेद-अनुरूपं च वैधरणं दद्युः ।। ०२.१६.०९ ।।

षोडश-भागो मान-व्याजी । विंशति-भागस्तुला-मानम् । गण्य-पण्यानां एकादश-भागः ।। ०२.१६.१० ।।

पर-भूमिजं पण्यं अनुग्रहेणऽवाहयेत् ।। ०२.१६.११ ।।

नाविकस-अर्थ-वाहेभ्यश्च परिहारं आयति-क्षमं दद्यात् ।। ०२.१६.१२ ।।

अनभियोगश्चार्थेष्वागन्तूनाम् । अन्यत्र सभ्या-उपकारिभ्यः ।। ०२.१६.१३ ।।

पण्य-अधिष्ठातारः पण्य-मूल्यं एक-मुखं काष्ठ-द्रोण्यां एकच्-छिद्र-अपिधानायां निदध्युः ।। ०२.१६.१४ ।।

अह्नश्चाष्टमे भागे पण्य-अध्यक्षस्यार्पयेयुः "इदं विक्रीतम् । इदं शेषम्" इति ।। ०२.१६.१५ ।।

तुला-मान-भाण्डं चार्पयेयुः ।। ०२.१६.१६ ।।

इति स्व-विषये व्याख्यातं ।। ०२.१६.१७ ।।

पर-विषये तु पण्य-प्रतिपण्ययोरर्घं मूल्यं चऽगमय्य शुल्क-वर्तन्याआतिवाहिक-गुल्मतर-देय-भक्त-भाग-व्यय-शुद्धं उदयं पश्येत् ।। ०२.१६.१८ ।।

असत्युदये भाण्ड-निर्वहणेन पण्य-प्रतिपण्य-आनयनेन वा लाभं पश्येत् ।। ०२.१६.१९ ।।

ततः सार-पादेन स्थल-व्यवहारं अध्वना क्षेमेण प्रयोजयेत् ।। ०२.१६.२० ।।

अटव्य्-अन्त-पाल-पुर-राष्ट्र-मुख्यैश्च प्रतिसंसर्गं गच्छेदनुग्रह-अर्थं ।। ०२.१६.२१ ।।

आपदि सारं आत्मानं वा मोक्षयेत् ।। ०२.१६.२२ ।।

आत्मनो वा भूमिं प्राप्तः सर्व-देय-विशुद्धं व्यवहरेत ।। ०२.१६.२३ ।।

वारि-पथे वा यान-भागक-पथ्य्-अदन-पण्य-प्रतिपण्य-अर्घ-प्रमाण-यात्रा-काल-भय-प्रतीकार-पण्य-पत्तन-चारित्राण्युपलभेत ।। ०२.१६.२४ ।।

नदी-पथे च विज्ञाय व्यवहारं चरित्रतः । ।। ०२.१६.२५अ ब ।।

यतो लाभस्ततो गच्छेदलाभं परिवर्जयेत् ।। ०२.१६.२५च्द् ।।

कुप्य-अध्यक्षो द्रव्य-वन-पालैः कुप्यं आनाययेत् ।। ०२.१७.०१ ।।

द्रव्य-वन-कर्म-अन्तांश्च प्रयोजयेत् ।। ०२.१७.०२ ।।

द्रव्य-वनच्-छिद्रां च देयं अत्ययं च स्थापयेदन्यत्रऽपद्भ्यः ।। ०२.१७.०३ ।।

कुप्य-वर्गः शाक-तिनिश-धन्वन-अर्जुन-मधूक-तिलक-साल-शिंशपा-अरिमेद-राज-अदन-शिरीष-खदिर-सरल-ताल-सर्ज-अश्व-कर्ण-सोम-वल्क-कुश-आम्र-प्रियक-धव-आदिः सार-दारु-वर्गः ।। ०२.१७.०४ ।।

उटज-चिमिय-चाप-वेणु-वंश-सातिन-कण्टक-भाल्लूक-आदिर्वेणु-वर्गः ।। ०२.१७.०५ ।।

वेत्र-शीक-वल्ली-वाशी-श्याम-लता-नाग-लता-आदिर्वल्ली-वर्गः ।। ०२.१७.०६ ।।

मालती-मूर्वा-अर्क-शण-गवेधुका-अतस्य्-आदिर्वल्क-वर्गः ।। ०२.१७.०७ ।।

मुञ्ज-बल्बज-आदि रज्जु-भाण्डं ।। ०२.१७.०८ ।।

ताली-ताल-भूर्जानां पत्त्रं ।। ०२.१७.०९ ।।

किंशुक-कुसुम्भ-कुङ्कुमानां पुष्पं ।। ०२.१७.१० ।।

कन्द-मूल-फल-आदिरौषध-वर्गः ।। ०२.१७.११ ।।

काल-कूट-वत्स-नाभ-हालाहल-मेष-शृङ्ग-मुस्ता-कुष्ठ-महा-विष-वेल्लितक-गौर-अर्द्र-बालक-मार्कट-हैमवत-कालिङ्गक-दारदक-अङ्कोल-सारक-उष्ट्रक-आदीनि विषाणि । सर्पाः कीटाश्च त एव कुम्भ-गताः विष-वर्गः ।। ०२.१७.१२ ।।

गोधा-सेरक-द्वीप्य्-ऋक्ष-शिंशुमार-सिंह-व्याघ्र-हस्ति-महिष-चमर-सृमर-खड्ग-गो-मृग-गवयानां चर्म-अस्थि-पित्त-स्नाय्व्-अक्षि-दन्त-शृङ्ग-खुर-पुच्छानि । अन्येषां वाअपि मृग-पशु-पक्षि-व्यालानां ।। ०२.१७.१३ ।।

काल-अयस-ताम्र-वृत्त-कंस-सीस-त्रपु-वैकृन्तक-आर-कूटानि लोहानि ।। ०२.१७.१४ ।।

विदल-मृत्तिकामयं भाण्डं ।। ०२.१७.१५ ।।

अङ्गार-तुष-भस्मानि । मृग-पशु-पक्षि-व्याल-वाटाः काष्ठ-तृण-वाटाश्च इति ।। ०२.१७.१६ ।।

बहिरन्तश्च कर्म-अन्ता विभक्ताः सार्वभाण्डिकाः । ।। ०२.१७.१७अ ब ।।

आजीव-पुर-रक्षा-अर्थाः कार्याः कुप्य-उपजीविना ।। ०२.१७.१७च्द् ।।

आयुध-अगार-अध्यक्षः सांग्रामिकं दौर्गकर्मिकं पर-पुर-अभिघातिकं च यन्त्रं आयुधं आवरणं उपकरणं च तज्-जात-कारु-शिल्पिभिः कृत-कर्म-प्रमाण-काल-वेतन-फल-निष्पत्तिभिः कारयेत् । स्व-भूमिषु च स्थापयेत् ।। ०२.१८.०१ ।।

स्थान-परिवर्तनं आतप-प्रवात-प्रदानं च बहुशः कुर्यात् ।। ०२.१८.०२ ।।

ऊष्म-उपस्नेह-क्रिमिभिरुपहन्यमानं अन्यथा स्थापयेत् ।। ०२.१८.०३ ।।

जाति-रूप-लक्षण-प्रमाण-आगम-मूल्य-निक्षेपैश्चौपलभेत ।। ०२.१८.०४ ।।

सर्वतो-भद्र-जामदग्न्य-बहु-मुख-विश्वास-घाति-संघाटी-यानक-पर्जन्यक-बाहु-ऊर्ध्व-बाह्व्-अर्ध-बाहूनि स्थित-यन्त्राणि ।। ०२.१८.०५ ।।

पाञ्चालिक-देव-दण्ड-सूकरिका-मुसल-यष्टि-हस्ति-वारक-ताल-वृन्त-मुद्गर-गदा-स्पृक्तला-कुद्दाल-आस्फाटिम-उत्पाटिम-उद्घाटिम-शतघ्नि-त्रि-शूल-चक्राणि चल-यन्त्राणि ।। ०२.१८.०६ ।।

शक्ति-प्रास-कुन्त-हाटक-भिण्डि-पाल-शूल-तोमर-वराह-कर्ण-कणय-कर्पण-त्रासिक-आदीनि च हुल-मुखानि ।। ०२.१८.०७ ।।

ताल-चाप-दारव-शार्ङ्गाणि कार्मुक-कोदण्ड-द्रूणा धनूंषि ।। ०२.१८.०८ ।।

मूर्वा-अर्क-शन-गवेधु-वेणु-स्नायूनि ज्याः ।। ०२.१८.०९ ।।

वेणु-शर-शलाका-दण्ड-आसन-नाराचाश्चैषवः ।। ०२.१८.१० ।।

तेषां मुखानि छेदन-भेदन-ताडनान्यायस-अस्थि-दारवाणि ।। ०२.१८.११ ।।

निस्त्रिंश-मण्डल-अग्र-असि-यष्टयः खड्गाः ।। ०२.१८.१२ ।।

खड्ग-महिष-वारण-विषाण-दारु-वेणु-मूलानि त्सरवः ।। ०२.१८.१३ ।।

परशु-कुठार-पट्टस-खनित्र-कुद्दाल-क्रकच-काण्डच्-छेदनाः क्षुर-कल्पाः ।। ०२.१८.१४ ।।

यन्त्र-गोष्पण-मुष्टि-पाषाण-रोचनी-दृषदश्चाश्म-आयुधानि ।। ०२.१८.१५ ।।

लोह-जालिका-पट्ट-कवच-सूत्र-कङ्कट-शिंशुमारक-खड्गि-धेनुक-हस्ति-गो-चर्म-खुर-शृङ्ग-संघातं वर्माणि ।। ०२.१८.१६ ।।

शिरस्-त्राण-कण्ठ-त्राण-कूर्पास-कञ्चुक-वार-वाण-पट्ट-नाग-उदरिकाः पेटी-चर्म-हस्ति-कर्ण-ताल-मूल-धमनि-काक-पाट-किटिका-अप्रतिहत-बलाह-कान्ताश्चऽवरणाणि ।। ०२.१८.१७ ।।

हस्ति-रथ-वाजिनां योग्या-भाण्डं आलंकारिकं सम्नाह-कल्पनाश्चौपकरणानि ।। ०२.१८.१८ ।।

ऐन्द्रजालिकं औपनिषदिकं च कर्म ।। ०२.१८.१९ ।।

कर्म-अन्तानां च इच्छां आरम्भ-निष्पत्तिं प्रयोगं व्याजं उद्दयं । ।। ०२.१८.२०अ ब ।।

क्षय-व्ययौ च जानीयात्कुप्यानां आयुध-ईश्वरः ।। ०२.१८.२०च्द् ।।

पौतव-अध्यक्षः पौतव-कर्म-अन्तान्कारयेत् ।। ०२.१९.०१ ।।

धान्य-माषा दश सुवर्ण-माषकः । पञ्च वा गुञ्जाः ।। ०२.१९.०२ ।।

ते षोडश सुवर्णः कर्षो वा ।। ०२.१९.०३ ।।

चतुष्-कर्षं पलं ।। ०२.१९.०४ ।।

अष्ट-अशीतिर्गौर-सर्षपा रूप्य-माषकः ।। ०२.१९.०५ ।।

ते षोडश धरणम् । शौम्ब्यानि वा विंशतिः ।। ०२.१९.०६ ।।

विंशति-तण्डुलं वज्र-धरणं ।। ०२.१९.०७ ।।

अर्ध-माषकः माषकः द्वौ चत्वारः अष्टौ माषकाः सुवर्णो द्वौ चत्वारः । अष्टौ सुवर्णाः दश विंशतिः त्रिंशत्चत्वारिंशत्शतं इति ।। ०२.१९.०८ ।।

तेन धरणानि व्याख्यातानि ।। ०२.१९.०९ ।।

प्रतिमानान्ययोमयानि मागध-मेकल-शैलमयानि यानि वा नौदक-प्रदेहाभ्यां वृद्धिं गच्छेयुरुष्णेन वा ह्रासं ।। ०२.१९.१० ।।

षडङ्गुलादूर्ध्वं अष्ट-अङ्गुल-उत्तरा दश तुलाः कारयेत्लोह-पलादूर्ध्वं एक-पल-उत्तराः । यन्त्रं उभयतः-शिक्यं वा ।। ०२.१९.११ ।।

पञ्च-त्रिंशत्-पललोहां द्वि-सप्तत्य्-अङ्गुल-आयामां सम-वृत्तां कारयेत् ।। ०२.१९.१२ ।।

तस्याः पञ्च-पलिकं मण्डलं बद्ध्वा सम-करणं कारयेत् ।। ०२.१९.१३ ।।

ततः कर्ष-उत्तरं पलं पल-उत्तरं दश-पलं द्वादश पञ्चदश विंशतिरिति पदानि कारयेत् ।। ०२.१९.१४ ।।

तत आ-शताद्दश-उत्तरं कारयेत् ।। ०२.१९.१५ ।।

अक्षेषु नान्दी-पिनद्धं कारयेत् ।। ०२.१९.१६ ।।

द्वि-गुण-लोहां तुलां अतः षण्णवत्य्-अङ्गुल-आयामां परिमाणीं कारयेत् ।। ०२.१९.१७ ।।

तस्याः शत-पदादूर्ध्वं विंशतिः पञ्चाशत्शतं इति पदानि कारयेत् ।। ०२.१९.१८ ।।

विंशति-तौलिको भारः ।। ०२.१९.१९ ।।

दश-धारणिकं पलं ।। ०२.१९.२० ।।

तत्-पल-शतं आय-मानी ।। ०२.१९.२१ ।।

पञ्च-पल-अवरा व्यावहारिकी भाजन्यन्तः-पुर-भाजनी च ।। ०२.१९.२२ ।।

तासां अर्ध-धरण-अवरं पलम् । द्वि-पल-अवरं उत्तर-लोहम् । षड्-अङ्गुल-अवराश्चऽयामाः ।। ०२.१९.२३ ।।

पूर्वयोः पञ्च-पलिकः प्रयामो मांस-लोह-लवण-मणि-वर्जं ।। ०२.१९.२४ ।।

काष्ठ-तुला अष्ट-हस्ता पदवती प्रतिमानवती मयूर-पद-अधिष्ठिता ।। ०२.१९.२५ ।।

काष्ठ-पञ्चविंशति-पलं तण्डुल-प्रस्थ-साधनं ।। ०२.१९.२६ ।।

एष प्रदेशो बह्व्-अल्पयोः ।। ०२.१९.२७ ।।

इति तुला-प्रतिमानं व्याख्यातं ।। ०२.१९.२८ ।।

अथ धान्य-माष-द्वि-पल-शतं द्रोणं आय-मानम् । सप्त-अशीति-पल-शतं अर्ध-पलं च व्यावहारिकम् । पञ्च-सप्तति-पल-शतं भाजनीयम् । द्वि-षष्टि-पल-शतं अर्ध-पलं चान्तः-पुर-भाजनीयं ।। ०२.१९.२९ ।।

तेषां आढक-प्रस्थ-कुडुबाश्चतुर्-भाग-अवराः ।। ०२.१९.३० ।।

षोडश-द्रोणा खारी ।। ०२.१९.३१ ।।

विंशति-द्रोणिकः कुम्भः ।। ०२.१९.३२ ।।

कुम्भैर्दशभिर्वहः ।। ०२.१९.३३ ।।

शुष्क-सार-दारु-मयं समं चतुर्-भाग-शिखं मानं कारयेत् । अन्तः-शिखं वा ।। ०२.१९.३४ ।।

रसस्य तु सुरायाः पुष्प-फलयोस्तुष-अङ्गाराणां सुधायाश्च शिखा-मानं द्वि-गुण-उत्तरा वृद्धिः ।। ०२.१९.३५ ।।

सपाद-पणो द्रोण-मूल्यं आढकस्य पाद-ऊनः । षण्-माषकाः प्रस्थस्य । माषकः कुडुबस्य ।। ०२.१९.३६ ।।

द्वि-गुणं रस-आदीनां मान-मूल्यं ।। ०२.१९.३७ ।।

विंशति-पणाः प्रतिमानस्य ।। ०२.१९.३८ ।।

तुला-मूल्यं त्रि-भागः ।। ०२.१९.३९ ।।

चतुर्-मासिकं प्रातिवेधनिकं कारयेत् ।। ०२.१९.४० ।।

अप्रतिविद्धस्यात्ययः सपादः सप्त-विंशति-पणः ।। ०२.१९.४१ ।।

प्रातिवेधनिकं काकणीकं अहरहः पौतव-अध्यक्षाय दद्युः ।। ०२.१९.४२ ।।

द्वात्रिंशद्-भागस्तप्त-व्याजी सर्पिषः । चतुः-षष्टि-भागस्तैलस्य ।। ०२.१९.४३ ।।

पञ्चाशद्भागो मान-स्रावो द्रवाणां ।। ०२.१९.४४ ।।

कुडुब-अर्ध-चतुर्-अष्ट-भागानि मानानि कारयेत् ।। ०२.१९.४५ ।।

कुडुबाश्चतुर्-अशीतिर्वारकः सर्पिषो मतः ।। ०२.१९.४६ ।।

चतुः-षष्टिस्तु तैलस्य पादश्च घटिकाअनयोः ।। ०२.१९.४७ ।।

मान-अध्यक्ष्यो देश-काल-मानं विद्यात् ।। ०२.२०.०१ ।।

अष्टौ परम-अणवो रथ-चक्र-विप्रुट् ।। ०२.२०.०२ ।।

ता अष्टौ लिक्षा ।। ०२.२०.०३ ।।

ता अष्तौ यूका ।। ०२.२०.०४ ।।

ता अष्टौ यव-मध्यः ।। ०२.२०.०५ ।।

अष्टौ यव-मध्या अङ्गुलं ।। ०२.२०.०६ ।।

मध्यमस्य पुरुषस्य मध्यमाया अनुगुल्या मध्य-प्रकर्षो वाअङ्गुलं ।। ०२.२०.०७ ।।

चतुर्-अङ्गुलो धनुर्-ग्रहः ।। ०२.२०.०८ ।।

अष्ट-अङ्गुला धनुर्-मुष्टिः ।। ०२.२०.०९ ।।

द्वादश-अङ्गुला वितस्तिः । छाया-पौरुषं च ।। ०२.२०.१० ।।

चतुर्-दश-अङ्गुलं शमः शलः परीरयः पदं च ।। ०२.२०.११ ।।

द्वि-वितस्तिररत्निः प्राजापत्यो हस्तः ।। ०२.२०.१२ ।।

सधनुर्-ग्रहः पौतव-विवीत-मानं ।। ०२.२०.१३ ।।

सधनुर्-मुष्टिः कुष्कुः कंसो वा ।। ०२.२०.१४ ।।

द्वि-चत्वारिंशद्-अङ्गुलस्तक्ष्णः क्राकचनिक-किष्कुः स्कन्ध-आवार-दुर्ग-राज-परिग्रह-मानं ।। ०२.२०.१५ ।।

चतुष्-पञ्चाशद्-अङ्गुलः कूप्य-वन-हस्तः ।। ०२.२०.१६ ।।

चतुर्-अशीत्य्-अङ्गुलो व्यामो रज्जु-मानं खात-पौरुषं च ।। ०२.२०.१७ ।।

चतुर्-अरत्निर्दण्डो धनुर्-नालिका पौरुषं च गार्हपत्यं ।। ०२.२०.१८ ।।

अष्ट-शत-अङ्गुलं धनुः पथि-प्राकार-मानं पौरुषं चाग्नि-चित्यानां ।। ०२.२०.१९ ।।

षट्-कंसो दण्डो ब्रह्म-देय-आतिथ्य-मानं ।। ०२.२०.२० ।।

दश-दण्डो रज्जुः ।। ०२.२०.२१ ।।

द्वि-रज्जुकः परिदेशः ।। ०२.२०.२२ ।।

त्रि-रज्जुकं निवर्तनं एकतः ।। ०२.२०.२३ ।।

द्वि-दण्ड-अधिको बाहुः ।। ०२.२०.२४ ।।

द्वि-धनुः-सहस्रं गो-रुतं ।। ०२.२०.२५ ।।

चतुर्-गो-रुतं योजनं ।। ०२.२०.२६ ।।

इति देश-मानं ।। ०२.२०.२७ ।।

काल-मानं अत ऊर्ध्वं ।। ०२.२०.२८ ।।

तुटो लवो निमेषः काष्ठा कल्ला नालिका मुहूर्तः पूर्व-अपर-भागौ दिवसो रात्रिः पक्षो मास ऋतुरयनं संवत्सरो युगं इति कालाः ।। ०२.२०.२९ ।।

द्वौ तुटौ लवः ।। ०२.२०.३० ।।

द्वौ लवौ निमेषः ।। ०२.२०.३१ ।।

पञ्च-निमेषाः काष्ठाः ।। ०२.२०.३२ ।।

त्रिंशत्-काष्ठाः कलाः ।। ०२.२०.३३ ।।

चत्वारिंशत्-कलाः नालिका ।। ०२.२०.३४ ।।

सुवर्ण-माषकाश्चत्वारश्चतुर्-अङ्गुल-आयामाः कुम्भच्-छिद्रं आढकं अम्भसो वा नालिका ।। ०२.२०.३५ ।।

द्वि-नालिको मुहूर्तः ।। ०२.२०.३६ ।।

पञ्च-दश-मुहूर्तो दिवसो रात्रिश्च चैत्रे चऽश्वयुजे च मासि भवतः ।। ०२.२०.३७ ।।

ततः परं त्रिभिर्मुहूर्तैरन्यतरः षण्-मासं वर्धते ह्रसते चैति ।। ०२.२०.३८ ।।

छायायां अष्ट-पौरुष्यां अष्टादश-भागश्छेदः । षट्-पौरुष्यां चतुर्-दश-भागः । त्रि-पौरुष्यां अष्ट-भागः । द्वि-पौरुष्यां षड्-भागः । पौरुष्यां चतुर्-भागः । अष्ट-अङ्गुलायां त्रयो दश-भागाः । चतुर्-अङ्गुलायां त्रयोअष्ट-भागाः । अच्छायो मध्य-अह्न इति ।। ०२.२०.३९ ।।

परावृत्ते दिवसे शेषं एवं विद्यात् ।। ०२.२०.४० ।।

आषाढे मासि नष्टच्-छायो मध्य-अह्नो भवति ।। ०२.२०.४१ ।।

अतः परं श्रावण-आदीनां षण्-मासानां द्व्य्-अङ्गुल-उत्तरा माघ-आदीनां द्व्य्-अङ्गुल-अवरा छाया इति ।। ०२.२०.४२ ।।

पञ्चदश-अहो-रात्राः पक्षः ।। ०२.२०.४३ ।।

सोम-आप्यायनः शुक्लः ।। ०२.२०.४४ ।।

सोम-अवच्छेदनो बहुलः ।। ०२.२०.४५ ।।

द्वि-पक्षो मासः ।। ०२.२०.४६ ।।

त्रिंशद्-अहो-रात्रः कर्म-मासः ।। ०२.२०.४७ ।।

सार्धः सौरः ।। ०२.२०.४८ ।।

अर्ध-न्यूनश्चान्द्र-मासः ।। ०२.२०.४९ ।।

सप्त-विंशतिर्नाक्षत्र-मासः ।। ०२.२०.५० ।।

द्वात्रिंशद्बल-मासः ।। ०२.२०.५१ ।।

पञ्चत्रिंशदश्व-वाहायाः ।। ०२.२०.५२ ।।

चत्वारिंशद्-हस्ति-वाहायाः ।। ०२.२०.५३ ।।

द्वौ मासावृतुः ।। ०२.२०.५४ ।।

श्रावणः प्रौष्ठपदश्च वर्षाः ।। ०२.२०.५५ ।।

आश्वयुजः कार्त्तिकश्च शरत् ।। ०२.२०.५६ ।।

मार्ग-शीर्षः पौषश्च हेमन्तः ।। ०२.२०.५७ ।।

माघः फाल्गुनश्च शिशिरः ।। ०२.२०.५८ ।।

चैत्रो वैशाखश्च वसन्तः ।। ०२.२०.५९ ।।

ज्येष्ठामूलीय आषाढश्च ग्रीष्मः ।। ०२.२०.६० ।।

शिशिर-आद्युत्तर-अयणं ।। ०२.२०.६१ ।।

वर्ष-आदि दक्षिण-अयनं ।। ०२.२०.६२ ।।

द्व्य्-अयनः संवत्सरः ।। ०२.२०.६३ ।।

पञ्च-संवत्सरो युगं इति ।। ०२.२०.६४ ।।

दिवसस्य हरत्यर्कः षष्टि-भागं ऋतौ ततः । ।। ०२.२०.६५अ ब ।।

करोत्येकं अहश्-छेदं तथाएवएकं च चन्द्रमाः ।। ०२.२०.६५च्द् ।।

एवं अर्ध-तृतीयानां अब्दानां अधिमासकं । ।। ०२.२०.६६अ ब ।।

ग्रीष्मे जनयतः पूर्वं पञ्च-अब्द-अन्ते च पश्चिमं ।। ०२.२०.६६च्द् ।।

शुल्क-अध्यक्षः शुल्क-शालां ध्वजं च प्रान्-मुखं उदन्-मुखं वा महा-द्वार-अभ्याशे निवेशयेत् ।। ०२.२१.०१ ।।

शुल्क-आदायिनश्चत्वारः पञ्च वा सार्थ-उपयातान्वणिजो लिखेयुः के कुतस्त्याः कियत्-पण्याः क्व चाभिज्ञानं मुद्रा वा कृता इति ।। ०२.२१.०२ ।।

अमुद्राणां अत्ययो देय-द्वि-गुणः ।। ०२.२१.०३ ।।

कूट-मुद्राणां शुल्क-अष्ट-गुणो दण्डः ।। ०२.२१.०४ ।।

भिन्न-मुद्राणां अत्ययो घटिका-स्थाने स्थानं ।। ०२.२१.०५ ।।

राज-मुद्रा-परिवर्तने नाम-कृते वा सपाद-पणिकं वहनं दापयेत् ।। ०२.२१.०६ ।।

ध्वज-मूल-उपस्थितस्य प्रमाणं अर्घं च वैदेहिकाः पण्यस्य ब्रूयुः "एतत्-प्रमाणेनार्घेण पण्यं इदं कः क्रेता" इति ।। ०२.२१.०७ ।।

त्रि-रुद्ध-उषितं अर्थिभ्यो दद्यात् ।। ०२.२१.०८ ।।

क्रेतृ-संघर्षे मूल्य-वृद्धिः सशुल्का कोशं गच्छेत् ।। ०२.२१.०९ ।।

शुल्क-भयात्पण्य-प्रमाण मूल्यं वा हीनं ब्रुवतस्तदतिरिक्तं राजा हरेत् ।। ०२.२१.१० ।।

शुल्कं अष्ट-गुणं वा दद्यात् ।। ०२.२१.११ ।।

तदेव निविष्ट-पण्यस्य भाण्डस्य हीन-प्रतिवर्णकेनार्घ-अपकर्षणे सार-भाण्डस्य फल्गु-भाण्डेन प्रतिच्छादने च कुर्यात् ।। ०२.२१.१२ ।।

प्रतिक्रेतृ-भयाद्वा पण्य-मूल्यादुपरि मूल्यं वर्धयतो मूल्य-वृद्धिं राजा हरेत् । द्वि-गुणं वा शुल्कं कुर्यात् ।। ०२.२१.१३ ।।

तदेवाष्ट-गुणं अध्यक्षस्यच्- छादयतः ।। ०२.२१.१४ ।।

तस्माद्विक्रयः पण्यानां धृतो मितो गणितो वा कार्यः । तर्कः फल्गु-भाण्डानां आनुग्राहिकाणां च ।। ०२.२१.१५ ।।

ध्वज-मूलं अतिक्रान्तानां चाकृत-शुल्कानां शुल्कादष्ट-गुणो दण्डः ।। ०२.२१.१६ ।।

पथिक-उत्पथिकास्तद्विद्युः ।। ०२.२१.१७ ।।

वैवाहिकं अन्वायनं औपायिकं यज्ञ-कृत्य-प्रसव-नैमित्तिकं देवैज्या-चौल-उपनयन-गो-दान-व्रत-दीक्षा-आदिषु क्रिया-विशेषेषु भाण्डं उच्छुल्कं गच्छेत् ।। ०२.२१.१८ ।।

अन्यथा-वादिनः स्तेय-दण्डः ।। ०२.२१.१९ ।।

कृत-शुल्केनाकृत-शुल्कं निर्वाहयतो द्वितीयं एक-मुद्रया भित्त्वा पण्य-पुटं अपहरतो वैदेहकस्य तच्च तावच्च दण्डः ।। ०२.२१.२० ।।

शुल्क-स्थानाद्गोमय-पलालं प्रमाणं कृत्वाअपहरत उत्तमः साहस-दण्डः ।। ०२.२१.२१ ।।

शस्त्र-वर्म-कवच-लोह-रथ-रत्न-धान्य-पशूनां अन्यतमं अनिर्वाह्यं निर्वाहयतो यथाअवघुषितो दण्डः पण्य-नाशश्च ।। ०२.२१.२२ ।।

तेषां अन्यतमस्यऽनयने बहिरेवौच्छुल्को विक्रयः ।। ०२.२१.२३ ।।

अन्त-पालः सपाद-पणिकां वर्तनीं गृह्णीयात्पण्य-वहनस्य । पणिकां एक-खुरस्य । पशूनां अर्ध-पणिकां क्षुद्र-पशूनां पादिकाम् । अंस-भारस्य माषिकां ।। ०२.२१.२४ ।।

नष्ट-अपहृतं च प्रतिविदध्यात् ।। ०२.२१.२५ ।।

वैदेश्यं सार्थं कृत-सार-फल्गु-भाण्ड-विचयनं अभिज्ञानं मुद्रां च दत्त्वा प्रेषयेदध्यक्षस्य ।। ०२.२१.२६ ।।

वैदेहक-व्यञ्जनो वा सार्थ-प्रमाणं राज्ञः प्रेषयेत् ।। ०२.२१.२७ ।।

तेन प्रदेशेन राजा शुल्क-अध्यक्षस्य सार्थ-प्रमाणं उपदिशेत्सर्वज्ञ-ख्यापनार्थं ।। ०२.२१.२८ ।।

ततः सार्थं अध्यक्षोअभिगम्य ब्रूयात्"इदं अमुष्यां उष्य च सार-भाण्डं फल्गु-भाण्डं च । न निहूहितव्यम् । एष राज्ञः प्रभावः" इति ।। ०२.२१.२९ ।।

निहूहतः फल्गु-भाण्डं शुल्क-अष्ट-गुणो दण्डः । सार-भाण्डं सर्व-अपहारः ।। ०२.२१.३० ।।

राष्ट्र-पीडा-करं भाण्डं उच्छिन्द्यादफलं च यत् । ।। ०२.२१.३१अ ब ।।

महा-उपकारं उच्छुल्कं कुर्याद्बीजं च दुर्लभं ।। ०२.२१.३१च्द् ।।

बाह्यं आभ्यन्तरं चऽतिथ्यं ।। ०२.२२.०१ ।।

निष्क्राम्यं प्रवेश्यं च शुल्कं ।। ०२.२२.०२ ।।

प्रवेश्यानां मूल्य-पञ्च-भागः ।। ०२.२२.०३ ।।

पुष्प-फल-शाक-मूल-कन्द-वाल्लिक्य-बीज-शुष्क-मत्स्य-मांसानां षड्-भागं गृह्णीयात् ।। ०२.२२.०४ ।।

शङ्ख-वज्र-मणि-मुक्ता-प्रवाल-हाराणां तज्-जात-पुरुषैः कारयेत्कृत-कर्म-प्रमाण-काल-वेतन-फल-निष्पत्तिभिः ।। ०२.२२.०५ ।।

क्षौम-दुकूल-क्रिमि-तान-कङ्कट-हरि-ताल-मनः-शिला-अञ्जन-हिङ्गुलुक-लोह-वर्ण-धातूनां चन्दन-अगुरु-कटुक-किण्व-अवराणां चर्म-दन्त-आस्तरण-प्रावरण-क्रिमि-जातानां आज-एडकस्य च दश-भागः पञ्च-दश-भागो वा ।। ०२.२२.०६ ।।

वस्त्र-चतुष्पद-द्विपद-सूत्र-कार्पास-गन्ध-भैषज्य-काष्ठ-वेणु-वल्कल-चर्म-मृद्भ-अण्डानां धान्य-स्नेह-क्षार-लवण-मद्य-पक्वान्नादीनां च विंशति-भागः पञ्च-विंशति-भागो वा ।। ०२.२२.०७ ।।

द्वारादेयं शुल्कं पञ्च-भागः आनुग्राहिकं वा यथा-देश-उपकारं स्थापय्तेत् ।। ०२.२२.०८ ।।

जाति-भूमिषु च पण्यानां विक्रयः ।। ०२.२२.०९ ।।

खनिभ्यो धातु-पण्यादाने षट्-छतं अत्ययः ।। ०२.२२.१० ।।

पुष्प-फल-वाटेभ्यः पुष्प-फल-आदाने चतुष्-पञ्चाशत्-पणो दण्डः ।। ०२.२२.११ ।।

षण्डेभ्यः शाक-मूल-कन्द-आदाने पाद-ऊनं द्वि-पञ्चाशत्-पणो दण्डः ।। ०२.२२.१२ ।।

क्षेत्रेभ्यः सर्व-सस्य-आदाने त्रि-पञ्चाशत्-पणः ।। ०२.२२.१३ ।।

पणोअध्यर्ध-पणश्च सीता-अत्ययः ।। ०२.२२.१४ ।।

अतो नव-पुराणां देश-जाति-चरित्रतः । ।। ०२.२२.१५अ ब ।।

पण्यानां स्थापयेच्शुक्लं अत्ययं चापकारतः ।। ०२.२२.१५च्द् ।।

सूत्र-अध्यक्षः सूत्र-वर्म-वस्त्र-रज्जु-व्यवहारं तज्-जात-पुरुषैः कारयेत्  ।। ०२.२३.०१  ।।

ऊर्णा-वल्क-कार्पास-तूल-शण-क्षौमाणि च विधवा-न्यङ्गा-कन्या-प्रव्रजिता-दण्ड-प्रतिकारिणीभी रूप-आजीवा-मातृकाभिर्वृद्ध-राज-दासीभिर्व्युपरत-उपस्थान-देव-दासीभिश्च कर्तयेत्  ।। ०२.२३.०२  ।।

श्लक्ष्ण-स्थूल-मध्यतां च सूत्रस्य विदित्वा वेतनं कल्पयेत् । बह्व्-अल्पतां च   ।। ०२.२३.०३  ।।

सूत्र-प्रमाण ज्ञात्वा तैल-आमलक-उद्वर्तनैरेता अनुगृह्णीयात्  ।। ०२.२३.०४  ।।

तिथिषु प्रतिमान-दानैश्च कर्म कारयितव्याः   ।। ०२.२३.०५  ।।

सूत्र-ह्रासे वेतन-ह्रासो द्रव्य-सारात्  ।। ०२.२३.०६  ।।

कृत-कर्म-प्रमाण-काल-वेतन-फल-निष्पत्तिभिः कारुभिश्च कर्म कारयेत् । प्रतिसंसर्गं च गच्छेत्  ।। ०२.२३.०७  ।।

क्षौम-दुकूल-क्रिमि-तान-राङ्कव-कार्पास-सूत्र-वान-कर्म-अन्तांश्च प्रयुञ्जानो गन्ध-माल्य-दानैरन्यैश्चाउपग्राहिकैराराधयेत्   ।। ०२.२३.०८  ।।

वस्त्र-आस्तरण-प्रावरण-विकल्पानुत्थापयेत्  ।। ०२.२३.०९  ।।

कङ्कट-कर्म-अन्तांश्च तज्-जात-कारु-शिल्पिभिः कारयेत्  ।। ०२.२३.१०  ।।

याश्चानिष्कासिन्यः प्रोषिता विधवा न्यङ्गाः कन्यका वाआत्मानं बिभृयुः ताः स्व-दासीभिरनुसार्य सौपग्रहं कर्म कारयितव्याः   ।। ०२.२३.११  ।।

स्वयं आगच्छन्तीनां वा सूत्र-शालां प्रत्युषसि भाण्ड-वेतन-विनिमयं कारयेत्  ।। ०२.२३.१२  ।।

सूत्र-परीक्षा-अर्थ-मात्रः प्रदीपः   ।। ०२.२३.१३  ।।

स्त्रिया मुख-संदर्शनेअन्य-कार्य-सम्भाषायां वा पूर्वः साहस-दण्डः । वेतन-काल-अतिपातने मध्यमः । अकृत-कर्म-वेतन-प्रदाने च   ।। ०२.२३.१४  ।।

गृहीत्वा वेतनं कर्म-अकुर्वत्या अङ्गुष्ठ-संदंशं दापयेत् । भक्षित-अपहृत-अवस्कन्दितानां च   ।। ०२.२३.१५  ।।

वेतनेषु च कर्म-कराणां अपराधतो दण्डः   ।। ०२.२३.१६  ।।

रज्जु-वर्तकैर्वर्म-कारैश्च स्वयं संसृज्येत   ।। ०२.२३.१७  ।।

भाण्डानि च वरत्र-आदीनि वर्तयेत्  ।। ०२.२३.१८  ।।

सूत्र-वल्कमयी रज्जुर्वरत्रा वैत्र-वैणवीः  । ।। ०२.२३.१९अ ब  ।।

साम्नाह्या बन्ध-नीयाश्च यान-युग्यस्य करयेत्  ।। ०२.२३.१९च्द्  ।।

सूत्र-अध्यक्षः सूत्र-वर्म-वस्त्र-रज्जु-व्यवहारं तज्-जात-पुरुषैः कारयेत्  ।। ०२.२३.०१  ।।

ऊर्णा-वल्क-कार्पास-तूल-शण-क्षौमाणि च विधवा-न्यङ्गा-कन्या-प्रव्रजिता-दण्ड-प्रतिकारिणीभी रूप-आजीवा-मातृकाभिर्वृद्ध-राज-दासीभिर्व्युपरत-उपस्थान-देव-दासीभिश्च कर्तयेत्  ।। ०२.२३.०२  ।।

श्लक्ष्ण-स्थूल-मध्यतां च सूत्रस्य विदित्वा वेतनं कल्पयेत् । बह्व्-अल्पतां च   ।। ०२.२३.०३  ।।

सूत्र-प्रमाण ज्ञात्वा तैल-आमलक-उद्वर्तनैरेता अनुगृह्णीयात्  ।। ०२.२३.०४  ।।

तिथिषु प्रतिमान-दानैश्च कर्म कारयितव्याः   ।। ०२.२३.०५  ।।

सूत्र-ह्रासे वेतन-ह्रासो द्रव्य-सारात्  ।। ०२.२३.०६  ।।

कृत-कर्म-प्रमाण-काल-वेतन-फल-निष्पत्तिभिः कारुभिश्च कर्म कारयेत् । प्रतिसंसर्गं च गच्छेत्  ।। ०२.२३.०७  ।।

क्षौम-दुकूल-क्रिमि-तान-राङ्कव-कार्पास-सूत्र-वान-कर्म-अन्तांश्च प्रयुञ्जानो गन्ध-माल्य-दानैरन्यैश्चाउपग्राहिकैराराधयेत्   ।। ०२.२३.०८  ।।

वस्त्र-आस्तरण-प्रावरण-विकल्पानुत्थापयेत्  ।। ०२.२३.०९  ।।

कङ्कट-कर्म-अन्तांश्च तज्-जात-कारु-शिल्पिभिः कारयेत्  ।। ०२.२३.१०  ।।

याश्चानिष्कासिन्यः प्रोषिता विधवा न्यङ्गाः कन्यका वाआत्मानं बिभृयुः ताः स्व-दासीभिरनुसार्य सौपग्रहं कर्म कारयितव्याः   ।। ०२.२३.११  ।।

स्वयं आगच्छन्तीनां वा सूत्र-शालां प्रत्युषसि भाण्ड-वेतन-विनिमयं कारयेत्  ।। ०२.२३.१२  ।।

सूत्र-परीक्षा-अर्थ-मात्रः प्रदीपः  ।। ०२.२३.१३  ।।

स्त्रिया मुख-संदर्शनेअन्य-कार्य-सम्भाषायां वा पूर्वः साहस-दण्डः । वेतन-काल-अतिपातने मध्यमः । अकृत-कर्म-वेतन-प्रदाने च  ।। ०२.२३.१४  ।।

गृहीत्वा वेतनं कर्म-अकुर्वत्या अङ्गुष्ठ-संदंशं दापयेत् । भक्षित-अपहृत-अवस्कन्दितानां च  ।। ०२.२३.१५  ।।

वेतनेषु च कर्म-कराणां अपराधतो दण्डः  ।। ०२.२३.१६  ।।

रज्जु-वर्तकैर्वर्म-कारैश्च स्वयं संसृज्येत  ।। ०२.२३.१७  ।।

भाण्डानि च वरत्र-आदीनि वर्तयेत्  ।। ०२.२३.१८  ।।

सूत्र-वल्कमयी रज्जुर्वरत्रा वैत्र-वैणवीः  । ।। ०२.२३.१९अ ब  ।।

साम्नाह्या बन्ध-नीयाश्च यान-युग्यस्य करयेत्  ।। ०२.२३.१९च्द्  ।।

सीता-अध्यक्षः कृषि-तन्त्र-शुल्ब-वृक्ष-आयुर्-वेदज्ञस्तज्-ज्ञ-सखो वा सर्व-धान्य-पुष्प-फल-शाक-कन्द-मूल-वाल्लिक्य-क्षौम-कार्पास-बीजानि यथा-कालं गृह्णीयात् ।। ०२.२४.०१ ।।

बहु-हल-परिकृष्टायां स्व-भूमौ दास-कर्म-कर-दण्ड-प्रतिकर्तृभिर्वापयेत् ।। ०२.२४.०२ ।।

कर्षण-यन्त्र-उपकरण-बलीवर्दैश्चएषां असङ्गं कारयेत् । कारुभिश्च कर्मार-कुट्टाक-मेदक-रज्जु-वर्तक-सर्प-ग्राह-आदिभिश्च ।। ०२.२४.०३ ।।

तेषां कर्म-फल-विनिपाते तत्-फल-हानं दण्डः ।। ०२.२४.०४ ।।

षोडश-द्रोणं जाङ्गलानां वर्ष-प्रमाणम् । अध्यर्धं आनूपानां देश-वापानाम् । अर्ध-त्रयोदशाश्मकानाम् । त्रयोविंशतिरवन्तीनाम् । अमितं अपर-अन्तानां हैमन्यानां च । कुल्या-आवापानां च कालतः ।। ०२.२४.०५ ।।

वर्ष-त्रि-भागः पूर्व-पश्चिम-मासयोः । द्वौ त्रि-भागौ मध्यमयोः सुषमा-रूपं ।। ०२.२४.०६ ।।

तस्यौपलधिर्बृहस्पतेः स्थान-गमन-गर्भ-आधानेभ्यः शुक्र-उदय-अस्तमय-चारेभ्यः सूर्यस्य प्रकृति-वैकृताच्च ।। ०२.२४.०७ ।।

सूर्याद्बीज-सिद्धिः । बृहस्पतेः सस्यानां स्तम्ब-कारिता । शुक्राद्वृष्टिः इति ।। ०२.२४.०८ ।।

त्रयः सप्त-अहिका मेघा अशीतिः कण-शीकराः । ।। ०२.२४.०९अ ब ।।

षष्टिरातप-मेघानां एषा वृष्टिः समा हिता ।। ०२.२४.०९च्द् ।।

वातं आतप-योगं च विभजन्यत्र वर्षति । ।। ०२.२४.१०अ ब ।।

त्रीन्करीषांश्च जनयंस्तत्र सस्य-आगमो ध्रुवः ।। ०२.२४.१०च्द् ।।

ततः प्रभूत-उदकं अल्प-उदकं वा सस्यं वापयेत् ।। ०२.२४.११ ।।

शालि-व्रीहि-कोद्रव-तिल-प्रियङ्गु-उदारक-वरकाः पूर्व-वापाः ।। ०२.२४.१२ ।।

मुद्ग-माष-शैम्ब्या मध्य-वापाः ।। ०२.२४.१३ ।।

कुसुम्भ-मसूर-कुलत्थ-यव-गो-धूम-कलाय-अतसी-सर्षपाः पश्चाद्-वापाः ।। ०२.२४.१४ ।।

यथा-ऋतु-वशेन वा बीज-वापाः ।। ०२.२४.१५ ।।

वाप-अतिरिक्तं अर्ध-सीतिकाः कुर्युः । स्व-वीर्य-उपजीविनो वा चतुर्-थ-पञ्च-भागिकाः ।। O२.२४.१६ ।।

यथाइष्टं अनवसित-भागं दद्युः । अन्यत्र कृच्छ्रेभ्यः ।। ऊ२.२४.१७ ।।

स्व-सेतुभ्यो हस्त-प्रावर्तिमं उदक-भागं पञ्चमं दद्युः । स्कन्ध-प्रावर्तिमं चतुर्थम् । स्रोतो-यन्त्र-प्रावर्तिमं च तृतीयम् । चतुर्थं नदी-सरस्-तटाक-कूप-उद्घाटं ।। ऊ२.२४.१८ ।।

कर्म-उदक-प्रमाणेन कैदारं हैमनं ग्रैष्मिकं वा सस्यं स्थापयेत् ।। ऊ२.२४.१९ ।।

शाल्य्-आदि ज्येष्ठम् । षण्डो मध्यमः । इक्षुः प्रत्यवरः ।। ऊ२.२४.२० ।।

इक्षवो हि बह्व्-आबाधा व्यय-ग्राहिणश्च ।। ०२.२४.२१ ।।

फेन-आघातो वल्ली-फलानाम् । परीवाह-अन्ताः पिप्पली-मृद्वीक-इक्षूणाम् । कूप-पर्यन्ताः शाक-मूलानाम् । हरणी-पर्यन्ता हरितकानाम् ।

पाल्यो लवानां गन्ध-भैषज्य-उशीर-ह्रीबेर-पिण्डालुक-आदीनां ।। ०२.२४.२२ ।।

यथा-स्वं भूमिषु च स्थाल्याश्चऽनूप्याश्चओषधीः स्थापयेत् ।। ०२.२४.२३ ।।

तुषार-पायन-मुष्ण-शोषणं चऽ-सप्त-रात्रादिति धान्य-बीजानाम् । त्रि-रात्रं वा पञ्च-रात्रं वा कोशी-धान्यानाम् । मधु-घृत-सूकर-वसाभिः शकृद्-युक्ताभिः काण्ड-बीजानां छेद-लेपो । मधु-घृतेन कन्दानाम् । अस्थि-बीजानां शकृद्-आलेपः । शाखिनां गर्त-दाहो गो-अस्थि-शकृद्भिः काले दौह्रदं च ।। ०२.२४.२४ ।।

प्ररूढांश्चाशुष्क-कटु-मत्स्यांश्च स्नुहि-क्षीरेण पाययेत् ।। ०२.२४.२५ ।।

कार्पास-सारं निर्मोकं सर्पस्य च समाहरेत् । ।। ०२.२४.२६अ ब ।।

न सर्पास्तत्र तिष्ठन्ति धूमो यत्रएष तिष्ठति ।। ०२.२४.२६च्द् ।।

सर्व-जीजानां तु प्रथम-वापे सुवर्ण-उदक-सम्प्लुतां पूर्व-मुष्टिं वापयेद् । अमुं च मन्त्रं ब्रूयात् "प्रजापतये काश्यपाय देवाय च नमः सदा सीता मे ऋध्यतां देवी बीजेषु च धनेषु च ।। ०२.२४.२७ ।।

षण्ड-वाट-गो-पालक-दास-कर्म-करेभ्यो यथा-पुरुष-परिवापं भक्तं कुर्यात् । सपाद-पणिकं च मासं दद्यात् ।। ०२.२४.२८ ।।

कर्म-अनुरूपं कारुभ्यो भक्त-वेतनं ।। ०२.२४.२९ ।।

प्रशीर्णं च पुष्प-फलं देव-कार्य-अर्थं व्रीहि-यवं आग्रयण-अर्थं श्रोत्रियास्तपस्विनश्चऽहरेयुः । राशि-मूलं उञ्छ-वृत्तयः ।। ०२.२४.३० ।।

यथा-कालं च सस्य-आदि जातं जातं प्रवेशयेत् । ।। ०२.२४.३१अ ब ।।

न क्षेत्रे स्थापयेत्किंचित्पलालं अपि पण्डितः ।। ०२.२४.३१च्द् ।।

प्राकाराणां समुच्छ्रयान्वलभीर्वा तथा-विधाः । ।। ०२.२४.३२अ ब ।।

न संहतानि कुर्वीत न तुच्छानि शिरांसि च ।। ०२.२४.३२च्द् ।।

खलस्य प्रकरान्कुर्यान्मण्डल-अन्ते समाश्रितान् । ।। ०२.२४.३३अ ब ।।

अनग्निकाः सौदकाश्च खले स्युः परिकर्मिणः ।। ०२.२४.३३च्द् ।।

सुरा-अध्यक्षः सुरा-किण्व-व्यवहारान्दुर्गे जन-पदे स्कन्ध-आवारे वा तज्-जात-सुरा-किण्व-व्यवहारिभिः कारयेद् । एक-मुखं अनेक-मुखं वा विक्रय-क्रय-वशेन वा ।। ०२.२५.०१ ।।

षट्-शतं अत्ययं अन्यत्र कर्तृ-क्रेतृ-विक्रेतृऋणां स्थापयेत् ।। ०२.२५.०२ ।।

ग्रामादनिर्णयणं असम्पातं च सुरायाः । प्रमाद-भयात्कर्मसु ञ्जिर्दिष्टानाम् । मर्याद-अतिक्रम-भयादार्याणाम् । उत्साह-भयाच्च तीष्क्णानां ।। ०२.२५.०३ ।।

लक्षितं अल्पं वा चतुर्-भागं अर्ध-कुडुबं कुडुबं अर्ध-प्रस्थं प्रस्थं वाइति ज्ञात-शौचा निर्हरेयुः ।। ०२.२५.०४ ।।

पान-अगारेषु वा पिबेयुरसंचारिणः ।। ०२.२५.०५ ।।

निक्षेप-उपनिधि-प्रयोग-अपहृतानां अनिष्ट-उपगतानां च द्रव्याणां ज्ञान-अर्थं अस्वामिकं कुप्यं हिरण्यं चौपलभ्य निष्केप्तारं अन्यत्र व्यपदेशेन ग्राहयेद् । अतिव्यय-कर्तारं अनायति-व्ययं च ।। ०२.२५.०६ ।।

न चानर्घेण कालिकां वा सुरां दद्याद् । अन्यत्र दुष्ट-सुरायाः ।। ०२.२५.०७ ।।

तां अन्यत्र विक्रापयेत् ।। ०२.२५.०८ ।।

दास-कर्म-करेभ्यो वा वेतनं दद्यात् ।। ०२.२५.०९ ।।

वाहन-प्रतिपानं सूकर-पोषणं वा दद्यात् ।। ०२.२५.१० ।।

पान-अगाराण्य्-अनेक-कक्ष्याणि विभक्त-शयन-आसनवन्ति पान-उद्देशानि गन्ध-माल्य-उदकवन्ति ऋतु-सुखानि कारयेत् ।। ०२.२५.११ ।।

तत्रस्थाः प्रकृत्य्-औत्पत्तिकौ व्ययौ गूढा विद्युः । आगन्तूंश्च ।। ०२.२५.१२ ।।

क्रेतृऋणां मत्त-सुप्तानां अलङ्कारात्छादन-हिरण्यानि च विद्युः ।। ०२.२५.१३ ।।

तन्-नाशे वणिजस्तच्च तावच्च दण्डं दद्युः ।। ०२.२५.१४ ।।

वणिजश्स्तु संवृतेषु कक्ष्या-विभागेषु स्व-दासीभिः पेशल-रूपाभिरागन्तूनां वास्तव्यानां चऽर्य-रूपाणां मत्त-सुप्तानां भावं विद्युः ।। ०२.२५.१५ ।।

मेदक-प्रसन्न-आसव-अरिष्ट-मैरेय-मधूनां ।। ०२.२५.१६ ।।

उदक-द्रोणं तण्डुलानां अर्ध-आढकं त्रयः प्रस्थाः किण्वस्यैति मेदक-योगः ।। ०२.२५.१७ ।।

द्वादश-आढकं पिष्टस्य पञ्च प्रस्थाः किण्वस्य क्रमुक-त्वक्-फल-युक्तो वा जाति-सम्भारः प्रसन्ना-योगः ।। ०२.२५.१८ ।।

कपित्थ-तुला फाणितं पञ्च-तौलिकं प्रस्थो मधुन इत्यासव-योगः ।। ०२.२५.१९ ।।

पाद्-अधिको ज्येष्ठः पाद-हीनः कनिष्ठः ।। ऊ२.२५.२० ।।

चिकित्सक-प्रमाणाः प्रत्येकशो विकाराणां अरिष्टाः ।। ऊ२.२५.२१ ।।

मेष-शृङ्गी-त्वक्-क्वाथ-अभिषुतो गुड-प्रतीवापः पिप्पली-मरिच-सम्भारस्त्रि-फला-युक्तो वा मैरेयः ।। ऊ२.२५.२२ ।।

गुड-युक्तानां वा सर्वेषां त्रि-फला-सम्भारः ।। य़्२.२५.२३ ।।

मृद्वीका-रसो मधु ।। ऊ२.२५.२४ ।।

तस्य स्व-देशो व्याख्यानं कापि-शायनं हार-हूरकं इति ।। उ२.२५.२५ ।।

माषकलनीद्रोणमामं सिद्धं वा त्रि-भाग-अधिक-तण्डुलं मोरट-आदीनां कार्षिक-भाग-युक्तं किण्व-बन्धः ।। ऊ२.२५.२६ ।।

पाठा-लोघ्र-तेजोवत्य्-एला-वालुक-मधुक-मधु-रसा-प्रियङ्गु-दारु-हरिद्रा-मरिच-पिप्पलीनां च पञ्च-कार्षिकः सम्भार-योगो मेदकस्य प्रसन्नायाश्च ।। ०२.२५.२७ ।।

मधुक-निर्यूह-युक्ता कट-शर्करा वर्ण-प्रसादनी च ।। ०२.२५.२८ ।।

चोच-चित्रक-विलङ्ग-गज-पिप्पलीनां च कार्षिकः क्रमुक-मधुक-मुस्ता-लोध्राणां द्वि-कार्षिकश्चऽसव-सम्भारः ।। ०२.२५.२९ ।।

दश-भागश्चएषां बीज-बन्धः ।। ०२.२५.३० ।।

प्रसन्ना-योगः श्वेत-सुरायाः ।। ०२.२५.३१ ।।

सहकार-सुरा रस-उत्तरा बीज-उत्तरा वा महा-सुरा सम्भारिकी वा ।। ०२.२५.३२ ।।

तासां मोरटा-पलाश-पत्तूर-मेष-शृङ्गी-करञ्ज-क्षीर-वृक्ष-कषाय-भावितं दग्ध-कट-शर्करा-चूर्णं लोघ्र-चित्रक-विलङ्ग-पाठा-मुस्ता-कलिङ्ग-यव-दारु-हरिद्र-इन्दीवर-शत-पुष्प-अपामार्ग-सप्त-पर्ण-निम्ब-आस्फोत-कल्क-अर्ध-युक्तं अन्तर्-नखो मुष्टिः कुम्भीं राज-पेयां प्रसादयति ।। ०२.२५.३३ ।।

फाणितः पञ्च-पलिकश्चात्र रस-वृद्धिर्देयः ।। ०२.२५.३४ ।।

कुटुम्बिनः कृत्येषु श्वेत-सुराम् । औषध-अर्थं वारिष्टम् । अन्यद्वा कर्तुं लभेरन् ।। ०२.२५.३५ ।।

उत्सव-समाज-यात्रासु चतुर्-अहः सौरिको देयः ।। ०२.२५.३६ ।।

तेष्वननुज्ञातानां प्रहवन-अन्तं दैवसिकं अत्ययं गृह्णीयात् ।। ०२.२५.३७ ।।

सुरा-किण्व-विचयं स्त्रियो बालाश्च कुर्युः ।। ०२.२५.३८ ।।

अराज-पण्याः पञ्चकं शतं शुल्कं दद्युः । सुरका-मेदक-अरिष्ट-मधु-फल-आम्ल-आम्ल-शीधूनां च ।। ०२.२५.३९ ।।

अह्नश्च विक्रयं ज्ञात्वा व्याजीं मान-हिरण्ययोः । ।। ०२.२५.४०अ ब ।।

तथा वैधरणं कुर्यादुचितं चानुवर्तयेत् ।। ०२.२५.४०च्द् ।।

सूना-अध्यक्षः प्रदिष्ट-अभयानां अभय-वन-वासिनां च मृग-पशु-पक्षि-मत्स्यानां बन्ध-वध-हिंसायां उत्तमं दण्डं कारयेत् । कुटुम्बिनां अभय-वन-परिग्रहेषु मध्यमं ।। ०२.२६.०१ ।।

अप्रवृत्त-वधानां मत्स्य-पक्षिणां बन्ध-वध-हिंसायां पाद-ऊन-सप्त-विंशति-पणं अत्ययं कुर्यात् । मृग-पशूनां द्वि-गुणं ।। ०२.२६.०२ ।।

प्रवृत्त-हिंसानां अपरिगृहीतानां षड्-भागं गृह्णीयात् । मत्स्य-पक्षिणां दश-भागं वाअधिकम् । मृग-पशूनां शुल्कं वाअधिकं ।। ०२.२६.०३ ।।

पक्षि-मृगाणां जीवत्षड्-भागं अभय-वनेषु प्रमुञ्चेत् ।। ०२.२६.०४ ।।

सामुद्र-हस्त्य्-अश्व-पुरुष-वृष-गर्दभ-आकृतयो मत्स्याः सारसा नऽदेयास्तटाक-कुल्या-उद्भवा वा क्रौञ्च-उत्क्रोशक-दात्यूह-हंस-चक्रवाक-जीवन्-जीवक-भृङ्ग-राज-चकोर-मत्त-कोकिल-मयूर-शुक-मदन-शारिका विहार-पक्षिणो मङ्गल्याश्चान्येअपि प्राणिनः पक्षि-मृगा हिंसा-बाधेभ्यो रक्ष्याः ।। ०२.२६.०५ ।।

रक्षा-अतिक्रमे पूर्वः साहस-दण्डः ।। ०२.२६.०६ ।।

मृग-पशूनां अनस्थि-मांसं सद्यो-हतं विक्रीणीरन् ।। ०२.२६.०७ ।।

अस्थिमतः प्रतिपातं दद्युः ।। ०२.२६.०८ ।।

तुला-हीने हीन-अष्ट-गुणं ।। ०२.२६.०९ ।।

वत्सो वृषो धेनुश्चएषां अवध्याः ।। ०२.२६.१० ।।

घ्नतः पञ्चाशत्को दण्डः । क्लिष्ट-घातं घातयतश्च ।। ०२.२६.११ ।।

परिशूनं अशिरः-पाद-अस्थि विगन्धं स्वयं-मृतं च न विक्रीणीरन् ।। ०२.२६.१२ ।।

अन्यथा द्वादश-पणो दण्डः ।। ०२.२६.१३ ।।

दुष्टाः पशु-मृग-व्याला मत्स्यश्चाभय-चारिणः । ।। ०२.२६.१४अ ब ।।

अन्यत्र गुप्ति-स्थानेभ्यो वध-बन्धं अवाप्नुयुः ।। ०२.२६.१४च्द् ।।

गणिका-अध्यक्षो गणिका-अन्वयां अगणिका-अन्वयां वा रूप-यौवन-शिल्प-सम्पन्नां सहस्रेण गणिकां कारयेत् । कुटुम्ब-अर्धेन प्रतिगणिकां ।। ०२.२७.०१ ।।

निष्पतिता-प्रेतयोर्दुहिता भगिनी वा कुटुम्बं भरेत । माता वा प्रतिगणिकां स्थापयेत् ।। ०२.२७.०२ ।।

तासां अभावे राजा हरेत् ।। ०२.२७.०३ ।।

सौभाग्य-अलंकार-वृद्ध्या सहस्रेण वारं कनिष्ठं मध्यमं उत्तमं वाआरोपयेत्छत्र-भृङ्गार-व्यजन-शिबिका-पीठिका-रथेषु च विशेष-अर्थं ।। ०२.२७.०४ ।।

सौभाग्य-भङ्गे मातृकां कुर्यात् ।। ०२.२७.०५ ।।

निष्क्रयश्चतुर्-विंशति-साहस्रो गणिकायाः । द्वादश-साहस्रो गणिका-पुत्रस्य ।। ०२.२७.०६ ।।

अष्ट-वर्षात्प्रभृति राज्ञः कुशीलव-कर्म कुर्यात् ।। ०२.२७.०७ ।।

गणिका-दासी भग्न-भोगा कोष्ठ-अगारे महानसे वा कर्म कुर्यात् ।। ०२.२७.०८ ।।

अविशन्ती सपाद-पणं अवरुद्धा मास-वेतनं दद्यात् ।। ०२.२७.०९ ।।

भोगं दायमायं व्ययं आयतिं च गणिकाया निबन्धयेत् । अति-व्यय-कर्म च वारयेत् ।। ०२.२७.१० ।।

मातृ-हस्तादन्यत्र अभरण-न्यासे स-पाद-चतुष्-पणो दण्डः ।। ०२.२७.११ ।।

स्वापतेयं विक्रयं आधानं वा नयन्त्याः स-पाद-पञ्चाशत्-पणः पणोअर्ध-पण-च्छेदने ।। ०२.२७.१२ ।।

अकामायाः कुमार्या वा साहसे उत्तमो दण्डः । स-कामायाः पूर्वः साहस-दण्डः ।। ०२.२७.१३ ।।

गणिकां अकामां रुन्धतो निष्पातयतो वा व्रण-विदारणेन वा रूपं-उपघ्नतः सहस्रं दण्डः ।। ०२.२७.१४ ।।

स्थान्-विशेषेण वा दण्ड-वृद्धिः आ-निष्क्रय-द्वि-गुणात् ।। ०२.२७.१५ ।।

प्राप्त-अधिकारं गणिकां घतयतो निष्क्रय-त्रि-गुणो दण्डः ।। ०२.२७.१६ ।।

मातृका-दुहितृका-रूप-दासीनां घाते उत्तमः साहस-दण्डः ।। ०२.२७.१७ ।।

सर्वत्र प्रथमेअपराधे प्रथमः । द्वितीये द्वि-गुणः । तृतीये त्रि-गुणः । चतुर्थे यथा-कामी स्यात् ।। ०२.२७.१८ ।।

राज-आज्ञया पुरुषं अनभिगच्छन्ती गणिका शिफा-सहस्रं लभीत । पञ्च-सहस्रं वा दण्डः ।। ०२.२७.१९ ।।

भोगं गृहीत्वा द्विषत्या भोग-द्वि-गुणो दण्डः ।। ०२.२७.२० ।।

वसति-भोग-अपहारे भोगं अष्ट-गुणं दद्यादन्यत्र व्याधि-पुरुष-दोषेभ्यः ।। ०२.२७.२१ ।।

पुरुषं घ्नत्याश्चिता-प्रतापेअप्सु प्रवेशनं वा ।। ०२.२७.२२ ।।

गणिका-भरणं अर्थं भोगं वाअपहरतोअष्ट-गुणो दण्डः ।। ०२.२७.२३ ।।

गणिका भोगं आयतिं पुरुषं च निवेदयेत् ।। ०२.२७.२४ ।।

एतेन नट-नर्तक-गायन-वादक-वाग्-जीवन-कुशीलव-प्लवक-सौभिक-चारणानां स्त्री-व्यवहारिणां स्त्रियो गूढ-आजीवाश्च व्याख्याताः ।। ०२.२७.२५ ।।

तेषां तूर्यं आगन्तुकं पञ्च-पणं प्रेक्षा-वेतनं दद्यात् ।। ०२.२७.२६ ।।

रूप-आजीवा भोग-द्वय-गुणं मासं दद्युः ।। ०२.२७.२७ ।।

गीत-वाद्य-पाठ्य-नृत्य-नाट्य-अक्षर-चित्र-वीणा-वेणु-मृदङ्ग-पर-चित्त-ज्ञान-गन्ध-माल्य-सम्यूहन-संवादन-संवाहन-वैशिक-कला-ज्ञानानि गणिका दासी रङ्ग-उपजीविनीश्च ग्राहयतो राज-मण्डलादाजीवं कुर्यात् ।। ०२.२७.२८ ।।

गणिका-पुत्रान्रङ्ग-उपजीविनां च मुख्यान्निष्पादयेयुः । सर्व-ताल-अवचराणां च ।। ०२.२७.२९ ।।

संज्ञा-भाषा-अन्तरज्ञाश्च स्त्रियस्तेषां अनात्मसु । ।। ०२.२७.३०अ ब ।।

चार-घात-प्रमाद-अर्थं प्रयोज्या बन्धु-वाहनाः ।। ०२.२७.३०च्द् ।।

नाव्-अध्यक्षः समुद्र-सम्यान-नदी-मुखतर-प्रचारान्देव-सरो-विसरो-नदी-तरांश्च स्थानीय-आदिष्ववेक्षेत ।। ०२.२८.०१ ।।

तद्-वेला-कूल-ग्रामाः क्लृप्तं दद्युः ।। ०२.२८.०२ ।।

मत्स्य-बन्धका नौका-भाटकं षड्-भागं दद्युः ।। ०२.२८.०३ ।।

पत्तन-अनुवृत्तं शुल्क-भागं वणिजो दद्युः । यात्रा-वेतनं राज-नौभिः सम्पतन्तः ।। ०२.२८.०४ ।।

शङ्ख-मुक्ता-ग्राहिणो नौ-भाटकं दद्युः । स्व-नौभिर्वा तरेयुः ।। ०२.२८.०५ ।।

अध्यक्षश्चएषां खन्य्-अध्यक्षेण व्याख्यातः ।। ०२.२८.०६ ।।

पत्तन-अध्यक्ष-निबद्धं पण्य-पत्तन-चारित्रं नाव्-अध्यक्षः पालयेत् ।। ०२.२८.०७ ।।

मूढ-वात-आहता नावः पिताइवानुगृह्णीयात् ।। ०२.२८.०८ ।।

उदक-प्राप्तं पण्यं अशुल्कं अर्ध-शुल्कं वा कुर्यात् ।। ०२.२८.०९ ।।

यथा-निर्दिष्टाश्चएताः पण्य-पत्तन-यात्रा-कालेषु प्रेषयेत् ।। ०२.२८.१० ।।

सम्यातीर्नावः क्षेत्र-अनुगताः शुल्कं याचेत् ।। ०२.२८.११ ।।

हिंस्रिका निर्घातयेत् । अमित्र-विषय-अतिगाः पण्य-पत्तन-चारित्र-उपघातिकाश्च ।। ०२.२८.१२ ।।

शासक-निर्यामक-दात्र--रश्मि-ग्राहक-उत्सेचक-अधिष्ठिताश्च महा-नावो हेमन्त-ग्रीष्म-तार्यासु महा-नदीषु प्रयोजयेत् । क्षुद्रिकाः क्षुद्रिकासु वर्षा-स्राविणीषु ।। ०२.२८.१३ ।।

बाध-तीर्थाश्चएताः कार्या राज-द्विष्ट-कारिणां तरण-भयात् ।। ०२.२८.१४ ।।

अकालेअतीर्थे च तरतः पूर्वः साहस-दण्डः ।। ०२.२८.१५ ।।

काले तीर्थे चानिषृष्ट-तारिणः पाद-ऊन-सप्त-विंशति-पणस्तर-अत्ययः ।। ०२.२८.१६ ।।

कैवर्तक-अष्ट-तृण-भार-पुष्प-फल-वाट-षण्ड-गो-पालकानां अनत्ययः । सम्भाव्य-दूत-अनुपातिनां च सेना-भाण्ड-प्रयोगाणां च स्व-तरणैस्तरताम् । बीज-भक्त-द्रव्य-उपस्कारांश्चऽनूप-ग्रामाणां तारयतां ।। ०२.२८.१७ ।।

ब्राह्मण-प्रव्रजित-बाल-वृद्ध-व्याधित-शासन-हर-गर्भिण्यो नाव्-अध्यक्ष-मुद्राभिस्तरेयुः ।। ०२.२८.१८ ।।

कृत-प्रवेशाः पारविषयिकाः सार्थ-प्रमाणा वा प्रविशेयुः ।। ०२.२८.१९ ।।

परस्य भार्यां कन्यां वित्तं वाअपहरन्तं शवित्तं वाअपहरन्तं शङ्कितं आविग्नं उद्भाण्डी-कृतं महा-भाण्डेन मूर्ध्नि भारेणावच्छादयन्तं सद्यो-गृहीत-लिङ्गिनं अलिङ्गिनं वा प्रव्रजितं अलक्ष्य-व्याधितं भय-विकारिणं गूढ-सार-भाण्ड-शासन-शस्त्र-अग्नियोगं विष-हस्तं दीर्घ-पथिकं अमुद्रं चौपग्राहयेत् ।। ०२.२८.२० ।।

क्षुद्र-पशुर्मनुष्यश्च स-भारो माषकं दद्यात् । शिरो-भारः काय-भारो गवाश्वं च द्वौ । उष्ट्र-महिषं चतुरः । पञ्च लभुयानम् । षड्गोलिङ्गम् । सप्त शकटम् । पन्य-भारः पादं ।। ०२.२८.२१ ।।

तेन भाण्ड-भारो व्याख्यातः ।। ०२.२८.२२ ।।

द्वि-गुणो महा-नदीषु तरः ।। ०२.२८.२३ ।।

क्लृप्तं आनूप-ग्रामा भक्त-वेतनं दद्युः ।। ०२.२८.२४ ।।

प्रत्यन्तेषु तराः शुल्कं आतिवाहिकं वर्तनीं च गृह्णीयुः । निर्गच्छतश्चामुद्र-द्रव्यस्य भाण्डं हरेयुः । अतिभारेणावेलायां अतिर्थे तरतश्च ।। ०२.२८.२५ ।।

पुरुष-उपकरण-हीनायां असंस्कृतायां वा नावि विपन्नायां नाव्-अध्ह्यक्षो नष्टं विनष्टं वाअभ्यावहेत् ।। ०२.२८.२६ ।।

सप्त-अह-वृत्तां आषाढीं कार्त्तिकीं चान्तरा तरः । ।। ०२.२८.२७अ ब ।।

कार्मिकः प्रत्ययं दद्यान्नित्यं चऽह्निकं आवहेत् ।। ०२.२८.२७च्द् ।।

गो-अध्यक्षो वेतन-उपग्राहिकं कर-प्रतिकरं भग्न-उत्सृष्टकं भाग-अनुप्रविष्टकं व्रज-पर्यग्रं नष्टं विनष्टं क्षीर-घृत-संजातं चौपलभेत ।। ०२.२९.०१ ।।

गो-पालक-पिण्डारक-दोहक-मन्थक-लुब्धकाः शतं शतं धेनूनां हिरण्य-भृताः पालयेयुः ।। ०२.२९.०२ ।।

क्षीर-घृत-भृता हि वत्सानुपहन्युः इति वेतन-उपग्राहिकं ।। ०२.२९.०३ ।।

जरद्गु-धेनु-गर्भिणी-पष्ठौही-वत्सतरीणां सम-विभागं रूप-शतं एकः पालयेत् ।। ०२.२९.०४ ।।

घृतस्याष्टौ वारकान्पणिकं पुच्छं अङ्क-चर्म च वार्षिकं दद्यात् इति कर-प्रतिकरः ।। ०२.२९.०५ ।।

व्याधिता-न्यङ्गा-अनन्य-दोही-दुर्दोहा-पुत्रघ्नीनां च सम-विभागं रूप-शतं पालयन्तस्तज्-जातिकं भागं दद्युः इति भग्न-उत्षृष्टकं ।। ०२.२९.०६ ।।

पर-चक्र-अटवी-भयादनुप्रविष्टानां पशूनां पालन-धर्मेण दश-भगं दद्युः इति भाग-अनुप्रविष्टकं ।। ०२.२९.०७ ।।

वत्सा वत्सतरा दम्या वहिनो वृषा उक्षाणश्च पुंगवाः । युग-वाहन-शकट-वहा वृषभाः सूना-महिषाः पृष्ट-स्कन्ध-वाहिनश्च महिषाः । वत्सिका वत्सतरी पष्टहुही गर्भिणी धेनुश्चाप्रजाता वन्ध्याश्च गावो महिष्यश्च । मास-द्वि-मास-जातास्तासां उपजा वत्सा वत्सिकाश्च ।। ०२.२९.०८ ।।

मास-द्वि-मास-जातानङ्कयेत् ।। ०२.२९.०९ ।।

मास-द्वि-मास-पर्युषितं अङ्कयेत् ।। ०२.२९.१० ।।

अङ्कं चिह्नं वर्णं शृङ्ग-अन्तरं च लक्षणं एवं उपजा निबन्धयेत् इति व्रज-पर्यग्रं ।। ०२.२९.११ ।।

चोर-हृतं अन्य-यूथ-प्रविष्टं अवलीनं वा नष्टं ।। ०२.२९.१२ ।।

पङ्क-विषम-व्याधि-जरा-तोय-आहार-अवसन्नं वृक्ष-तट-काष्ठ-शिला-अभिहतं ईशान-व्याल-सर्प-ग्राह-दाव-अग्नि-विपन्नं विनष्टं ।। ०२.२९.१३ ।।

प्रमादादभ्यावहेयुः ।। ०२.२९.१४ ।।

एवं रूप-अग्रं विद्यात् ।। ०२.२९.१५ ।।

स्वयं हन्ता घातयिता हर्ता हारयिता च वध्यः ।। ०२.२९.१६ ।।

पर-पशूनां राज-अङ्केन परिवर्तयिता रूपस्य पूर्वं साहस-दण्डं दद्यात् ।। ०२.२९.१७ ।।

स्व-देशीयानां चोर-हृतं प्रत्यानीय पणितं रूपं हरेत् ।। ०२.२९.१८ ।।

पर-देशीयानां मोक्षयिताअर्धं हरेत् ।। ०२.२९.१९ ।।

बाल-वृद्ध-व्याधितानां गो-पालकाः प्रतिकुर्युः ।। ०२.२९.२० ।।

लुब्धक-श्व-गणिभिरपास्तस्तेनाव्याल-पराबाध-भयं ऋतु-विभक्तं अरण्यं चारयेयुः ।। ०२.२९.२१ ।।

सर्प-व्याल-त्रासन-अर्थं गो-चर-अनुपात-ज्ञान-अर्थं च त्रस्नूनां घण्टा-तूर्यं च बध्नीयुः ।। ०२.२९.२२ ।।

सम-व्यूढ-तीर्थं अकर्दम-ग्राहं उदकं अवतारयेयुः पालयेयुश्च ।। ०२.२९.२३ ।।

स्तेन-व्याल-सर्प-ग्राह-गृहीतं व्याधि-जरा-अवसन्नं चऽवेदयेयुः । अन्यथा रूप-मूल्यं भजेरन् ।। ०२.२९.२४ ।।

कारण-मृतस्याङ्क-चर्म गो-महिषस्य । कर्ण-लक्षणं अज-अविकानाम् । पुच्छं अङ्क-चर्म चाश्व-खर-उष्ट्राणाम् । बाल-चर्म-बस्ति-पित्त-स्नायु-दन्त-खुर-शृङ्ग-अस्थीनि चऽहरेयुः ।। ०२.२९.२५ ।।

मांसं आर्द्रं शुष्कं वा विक्रीणीयुः ।। ०२.२९.२६ ।।

उदश्वित्-श्व-वराहेभ्यो दद्युः ।। ०२.२९.२७ ।।

कूर्चिकां सेना-भक्त-अर्थं आहरेयुः ।। ०२.२९.२८ ।।

किलाटो घाण-पिण्याक-क्लेद-अर्थः ।। ०२.२९.२९ ।।

पशु-विक्रेता पादिकं रूपं दद्यात् ।। ०२.२९.३० ।।

वर्षा-शरद्-हेमन्तानुभयतः-कालं दुह्युः । शिशिर-वसन्त-ग्रीष्मानेक-कालं ।। ०२.२९.३१ ।।

द्वितीय-काल-दोग्धुरङ्गुष्ठच्-छेदो दण्डः ।। ०२.२९.३२ ।।

दोहन-कालं अतिक्रामतस्तत्-फल-हानं दण्डः ।। ०२.२९.३३ ।।

एतेन नस्य-दम्य-युग-पिङ्गन-वर्तन-काला व्याख्याताः ।। ०२.२९.३४ ।।

क्षीर-द्रोणे गवां घृत-प्रस्थः । पञ्च-भाग-अधिको महिषीणाम् । द्वि-भाग-अधिकोअज-अवीनां ।। ०२.२९.३५ ।।

मन्थो वा सर्वेषां प्रमाणं ।। ०२.२९.३६ ।।

भूमि-तृण-उदक-विशेषाद्धि क्षीर-घृत-वृद्धिर्भवति ।। ०२.२९.३७ ।।

यूथ-वृषं वृषेणावपातयतः पूर्वः साहस-दण्डः । घातयत उत्तमः ।। ०२.२९.३८ ।।

वर्ण-अवरोधेन दशती रक्षा ।। ०२.२९.३९ ।।

उपनिवेश-दिग्-विभागो गो-प्रचाराद्बलान्वयतो वा गवां रक्षा-सामर्थ्याच्च ।। ०२.२९.४० ।।

अजावीनां षण्-मासिकी-मूर्णां ग्राहयेत् ।। ०२.२९.४१ ।।

तेनाश्व-खर-उष्ट्र-वराह-व्रजा व्याख्याताः ।। ०२.२९.४२ ।।

बलीवर्दानां नस्य-अश्व-भद्र-गति-वाहिनां यव-सस्य-अर्ध-भारस्तृणस्य द्वि-गुणम् । तुला घाण-पिण्याकस्य । दश-आढकं कण-कुण्डकस्य । पञ्च-पलिकं मुख-लवनाम् । तैल-कुडुबो नस्यं प्रस्थः पानं । मांस-तुला । दध्नश्चऽढकम् । यव-द्रोणं माषाणां वा पुलाकः । क्षीर-द्रोणं अर्ध-आढकं वा सुरायाः स्नेह-प्रस्थः क्षार-दश-पलं शृङ्गिबेर-पलं च प्रतिपानं ।। ०२.२९.४३ ।।

पाद-ऊनं अश्वतर-गो-खराणाम् । द्वि-गुणं महिष-उष्ट्राणां ।। ०२.२९.४४ ।।

कर्म-कर-बलीवर्दानां पायन-अर्थानां च धेनूनां कर्म-कालतः फलतश्च विधा-दानं ।। ०२.२९.४५ ।।

सर्वेषां तृण-उदक-प्राकाम्यं ।। ०२.२९.४६ ।।

इति गो-मण्डलं व्याख्यातं ।। ०२.२९.४७ ।।

पञ्च-ऋषभं खर-अश्वानां अज-अवीनां दश-ऋषभं । ।। ०२.२९.४८अ ब ।।

शत्यं गो-महिष-उष्ट्राणां यूथं कुर्याच्चतुर्-वृषं ।। ०२.२९.४८च्द् ।।

अश्व-अध्यक्षः पण्य-आगारिकं क्रय-उपागतं आहव-लब्धं आजातं साहाय्य-आगतकं पण-स्थितं यावत्-कालिकं वाअश्व-पर्यग्रं कुल-वयो-वर्ण-चिह्न-वर्ग-आगमैर्लेखयेत् ।। ०२.३०.०१ ।।

अप्रशस्त-न्यङ्ग-व्याधितांश्चऽवेदयेत् ।। ०२.३०.०२ ।।

कोश-कोष्ठ-अगाराभ्यां च गृहीत्वा मास-लाभं अश्व-वाहश्चिन्तयेत् ।। ०२.३०.०३ ।।

अश्व-विभवेनऽयतां अश्वायां अद्वि-गुण-विस्तारां चतुर्-द्वार-उपावर्तन-मध्यां सप्रग्रीवां प्रद्वार-आसन-फलक-युक्तानां वानर-मयूर-पृषत-नकुल-चकोर-शुक-सारिक-आकीर्णां शालां निवेशयेत् ।। ०२.३०.०४ ।।

अश्वायां अचतुर्-अश्र-श्लक्ष्ण-फलक-आस्तारं सखादन-कोष्ठकं समूत्र-पुरीष-उत्सर्गं एक-एकशः प्रान्-मुखं उदन्-मुखं वा स्थानं निवेशयेत् ।। ०२.३०.०५ ।।

शाला-वशेन वा दिग्-विभागं कल्पयेत् ।। ०२.३०.०६ ।।

वडवा-वृष-किशोराणां एक-अन्तेषु ।। ०२.३०.०७ ।।

वडवायाः प्रजतायास्त्रि-रात्रं घृत-प्रस्थः पानं ।। ०२.३०.०८ ।।

अत ऊर्ध्वं सक्तु-प्रस्थः स्नेह-भैषज्य-प्रतिपानं दश-रात्रं ।। ०२.३०.०९ ।।

ततः पुलाको यवसं आर्तवश्चऽहारः ।। ०२.३०.१० ।।

दश-रात्रादूर्ध्वं किशोरस्य घृत-चतुर्-भागः सक्तु-कुडुबः क्षीर-प्रस्थश्चऽहार आ-षण्-मासात् ।। ०२.३०.११ ।।

ततः परं मास-उत्तरं अर्ध-वृद्धिर्यव-प्रस्थ आ-त्रि-वर्षात् । द्रोण आ-चतुर्-वर्षात् ।। ०२.३०.१२ ।।

अत ऊर्ध्वं चतुर्-वर्षः पञ्च-वर्षो वा कर्मण्यः पूर्ण-प्रमाणः ।। ०२.३०.१३ ।।

द्वात्रिंशद्-अङ्गुलं मुखं उत्तम-अश्वस्य । पञ्च-मुखान्यायामो । विंशत्य्-अङ्गुला जङ्घा । चतुर्-जङ्घ उत्सेधः ।। ०२.३०.१४ ।।

त्र्य्-अङ्गुल-अवरं मध्यम-अवरयोः ।। ०२.३०.१५ ।।

शत-अङ्गुलः परिणाहः ।। ०२.३०.१६ ।।

पञ्च-भाग-अवरो मध्यम-अवरयोः ।। ०२.३०.१७ ।।

उत्तम-अश्वस्य द्वि-द्रोणं शालि-व्रीहि-यव-प्रियङ्गूणां अर्ध-शुष्कं अर्ध-सिद्धं वा मुद्ग-माषाणां वा पुलाकः स्नेह-प्रस्थश्च । पञ्च-पलं लवणस्य । मांसं पञ्चाशत्-पलिकं रसस्यऽढकं द्वि-गुणं वा दध्नः पिण्ड-क्लेदन-अर्थम् । क्षार-पञ्च-पलिकः सुरायाः प्रस्थः पयसो वा द्वि-गुणः प्रतिपानं ।। ०२.३०.१८ ।।

दीर्घ-पथ-भार-क्लान्तानां च खादन-अर्थं स्नेह-प्रस्थोअनुवासनं कुडुबो नस्य-कर्मणः । यवसस्यार्ध-भारस्तृणस्य द्वि-गुणः षड्-अरत्नि-परिक्षेपः पुञ्जील-ग्रहो वा ।। ०२.३०.१९ ।।

पाद-अवरं एतन्मध्यम-अवरयोः ।। ०२.३०.२० ।।

उत्तम-समो रथ्यो वृषश्च मध्यमः ।। ०२.३०.२१ ।।

मध्यम-समश्चावरः ।। ०२.३०.२२ ।।

पाद-हीनं वडवानां पारशमानां च ।। ०२.३०.२३ ।।

अतोअर्धं किशोराणां च ।। ०२.३०.२४ ।।

इति विधा-योगः ।। ०२.३०.२५ ।।

विधा-पाचक-सूत्र-ग्राहक-चिकित्सकाः प्रतिस्वाद-भाजः ।। ०२.३०.२६ ।।

युद्ध-व्याधि-जरा-कर्म-क्षीणाः पिण्ड-गोचरिकाः स्युः ।। ०२.३०.२७ ।।

असमर-प्रयोग्याः पौर-जानपदानां अर्थेन वृषा वडवास्वायोज्याः ।। ०२.३०.२८ ।।

प्रयोग्यानां उत्तमाः काम्बोज-सैन्धव-आरट्ट-वनायुजाः । मध्यमा बाह्लीक-पापेयक-सौवीरक-तैतलाः । शेषाः प्रत्यवराः ।। ०२.३०.२९ ।।

तेषां तीक्ष्ण-भद्र-मन्द-वशेन साम्नाह्यं औपवाह्यकं वा कर्म प्रयोजयेत् ।। ०२.३०.३० ।।

चतुर्-अश्रं कर्म-अश्वस्य साम्नाह्यं ।। ०२.३०.३१ ।।

वल्गनो नीचैर्गतो लङ्घनो घोरणो नारोष्ट्रश्चाउपवाह्याः ।। ०२.३०.३२ ।।

तत्र-औपवेणुको वर्धमानको यमक आलीढ-प्लुतः पृथुग्-अस्त्रिक-चाली च वल्गनः ।। ०२.३०.३३ ।।

स एव शिरः-कर्ण-विशुद्धो नीचैर्गतः । षोडश-मार्गो वा ।। ०२.३०.३४ ।।

प्रकीर्णकः प्रकीर्ण-उत्तरो निषण्णः पार्श्व-अनुवृत्त ऊर्मि-मार्गः शरभ-क्रीडितः शरभ-प्लुतस्त्रि-तालो बाह्य-अनुवृत्तः पञ्च-पाणिः सिंह-आयतः स्वाधूतः क्लिष्टः श्लिङ्गितो बृंहितः पुष्प-अभिकीर्णश्चैति नीचैर्गत-मार्गः ।। ०२.३०.३५ ।।

कपि-प्लुतो भेक-प्लुतेण-प्लुतएक-पाद-प्लुतः कोकिल-संचार्य्-उरस्यो बक-चारी च लङ्घनः ।। ०२.३०.३६ ।।

काङ्को वारि-काङ्को मायूरोअर्ध-मायूरो नाकुलोर्ध-नाकुलो वाराहोअर्ध-वाराहश्चैति धोरणः ।। ०२.३०.३७ ।।

संज्ञा-प्रतिकारो नार-उष्ट्रैति ।। ०२.३०.३८ ।।

षण्णव द्वादशैति योजनान्य्ध्वा रथ्यानाम् । पञ्च योजनान्यर्ध-अष्टमानि दशैति पृष्ठ-वाहिनां अश्वानां अध्वा ।। ०२.३०.३९ ।।

विक्रमो भद्र-अश्वासो भार-वाह्य इति मार्गाः ।। ०२.३०.४० ।।

विक्रमो वल्गितं उपकण्ठं उपजवो जवश्च धाराः ।। ०२.३०.४१ ।।

तेषां बन्धन-उपकरणं योग्य-आचार्याः प्रतिदिशेयुः । सांग्रामिकं रथ-अश्व-अलंकारं च सूताः ।। ०२.३०.४२ ।।

अश्वानां चिकित्सकाः शरीर-ह्रास-वृद्धि-प्रतीकारं ऋतु-विभक्तं चऽहारं ।। ०२.३०.४३ ।।

सूत्र-ग्राहक-अश्व-बन्धक-यावसिक-विधा-पाचक-स्थान-पाल-केश-कार-जाङ्गुलीविदश्च स्व-कर्मभिरश्वानाराधयेयुः ।। ०२.३०.४४ ।।

कर्म-अतिक्रमे चएषां दिवस-वेतनच्-छेदनं कुर्यात् ।। ०२.३०.४५ ।।

नीराजन-उपरुद्धं वाहयतश्चिकित्सक-उपरुद्धं वा द्वादश-पणो दण्डः ।। ०२.३०.४६ ।।

क्रिया-भैषज्य-सङ्गेन व्याधि-वृद्धौ प्रतीकार-द्वि-गुणो दण्डः ।। ०२.३०.४७ ।।

तद्-अपराधेन वैलोम्ये पत्त्र-मूल्यं दण्डः ।। ०२.३०.४८ ।।

तेन गो-मण्डलं खर-उष्ट्र-महिषं अज-अविकं च व्याख्यातं ।। ०२.३०.४९ ।।

द्विरह्नः स्नानं अश्वानां गन्ध-माल्यं च दापयेत् । ।। ०२.३०.५०अ ब ।।

कृष्ण-संधिषु भूत-इज्याः शुक्लेषु स्वस्ति-वाचनं ।। ०२.३०.५०च्द् ।।

नीराजनां आश्वयुजे कारयेन्नवमेअहनि । ।। ०२.३०.५१अ ब ।।

यात्रा-आदाववसाने वा व्याधौ वा शान्तिके रतः ।। ०२.३०.५१च्द् ।।

हस्त्य्-अध्यक्षो हस्ति-वन-रक्षां दम्य-कर्म-क्षान्तानां हस्ति-हस्तिनी-कलभानां शाला-स्थान-शय्या-कर्म-विधा-यवस-प्रमाणं कर्मस्वायोगं बन्धन-उपकरणं सांग्रामिकं अलंकारं चिकित्सक-अनीकस्थ-औपस्थायिक-वर्गं चानुतिष्ठेत् ।। ०२.३१.०१ ।।

हस्त्य्-आयाम-द्वि-गुण-उत्सेध-विष्कम्भ-आयामां हस्तिनी-स्थान-अधिकां सप्रग्रीवां कुमारी-संग्रहां प्रान्-मुखीं उदन्-मुखीं वा शालां निवेशयेत् ।। ०२.३१.०२ ।।

हस्त्य्-आयाम-चतुर्-अश्र-श्लक्ष्ण-आलान-स्तम्भ-फलक-आस्तरकं समूत्र-पुरीष-उत्सर्गं स्थानं निवेशयेत् ।। ०२.३१.०३ ।।

स्थान-समां शय्यां अर्ध-अपाश्रयां दुर्गे साम्नाह्य-औपवाह्यानां बहिर्दम्य-व्यालानां ।। ०२.३१.०४ ।।

प्रथम-सप्तम अष्टम-भागावह्नः स्नान-कालौ । तद्-अनन्तरं विधायाः ।। ०२.३१.०५ ।।

पूर्व-अह्ने व्यायाम-कालः । पश्च-अह्नः प्रतिपान-कालः ।। ०२.३१.०६ ।।

रात्रि-भागौ द्वौ स्वप्न-काला । त्रि-भागः संवेशन-उत्थानिकः ।। ०२.३१.०७ ।।

ग्रीष्मे ग्रहण-कालः ।। ०२.३१.०८ ।।

विंशति-वर्षो ग्राह्यः ।। ०२.३१.०९ ।।

विक्को मोढो मक्कणो व्याथितो गर्भिणी धेनुका हस्तिनी चाग्राह्याः ।। ०२.३१.१० ।।

सप्त-अरत्नि उत्सेधो नव-आयामो दश परिणाहः प्रमाणतश्चत्वारिंशद्-वर्षो भवत्युत्तमः । त्रिंशद्-वर्षो मध्यमः । पञ्च-विंशति-वर्षोअवरः ।। ०२.३१.११ ।।

तयोः पाद-अवरो विधा-विधिः ।। ०२.३१.१२ ।।

अरत्नौ तणुल-द्रोणः । अर्ध-आढकं तैलस्य । सर्पिषस्त्रयः प्रस्थाः । दश-पलं लवणस्य । मांसं पञ्चाशत्-पलिकम् । रसस्यऽढकं द्वि-गुणं वा दध्नः पिण्ड-क्लेदन-अर्थम् । क्षार-दश-पलिकं मद्यस्यऽढकं द्वि-गुणं वा पयसः प्रतिपानम् । गात्र-अवसेकस्तैल-प्रस्थः । शिरसोअष्ट-भागः प्रादीपिकश्च । यवसस्य द्वौ भारौ सपादौ । शष्पस्य शुष्कस्यार्ध-तृतीयो भारः । कडङ्करस्यानियमः ।। ०२.३१.१३ ।।

सप्त-अरत्निना तुल्य-भोजनोअष्ट-अरत्निरत्यरालः ।। ०२.३१.१४ ।।

यथा-हस्तं अवशेषः षड्-अरत्निः पञ्च-अरत्निश्च ।। ०२.३१.१५ ।।

क्षीर-यावसिको विक्कः क्रीडा-अर्थं ग्राह्यः ।। ०२.३१.१६ ।।

संजात-लोहिता प्रतिच्छन्ना सम्लिप्त-पक्षा सम-कक्ष्या व्यतिकीर्ण-मांसा सम-तल्प-तला जात-द्रोणिकाइति शोभाः ।। ०२.३१.१७ ।।

शोभा-वशेन व्यायामं भद्रम मन्दं च कारयेत् । ।। ०२.३१.१८अ ब ।।

मृगं संकीर्ण-लिङ्गं च कर्मस्वृतु-वशेन वा ।। ०२.३१.१८च्द् ।।

कर्म-स्कन्धाश्चत्वारो दम्यः साम्नाह्य औपवाह्यो व्यालश्च ।। ०२.३२.०१ ।।

तत्र दम्यः पञ्च-विधः स्कन्ध-गतः स्तम्भ-गतो वारि-गतोअवपात-गतो यूथ-गतश्चैति ।। ०२.३२.०२ ।।

तस्यौपविचारो विक्क-कर्म ।। ०२.३२.०३ ।।

साम्नाह्यः सप्त-क्रिया-पथ उपस्थानं संवर्तनं सम्यानं वध-आवधो हस्ति-युद्धं नाग-रायणं सांग्रामिकं च ।। ०२.३२.०४ ।।

तस्यौपविचारः कक्ष्या-कर्म ग्रैवेय-कर्म यूथ-कर्म च ।। ०२.३२.०५ ।।

औपवाह्योअष्ट-विध आचरणः कुञ्जर-औपवाह्यो धोरण आधान-गतिको यष्ट्य्-उपवाह्यस्तोत्र-उपवाह्यः शुद्ध-उपवाह्यो मार्गयुकश्चैति ।। ०२.३२.०६ ।।

तस्यौपविचारः शारद-कर्म हीन-कर्म नार-उष्ट्र-कर्म च ।। ०२.३२.०७ ।।

व्यालएक-क्रिया-पथः शङ्कितोअवरुद्धो विषमः प्रभिन्नः प्रभिन्न-विनिश्चयो मद-हेतु-विनिश्चयश्च ।। ०२.३२.०८ ।।

तस्यौपविचार आयम्यएक-रक्षा-कर्म ।। ०२.३२.०९ ।।

क्रिया-विपन्नो व्यालः शुद्धः सु-व्रतो विषमः सर्व-दोष-प्रदुष्टश्च ।। ०२.३२.१० ।।

तेषां बन्धन-उपकरणं अनीक-स्थ-प्रमाणं ।। ०२.३२.११ ।।

आलान-ग्रैवेय-कक्ष्या-पार-अयण-परिक्षेप-उत्तर-आदिकं बन्धनं ।। ०२.३२.१२ ।।

अङ्कुश-वेणु-यन्त्र-आदिकं उपकरणं ।। ०२.३२.१३ ।।

वैजयन्ती-क्षुर-प्रमाल-आस्तरण-कुथा-आदिकं भूषणं ।। ०२.३२.१४ ।।

वर्म-तोमर-शर-आवाप-यन्त्र-आदिकः सांग्रामिक-अलंकारः ।। ०२.३२.१५ ।।

चिकित्सक-अनीकस्थ-आरोहक-आधोरण-हस्तिप-कौपचारिक-विधा-पाचक-यावसिक-पादपाशिक-कुटीर्-रक्षक-औपशयैक-आदिरौपस्थायिक-वर्गः ।। ०२.३२.१६ ।।

चिकित्सक-कुटी-रक्ष-विधा-पाचकाः प्रस्थ-ओदनं स्नेह-प्रसृतिं क्षार-लवणयोश्च द्वि-पलिकं हरेयुः । दश-पलं मांसस्य । अन्यत्र चिकित्सकेभ्यः ।। ०२.३२.१७ ।।

पथि-व्याधि-कर्म-मद-जरा-अभितप्तानां चिकित्सकाः प्रतिकुर्युः ।। ०२.३२.१८ ।।

स्थानस्याशुद्धिर्यवसस्याग्रहणं स्थले शायनं अभागे घातः पर-आरोहणं अकाले यानं अभूमावतीर्थेअवतारणं तरु-षण्ड इत्यत्यय-स्थानानि ।। ०२.३२.१९ ।।

तं एषां भक्त-वेतनाददीत ।। ०२.३२.२० ।।

तिस्रो नीराजनाः कार्याश्चातुर्मास्य-ऋतु-संधिषु । ।। ०२.३२.२१अ ब ।।

भूतानां कृष्ण-संधीइज्याः सेनान्यः शुक्ल-संधुषु ।। ०२.३२.२१च्द् ।।

दन्त-मूल-परीणाह-द्वि-गुणं प्रोज्झ्य कल्पयेत् । ।। ०२.३२.२२अ ब ।।

अब्दे द्व्य्-अर्धे नदी-जानां पञ्च-अब्दे पर्वत-ओकसां ।। ०२.३२.२२च्द् ।।

अश्व-अध्यक्षेण रथ-अध्यक्षो व्याख्यातः ।। ०२.३३.०१ ।।

स रथ-कर्म-अन्तान्कारयेत् ।। ०२.३३.०२ ।।

दश-पुरुषो द्वादश-अन्तरो रथः ।। ०२.३३.०३ ।।

तस्मादेक-अन्तर-अवरा आ-षड्-अन्तरादिति सप्त रथाः ।। ०२.३३.०४ ।।

देव-रथ-पुष्य-रथ-सांग्रामिक-पारियाणिक-पर-पुर-अभियानिक-वैनयिकांश्च रथान्कारयेत् ।। ०२.३३.०५ ।।

इष्व्-अस्त्र-प्रहरण-आवरण-उपकरण-कल्पनाः सारथि-रथिक-रथ्यानां च कर्मस्वायोगं विद्यात् । आ-कर्मभ्यश्च भक्त-वेतनं भृतानां अभृतानां च योग्या-रक्षा-अनुष्ठानं अर्थ-मान-कर्म च ।। ०२.३३.०६ ।।

एतेन पत्त्य्-अध्यक्षो व्याख्यातः ।। ०२.३३.०७ ।।

स मौल-भृत-श्रेणि-मित्र-अमित्र-अटवी-बलानां सार-फल्गुतां विद्यात् । निम्न-स्थल-प्रकाश-कूट-खनक-आकाश-दिवा-रात्रि-युद्ध-व्यायामं च । आयोगं अयोगं च कर्मसु ।। ०२.३३.०८ ।।

तेदेव सेना-पतिः सर्व-युद्ध-प्रहरण-विद्या-विनीतो हस्त्य्-अश्व-रथ-चर्या-संघुष्टश्चतुर्-अङ्गस्य बलस्यानुष्ठान-अधिष्ठानं विद्यात् ।। ०२.३३.०९ ।।

स्व-भूमिं युद्ध-कालं प्रत्यनीकं अभिन्न-भेदनं भिन्न-संधानं संहत-भेदनं भिन्न-वधं दुर्ग-वधं यात्रा-कालं च पश्येत् ।। ०२.३३.१० ।।

तूर्य-ध्वज-पताकाभिर्व्यूह-संज्ञाः प्रकल्पयेत् । ।। ०२.३३.११अ ब ।।

स्थाने याने प्रहरणे सैन्यानां विनये रतः ।। ०२.३३.११च्द् ।।

मुद्रा-अध्यक्षो मुद्रां माषकेण दद्यात् ।। ०२.३४.०१ ।।

समुद्रो जन-पदं प्रवेष्टुं निष्क्रमितुं वा लभेत ।। ०२.३४.०२ ।।

द्वादश-पणं अमुद्रो जानपदो दद्यात् ।। ०२.३४.०३ ।।

कूट-मुद्रायां पूर्वः साहस-दण्डः तिरो-जन-पदस्यौत्तमः ।। ०२.३४.०४ ।।

विवीत-अध्यक्षो मुद्रां पश्येत् ।। ०२.३४.०५ ।।

ग्राम-अन्तरेषु च विवीतं स्थापयेत् ।। ०२.३४.०६ ।।

चोर-व्याल-भयान्-निम्न-अरण्यानि शोधयेत् ।। ०२.३४.०७ ।।

अनुदके कूप-सेतु-बन्ध-उत्सान्स्थापयेत् । पुष्प-फल-वाटांश्च ।। ०२.३४.०८ ।।

लुब्धक-श्व-गणिनः परिव्रजेयुररण्यानि ।। ०२.३४.०९ ।।

तस्कर-अमित्र-अभ्यागमे शङ्ख-दुन्दुभि-शब्दं अग्राह्याः कुर्युः शैल-वृक्ष-अधिरूढा वा शीघ्र-वाहना वा ।। ०२.३४.१० ।।

अमित्र-अटवी-संचारं च राज्ञो गृह-कपोतैर्मुद्रा-युक्तैर्हारयेत् । धूम-अग्नि-परम्परया वा ।। ०२.३४.११ ।।

द्रव्य-हस्ति-वन-आजीवं वर्तनीं चोर-रक्षणं । ।। ०२.३४.१२अ ब ।।

सार्थ-अतिवाह्यं गो-रक्ष्यं व्यवहारं च कारयेत् ।। ०२.३४.१२च्द् ।।

समाहर्ता चतुर्धा जन-अप्दं विभज्य ज्येष्ठ-मध्यम-कनिष्ठ-विभागेन ग्राम-अग्रं परिहारकं आयुधीयं धान्य-पशु-हिरण्य-कुप्य-विष्टि-प्रतिकरं इदं एतावदिति निबन्धयेत् ।। ०२.३५.०१ ।।

तत्-प्रदिष्टः पञ्च-ग्रामीं दश-ग्रामीं वा गोपश्चिन्तयेत् ।। ०२.३५.०२ ।।

सीम-अवरोधेन ग्राम-अग्रम् । कृष्ट-अकृष्ट-स्थल-केदार-आराम-षण्ड-वाट-वन-वास्तु-चैत्य-देव-गृह-सेतु-बन्ध-श्मशान-सत्त्र-प्रपा-पुण्य-स्थान-विवीत-पथि-सङ्ख्यानेन क्षेत्र-अग्रम् । तेन सीम्नां क्षेत्राणां च करद-अकरद-सङ्ख्यानेन ।। ०२.३५.०३ ।।

तेषु चएतावच्चातुर्-वार्ण्यम् । एतावन्तः कर्षक-गो-रक्षक-वैदेहक-कारु-कर्म-कर-दासाश्च । एतावच्च द्वि-पद-चतुष्-पदम् । इदं चएषु हिरण्यल्विष्टि-शुल्क-दण्डं समुत्तिष्ठतिइति ।। ०२.३५.०४ ।।

कुलानां च स्त्री-पुरुषाणां बाल-वृद्ध-कर्म-चरित्र-आजीव-व्यय-परिमाणं विद्यात् ।। ०२.३५.०५ ।।

एवं च जन-पद-चतुर्-भागं स्थानिकश्चिन्तयेत् ।। ०२.३५.०६ ।।

गोप-स्थानिक-स्थानेषु प्रदेष्टारः कार्य-करणं बलि-प्रग्रहं च कुर्युः ।। ०२.३५.०७ ।।

समाहर्तृ-प्रदिष्टाश्च गृह-पतिक-व्यञ्जना येषु ग्रामेषु प्रणिहितास्तेषां ग्रामाणां क्षेत्र-गृह-कुल-अग्रं विद्युः । मान-संजाताभ्यां क्षेत्राणि भोग-परिहाराभ्यां गृहाणि वर्ण-कर्मभ्यां कुलानि च ।। ०२.३५.०८ ।।

तेषां जङ्घ-अग्रं आय-व्ययौ च विद्युः ।। ०२.३५.०९ ।।

प्रस्थित-आगतानां च प्रवास-आवास-कारणम् । अनर्थ्यानां च स्त्री-पुरुषाणां चार-प्रचारं च विद्युः ।। ०२.३५.१० ।।

एवं वैदेहक-व्यञ्जनाः स्व-भूमिजानां राज-पण्यानां खनि-सेतु-वन-कर्म-अन्त-क्षेत्रजानां प्रमाणं अर्घं च विद्युः ।। ०२.३५.११ ।।

पर-भूमि-जातानां वारि-स्थल-पथ-उपयातानां सार-फल्गु-पुण्यानां कर्मसु च शुल्क-वर्तन्य्-आतिवाहिक-गुल्म-तर-देय-भाग-भक्त-पण्य-अगार-प्रमाणं विद्युः ।। ०२.३५.१२ ।।

एवं समाहर्तृ-प्रदिष्टास्तापस-व्यञ्जनाः कर्षक-गो-रक्षक-वैदेहकानां अध्यक्षाणां च शौच-आशौचं विद्युः ।। ०२.३५.१३ ।।

पुराण चोर-व्यञ्जनाश्चान्तेवासिनश्चैत्य-चतुष्पथ-शून्य-पद-उद-पान-नदी-निपान-तीर्थ-आयतन-आश्रम-अरण्य-शैल-वन-गहनेषु स्तेन-अमित्र-प्रवीर-पुरुषाणां च प्रवेशन-स्थान-गमन-प्रयोजनान्युपलभेरन् ।। ०२.३५.१४ ।।

समाहर्ता जन-पदं चिन्तयेदेवं उत्थितः । ।। ०२.३५.१५अ ब ।।

चिन्तयेयुश्च संस्थास्ताः संस्थाश्चान्याः स्व-योनयः ।। ०२.३५.१५च्द् ।।

समाहर्तृवन्नागरिको नगरं चिन्तयेत् ।। ०२.३६.०१ ।।

दश-कुलीं गोपो विंशति-कुलीं चत्वारिंशत्-कुलीं वा ।। ०२.३६.०२ ।।

स तस्यां स्त्री-पुरुषाणां जाति-गोत्र-नाम-कर्मभिः जङ्घ-अग्रं आय-व्ययौ च विद्यात् ।। ०२.३६.०३ ।।

एवं दुर्ग-चतुर्-भागं स्थानिकश्चिन्तयेत् ।। ०२.३६.०४ ।।

धर्म-आवसथिनः पाषण्डि-पथिकानावेद्य वासयेयुः । स्व-प्रत्ययाश्च तपस्विनः श्रोत्रियांश्च ।। ०२.३६.०५ ।।

कारु-शिल्पिनः स्व-कर्म-स्थानेषु स्व-जनं वासयेयुः । वैदेहकाश्चान्योन्यं स्व-कर्म-स्थानेषु ।। ०२.३६.०६ ।।

पण्यानां अदेश-काल-विक्रेतारं अस्वकरणं च निवेदयेयुः ।। ०२.३६.०७ ।।

शौण्डिक-पाक्व-मांसिक-औदनिक-रूप-आजीवाः परिज्ञातं आवासयेयुः ।। ०२.३६.०८ ।।

अतिव्यय-कर्तारं अत्याहित-कर्माणं च निवेदयेयुः ।। ०२.३६.०९ ।।

चिकित्सकः प्रच्छन्न-व्रण-प्रतीकार-कारयितारं अपथ्य-कारिणं च गृह-स्वामी च निवेद्य गोप-स्थानिकयोर्मुच्येत । अन्यथा तुल्य-दोषः स्यात् ।। ०२.३६.१० ।।

प्रस्थित-आगतौ च निवेदयेत् । अन्यथा रात्रि-दोषं भजेत ।। ०२.३६.११ ।।

क्षेम-रात्रिषु त्रि-पणं दद्यात् ।। ०२.३६.१२ ।।

पथिक-उत्पथिकाश्च बहिर्-अन्तश्च नगरस्य देव-गृह-पुण्य-स्थान-वन-श्मशानेषु सव्रणं अनिष्ट-उपकरणं उद्भाण्डी-कृतं आविग्नं अतिस्वप्नं अध्व-क्लान्तं अपूर्वं वा गृह्णीयुः ।। ०२.३६.१३ ।।

एवं अभ्यन्तरे शून्य-निवेश-आवेशन-शौण्डिक-औदनिक-पाक्व-मांसिक-द्यूत-पाषण्ड-आवासेषु विचयं कुर्युः ।। ०२.३६.१४ ।।

अग्नि-प्रतीकारं च ग्रीष्मे ।। ०२.३६.१५ ।।

मध्यमयोरह्नश्चतुर्-भागयोरष्ट-भागोअग्नि-दण्डः ।। ०२.३६.१६ ।।

बहिर्-अधिश्रयणं वा कुर्युः ।। ०२.३६.१७ ।।

पादः पञ्च-घटीनां कुम्भ-द्रोणि-निह्श्रेणी-परशु-शूर्प-अङ्कुश-कच-ग्रहणी-दृतीनां चाकरणे ।। ०२.३६.१८ ।।

तृण-कटच्-छन्नान्यपनयेत् ।। ०२.३६.१९ ।।

अग्नि-जीविन एकस्थान्वासयेत् ।। ०२.३६.२० ।।

स्व-गृह-प्रद्वारेषु गृह-स्वामिनो वसेयुः असम्पातिनो रात्रौ ।। ०२.३६.२१ ।।

रथ्यासु कुट-व्रजाः सहस्रं तिष्ठेयुः । चतुष्पथ-द्वार-राज-परिग्रहेषु च ।। ०२.३६.२२ ।।

प्रदीप्तं अनभिधावतो गृह-स्वामिनो द्वादश-पणो दण्डः । षट्-पणोअवक्रयिणः ।। ०२.३६.२३ ।।

प्रमादाद्दीप्तेषु चतुष्-पञ्चाशत्-पणो दण्डः ।। ०२.३६.२४ ।।

प्रदीपिकोअग्निना वध्यः ।। ०२.३६.२५ ।।

पांसु-न्यासे रथ्यायां अष्ट-भागो दण्डः । पङ्क-उदक-सम्निरोधे पादः ।। ०२.३६.२६ ।।

राज-मार्गे द्वि-गुणः ।। ०२.३६.२७ ।।

पण्य-स्थान-उदक-स्थान-देव-गृह-राज-परिग्रहेषु पण-उत्तरा विष्टा-दण्डाः । मूत्रेष्वर्ध-दण्डाः ।। ०२.३६.२८ ।।

भैषज्य-व्याधि-भय-निमित्तं अदण्ड्याः ।। ०२.३६.२९ ।।

मार्जार-श्व-नकुल-सर्प-प्रेतानां नगरस्य-अन्तर्-उत्सर्गे त्रि-पणो दण्डः । खर-उष्ट्र-अश्वतर-अश्व-प्रेतानां षट्-पणः । मनुष्य-प्रेतानां पञ्चाशत्-पणः ।। ०२.३६.३० ।।

मार्ग-विपर्यासे शव-द्वारादन्यतश्च शव-निर्णयने पूर्वः साहस-दण्डः ।। ०२.३६.३१ ।।

द्वाः-स्थानां द्विशतं ।। ०२.३६.३२ ।।

श्मशानादन्यत्र न्यासे दहने च द्वादश-पणो दण्डः ।। ०२.३६.३३ ।।

विषण्ण-अलिकं उभयतोरात्रं याम-तूर्यं ।। ०२.३६.३४ ।।

तूर्य-शब्दे राज्ञो गृह-अभ्याशे स-पाद-पणं-अक्षण-ताडनं प्रथम-पश्चिम-यामिकम् । मध्यम-यामिकं द्वि-गुणम् । अन्तश्-चतुर्-गुणं ।। ०२.३६.३५ ।।

शङ्कनीये देशे लिङ्गे पूर्व-अपदाने च गृहीतं अनुयुञ्जीत ।। ०२.३६.३६ ।।

राज-परिग्रह-उपगमने नगर-रक्षा-आरोहणे च मध्यमः साहस-दण्डः ।। ०२.३६.३७ ।।

सूतिका-चिकित्सक-प्रेत-प्रदीप-यान-नागरिक-तूर्य-प्रेक्षा-अग्नि-निमित्तं मुद्राभिश्चाग्राह्याः ।। ०२.३६.३८ ।।

चार-रात्रिषु प्रच्छन्न-विपरीत-वेषाः प्रव्रजिता दण्ड-शस्त्र-हस्ताश्च मनुष्या दोषतो दण्ड्याः ।। ०२.३६.३९ ।।

रक्षिणां अवार्यं वारयतां वार्यं चऽवारयतां क्षण-द्वि-गुणो दण्डः ।। ०२.३६.४० ।।

स्त्रियं दासीं अधिमेहयतां पूर्वः साहस-दण्डः । अदासीं मध्यमः । कृत-अवरोधां उत्तमः । कुल-स्त्रियं वधः ।। ०२.३६.४१ ।।

चेतन-अचेतनिकं रात्रि-दोषं अशंसतो नागरिकस्य दोष-अनुरूपो दण्डः । प्रमाद-स्थाने च ।। ०२.३६.४२ ।।

नित्यं उदक-स्थान-मार्ग-भ्रमच्-छन्न-पथ-वप्र-प्राकार-रक्षा-अवेक्षणं नष्ट-प्रस्मृत-अपसृतानां च रक्षणं ।। ०२.३६.४३ ।।

बन्धन-अगारे च बाल-वृद्ध-व्याधित-अनाथानां जात-नक्षत्र-पौर्णमासीषु विसर्गः ।। ०२.३६.४४ ।।

पण्य-शीलाः समय-अनुबद्धा वा दोष-निष्क्रयं दद्युः ।। ०२.३६.४५ ।।

दिवसे पञ्च-रात्रे वा बन्धनस्थान्विशोधयेत् । ।। ०२.३६.४६अ ब ।।

कर्मणा काय-दण्डेन हिरण्य-अनुग्रहेण वा ।। ०२.३६.४६च्द् ।।

अपूर्व-देश-अधिगमे युव-राज-अभिषेचने । ।। ०२.३६.४७अ ब ।।

पुत्र-जन्मनि वा मोक्षो बन्धनस्य विधीयते ।। ०२.३६.४७च्द् ।।

धर्मस्थास्त्रयस्त्रयोअमात्या जन-पद-संधि-संग्रहण-द्रोण-मुख-स्थानीयेषु व्यावहारिकानर्थान्कुर्युः ।। ०३.१.०१ ।।

तिरोहित-अन्तर्-अगार-नक्त-अरण्य-उपध्य्-उपह्वर-कृतांश्च व्यवहारान्प्रतिषेधयेयुः ।। ०३.१.०२ ।।

कर्तुः कारयितुः पूर्वः साहस-दण्डः ।। ०३.१.०३ ।।

श्रोतृऋणां एक-एकं प्रत्यर्ध-दण्डाः ।। ०३.१.०४ ।।

श्रद्धेयानां तु द्रव्य-व्यपनयः ।। ०३.१.०५ ।।

परोक्षेणाधिक-ऋण-ग्रहणं अवक्तव्य-करा वा तिरोहिताः सिध्येयुः ।। ०३.१.०६ ।।

दाय-निक्षेप-उपनिधि-विवाह-युक्ताः स्त्रीणां अनिष्कासिनीनां व्याधितानां चामूढ-संज्ञानां अन्तर्-अगार-कृताः सिध्येयुः ।। ०३.१.०७ ।।

साहस-अनुप्रवेश-कलह-विवाह-राज-नियोग-युक्ताः पूर्व-रात्र-व्यवहारिणां च रात्रि-कृताः सिध्येयुः ।। ०३.१.०८ ।।

सार्थ-व्रज-आश्रम-व्याध-चारण-मध्येष्वरण्य-चराणां अरण्य-कृताः सिध्येयुः ।। ०३.१.०९ ।।

गूढ-आजीविषु चौपधि-कृताः सिध्येयुः ।। ०३.१.१० ।।

मिथः-समवाये चौपह्वर-कृताः सिध्येयुः ।। ०३.१.११ ।।

अतोअन्यथा न सिध्येयुः । अपाश्रयवद्भिश्च कृताः । पितृमता पुत्रेण । पित्रा पुत्रवता । निष्कुलेन भ्रात्रा । कनिष्ठेनाविभक्त-अंशेन । पतिमत्या पुत्रवत्या च स्त्रिया । दास-आहितकाभ्याम् । अप्राप्त-अतीत-व्यवहाराभ्याम् । अभिशस्त-प्रव्रजित-न्यङ्ग-व्यसनिभिश्च । अन्यत्र निषृष्ट-व्यवहारेभ्यः ।। ०३.१.१२ ।।

तत्रापि क्रुद्धेनऽर्तेन मत्तेन-उन्मत्तेनावगृहीतेन वा कृता व्यवहारा न सिध्येयुः ।। ०३.१.१३ ।।

कर्तृ-कारयितृ-श्रोतृऋणां पृथग्यथा-उक्ता दण्डाः ।। ०३.१.१४ ।।

स्वे स्वे तु वर्गे देशे काले च स्व-करण-कृताः सम्पूर्ण-आचाराः शुद्ध-देशा दृष्ट-रूप-लक्षण-प्रमाण-गुणाः सर्व-व्यवहाराः सिध्येयुः ।। ०३.१.१५ ।।

पश्चिमं चएषां करणं आदेश-आधिवर्जं श्रद्धेयं इति व्यवहार-स्थापना । ।। ०३.१.१६ ।।

संवत्सरं ऋतुं मासं पक्षं दिवसं करणं अधिकरणं ऋणं वेदक-आवेदकयोः कृत-समर्थ-अवस्थयोर्देश-ग्राम-जाति-गोत्र-नाम-कर्माणि चाभिलिख्य वादि-प्रतिवादि-प्रश्नानर्थ-आनुपूर्व्या निवेशयेत् ।। ०३.१.१७ ।।

निविष्टांश्चावेक्षेत ।। ०३.१.१८ ।।

निबद्धं वादं उत्सृज्यान्यं वादं संक्रामति । पूर्व-उक्तं पश्चिमेनार्थेन नाभिसंधत्ते । पर-वाक्यं अनभिग्राह्यं अभिग्राह्यावतिष्ठते । प्रतिज्ञाय देशं निर्दिशैत्युक्ते न निर्दिशति । हीन-देशं अदेशं वा निर्दिशति । निर्दिष्टाद्देशादन्यं देशं उपस्थापयति । उपस्थिते देशेअर्थ-वचनं नएवं इत्यपव्ययते । साक्षिभिरवधृतं नैच्छति । ।। ०३.१.१९ ।।

।। असम्भाष्ये देशे साक्षिभिर्मिथः सम्भाषते । इति परा-उक्त-हेतवः ।।

परा-उक्त-दण्डः पञ्च-बन्धः ।। ०३.१.२० ।।

स्वयं-वादि-दण्डो दश-बन्धः ।। ०३.१.२१ ।।

पुरुष-भृतिरष्ट-अंशः ॥ ०३.१.२२ ॥

पथि-भक्तं अर्घ-विशेषतः ॥ ०३.१.२३ ॥

तदुभयं नियम्यो दद्यात् ॥ ०३.१.२४ ॥

अभियुक्तो न प्रत्यभियुञ्जीत । अन्यत्र कलह-साहस-सार्थ-समवायेभ्यः ॥ ०३.१.२५ ॥

न चाभियुक्तेअभियोगेअस्ति ॥ ०३.१.२६ ॥

अभियोक्ता चेत्प्रत्युक्तस्तद्-अहरेव न प्रतिब्रूयात्परा-उक्तः स्यात् ॥ ०३.१.२७ ॥

कृत-कार्य-विनिश्चयो ह्यभियोक्ता नाभियुक्तः ॥ ०३.१.२८ ॥

तस्याप्रतिब्रुवतस्त्रि-रात्रं सप्त-रात्रं इति ॥ ०३.१.२९ ॥

अत ऊर्ध्वं त्रि-पण-अवर-अर्ध्यं द्वादश-पण-परं दण्डं कुर्यात् ॥ ०३.१.३० ॥

त्रि-पक्षादूर्ध्वं अप्रतिब्रुवतः परा-उक्त-दण्डं कृत्वा यान्यस्य द्रव्याणि स्युस्ततोअभियोक्तारं प्रतिपादयेद् । अन्यत्र वृत्त्य्-उपकरणेभ्यः ॥ ०३.१.३१ ॥

तदेव निष्पततोअभियुक्तस्य कुर्यात् ॥ ०३.१.३२ ॥

अभियोक्तुर्निष्पात-सम-कालः परा-उक्त-भावः ॥ ०३.१.३३ ॥

प्रेतस्य व्यसनिनो वा साक्षि-वचनं असारं ॥ ०३.१.३४ ॥

अभियोक्ता दण्डं दत्त्वा कर्म कारयेत् ॥ ०३.१.३५ ॥

आधिं वा स कामं प्रवेशयेत् ॥ ०३.१.३६ ॥

रक्षोघ्न-रक्षितं वा कर्मणा प्रतिपादयेद् । अन्यत्र ब्राह्मणात् ॥ ०३.१.३७ ॥

चतुर्-वर्ण-आश्रमस्यायं लोकस्यऽचार-रक्षणात् । ॥ ०३.१.३८अ ब ॥

नश्यतां सर्व-धर्माणां राजा धर्म-प्रवर्तकः ॥ ०३.१.३८च्द् ॥

धर्मश्च व्यवहारश्च चरित्रं राज-शासनं । ॥ ०३.१.३९अ ब ॥

विवाद-अर्थश्चतुष्पादः पश्चिमः पूर्व-बाधकः ॥ ०३.१.३९च्द् ॥

तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु । ॥ ०३.१.४०अ ब ॥

चरित्रं संग्रहे पुंसां राज्ञां आज्ञा तु शासनं ॥ ०३.१.४०च्द् ॥

राज्ञः स्व-धर्मः स्वर्गाय प्रजा धर्मेण रक्षितुः । ॥ ०३.१.४१अ ब ॥

अरक्षितुर्वा क्षेप्तुर्वा मिथ्या-दण्डं अतोअन्यथा ॥ ०३.१.४१च्द् ॥

दण्डो हि केवलो लोकं परं चैमं च रक्षति । ॥ ०३.१.४२अ ब ॥

राज्ञा पुत्रे च शत्रौ च यथा-दोषं समं धृतः ।। ०३.१.४२च्द् ।।

अनुशासद्धि धर्मेण व्यवहारेण संस्थया । ।। ०३.१.४३अ ब ।।

न्यायेन च चतुर्थेन चतुर्-अन्तां वा महीं जयेत् ।। ०३.१.४३च्द् ।।

संस्था या धर्म-शास्त्रेण शास्त्रं वा व्यावहारिकं । ।। ०३.१.४४अ ब ।।

यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिर्णयेत् ।। ०३.१.४४च्द् ।।

शास्त्रं विप्रतिपद्येत धर्मे न्यायेन केनचित् । ।। ०३.१.४५अ ब ।।

न्यायस्तत्र प्रमाणं स्यात्तत्र पाठो हि नश्यति ।। ०३.१.४५च्द् ।।

दृष्ट-दोषः स्वयं-वादः स्व-पक्ष-पर-पक्षयोः । ।। ०३.१.४६अ ब ।।

अनुयोग-आर्जवं हेतुः शपथश्चार्थ-साधकः ।। ०३.१.४६च्द् ।।

पूर्व-उत्तर-अर्थ-व्याघाते साक्षि-वक्तव्य-कारणे । ।। ०३.१.४७अ ब ।।

चार-हस्ताच्च निष्पाते प्रदेष्टव्यः पराजयः ।। ०३.१.४७च्द् ।।

विवाह-पूर्वो व्यवहारः ।। ०३.२.०१ ।।

कन्या-दानं कन्यां अलंकृत्य ब्राह्मो विवाहः ।। ०३.२.०२ ।।

सह-धर्म-चर्या प्राजापत्यः ।। ०३.२.०३ ।।

गो-मिथुन-आदानादार्षः ।। ०३.२.०४ ।।

अन्तर्-वेद्यां ऋत्विजे दानाद्दैवः ।। ०३.२.०५ ।।

मिथः-समवायाद्गान्धर्वः ।। ०३.२.०६ ।।

शुल्क-आदानादासुरः ।। ०३.२.०७ ।।

प्रसह्य-आदानाद्राक्षसः ।। ०३.२.०८ ।।

सुप्त-मत्त-आदानात्पैशाचः ।। ०३.२.०९ ।।

पितृ-प्रमाणाश्चत्वारः पूर्वे धर्म्याः । माता-पितृ-प्रमाणाः शेषाः ।। ०३.२.१० ।।

तौ हि शुल्क-हरौ दुहितुः । अन्यतर-अभावेअन्यतरो वा ।। ०३.२.११ ।।

द्वितीयं शुल्कं स्त्री हरेत ।। ०३.२.१२ ।।

सर्वेषां प्रीत्य्-आरोपणं अप्रतिषिद्धं इति विवाह-धर्मः । ।। ०३.२.१३ ।।

वृत्तिराबन्ध्यं वा स्त्री-धनं ।। ०३.२.१४ ।।

पर-द्वि-साहस्रा स्थाप्या वृत्तिः । आबन्ध्य-अनियमः ।। ०३.२.१५ ।।

तदात्म-पुत्र-स्नुषा-भर्मणि प्रवास-अप्रतिविधाने च भार्याया भोक्तुं अदोषः । प्रतिरोधक-व्याधि-दुर्भिक्ष-भय-प्रतीकारे धर्म-कार्ये च पत्युः । सम्भूय वा दम्पत्योर्मिथुनं प्रजातयोः ।। ०३.२.१६ ।।

त्रि-वर्ष-उपभुक्तं च धर्मिष्ठेषु विवाहेषु नानुयुञ्जीत ।। ०३.२.१७ ।।

गान्धर्व-आसुर-उपभुक्तं सवृद्धिकं उभयं दाप्येत । राक्षस-पैशाच-उपभुक्तं स्तेयं दद्यात् ।। ०३.२.१८ ।।

मृते भर्तरि धर्म-कामा तदानीं एव स्थाप्यऽभरणं शुल्क-शेषं च लभेत ।। ०३.२.१९ ।।

लब्ध्वा वा विन्दमाना सवृद्धिकं उभयं दाप्येत ।। ०३.२.२० ।।

कुटुम्ब-कामा तु श्वशुर-पति-दत्तं निवेश-काले लभेत ।। ०३.२.२१ ।।

निवेश-कालं हि दीर्घ-प्रवासे व्याख्यास्यामः ।। ०३.२.२२ ।।

श्वशुर-प्रातिलोम्येन वा निविष्टा श्वशुर-पति-दत्तं जीयेत ।। ०३.२.२३ ।।

ज्ञाति-हस्ताद्-अभिमृष्टाया ज्ञातयो यथा-गृहीतं दद्युः ।। ०३.२.२४ ।।

न्याय-उपगतायाः प्रतिपत्ता स्त्री-धनं गोपयेत् ।। ०३.२.२५ ।।

पति-दायं विन्दमाना जीयेत ।। ०३.२.२६ ।।

धर्म-कामा भुञ्जीत ।। ०३.२.२७ ।।

पुत्रवती विन्दमाना स्त्री-धनं जीयेत ।। ०३.२.२८ ।।

तत्तु स्त्री-धनं पुत्रा हरेयुः ।। ०३.२.२९ ।।

पुत्र-भरण-अर्थं वा विन्दमाना पुत्र-अर्थं स्फाती-कुर्यात् ।। ०३.२.३० ।।

बहु-पुरुष-प्रजानां पुत्राणां यथा-पितृ-दत्तं स्त्री-धनं अवस्थापयेत् ।। ०३.२.३१ ।।

काम-करणीयं अपि स्त्री-धनं विन्दमाना पुत्र-संस्थं कुर्यात् ।। ०३.२.३२ ।।

अपुत्रा पति-शयनं पालयन्ती गुरु-समीपे स्त्री-धनं आयुः-क्षयाद्भुञ्जीत ।। ०३.२.३३ ।।

आपद्-अर्थं हि स्त्री-धनं ।। ०३.२.३४ ।।

ऊर्ध्वं दायादं गच्छेत् ।। ०३.२.३५ ।।

जीवति भर्तरि मृतायाः पुत्रा दुहितरश्च स्त्री-धनं विभजेरन् । अपुत्राया दुहितरः । तद्-अभावे भर्ता ।। ०३.२.३६ ।।

शुल्कं अन्वाधेयं अन्यद्वा बन्धुभिर्दत्तं बान्धवा हरेयुः इति स्त्री-धन-कल्पः । ।। ०३.२.३७ ।।

वर्षाण्यष्टावप्रजायमानां अपुत्रां वन्ध्यां चऽकाङ्क्षेत । दश निन्दुम् । द्वादश कन्या-प्रसविनीं ।। ०३.२.३८ ।।

ततः पुत्र-अर्थी द्वितीयां विन्देत ।। ०३.२.३९ ।।

तस्यातिक्रमे शुल्कं स्त्री-धनं अर्धं चऽधिवेदनिकं दद्यात् । चतुर्-विंशति-पण-परं च दण्डं ।। ०३.२.४० ।।

शुल्कं स्त्री-धनं अशुल्क-स्त्री-धनायास्तत्-प्रमाणं आधिवेदनिकं अनुरूपां च वृत्तिं दत्त्वा बह्वीरपि विन्देत ।। ०३.२.४१ ।।

पुत्र-अर्था हि स्त्रियः ।। ०३.२.४२ ।।

तीर्थ-समवाये चऽसां यथा-विवाहं पूर्व-ऊढां जीवत्-पुत्रां वा पूर्वं गच्छेत् ।। ०३.२.४३ ।।

तीर्थ-गूहन-आगमने षण्-णवतिर्दण्डः ।। ०३.२.४४ ।।

पुत्रवतीं धर्म-कामां वन्ध्यां निन्दुं नीरजस्कां वा नाकामां उपेयात् ।। ०३.२.४५ ।।

न चाकामः पुरुषः कुष्ठिनीं उन्मत्तां वा गच्छेत् ।। ०३.२.४६ ।।

स्त्री तु पुत्र-अर्थं एवं-भूतं वाउपगच्छेत् ।। ०३.२.४७ ।।

नीचत्वं पर-देशं वा प्रस्थितो राज-किल्बिषी । ।। ०३.२.४८अ ब ।।

प्राण-अभिहन्ता पतितस्त्याज्यः क्लीबोअपि वा पतिः ।। ०३.२.४८च्द् ।।

द्वादश-वर्षा स्त्री प्राप्त-व्यवहारा भवति । षोडश-वर्षः पुमान् ।। ०३.३.०१ ।।

अत ऊर्ध्वं अशुश्रूषायां द्वादश-पणः स्त्रिया दण्डः । पुंसो द्वि-गुणः इति शुश्रूषा । ।। ०३.३.०२ ।।

भर्मण्यायां अनिर्दिष्ट-कालायां ग्रास-आच्छादनं वाअधिकं यथा-पुरुष-परिवापं सविशेषं दद्यात् ।। ०३.३.०३ ।।

निर्दिष्ट-कालायां तदेव संख्याय बन्धं च दद्यात् ।। ०३.३.०४ ।।

शुल्क-स्त्री-धन-आधिवेदनिकानां अनादाने च ।। ०३.३.०५ ।।

श्वशुर-कुल-प्रविष्टायां विभक्तायां वा नाभियोज्यः पतिः इति भर्म । ।। ०३.३.०६ ।।

"नष्टे" "विनष्टे" "न्यङ्गे" "अपितृके" "अमातृके" इत्यनिर्देशेन विनय-ग्राहणं ।। ०३.३.०७ ।।

वेणु-दल-रज्जु-हस्तानां अन्यतमेन वा पृष्ठे त्रिराघातः ।। ०३.३.०८ ।।

तस्यातिक्रमे वाग्-दण्ड-पारुष्य-दण्डाभ्यां अर्ध-दण्डाः ।। ०३.३.०९ ।।

तदेव स्त्रिया भर्तरि प्रसिद्ध-दोषायाः ।। ०३.३.१० ।।

ईर्ष्यया बाह्य-विहारेषु द्वारेष्वत्ययो यथा-निर्दिष्टः इति पारुष्यं । ।। ०३.३.११ ।।

भर्तारं द्विषती स्त्री सप्त-आर्तवान्यमण्डयमाना तदानीं एव स्थाप्यऽभरणं निधाय भर्तारं अन्यया सह शयानं अनुशयीत ।। ०३.३.१२ ।।

भिक्षुक्य्-अन्वाधि-ज्ञाति-कुलानां अन्यतमे वा भर्ता द्विषन्स्त्रियं एकां अनुशयीत ।। ०३.३.१३ ।।

दृष्ट-लिङ्गे मैथुन-अपहारे सवर्ण-अपसर्प-उपगमे वा मिथ्या-वादी द्वादश-पणं दद्यात् ।। ०३.३.१४ ।।

अमोक्ष्या भर्तुरकामस्य द्विषती भार्या । भार्यायाश्च भर्ता ।। ०३.३.१५ ।।

परस्परं-द्वेषान्मोक्षः ।। ०३.३.१६ ।।

स्त्री-विप्रकाराद्वा पुरुषश्चेन्मोक्षं इच्छेद्यथा-गृहीतं अस्यै दद्यात् ।। ०३.३.१७ ।।

पुरुष-विप्रकाराद्वा स्त्री चेन्मोक्षं इच्छेन्नास्यै यथा-गृहीतं दद्यात् ।। ०३.३.१८ ।।

अमोक्षो धर्म-विवाहानां इति द्वेषः । ।। ०३.३.१९ ।।

प्रतिषिद्धा स्त्री दर्प-मद्य-क्रीडायां त्रि-पणं दण्डं दद्यात् ।। ०३.३.२० ।।

दिवा स्त्री-प्रेक्षा-विहार-गमने षट्-पणो दण्डः । पुरुष-प्रेक्षा-विहार-गमने द्वादश-पणः ।। ०३.३.२१ ।।

रात्रौ द्वि-गुणः ।। ०३.३.२२ ।।

सुप्त-मत्त-प्रव्रजने भर्तुरदाने च द्वारस्य द्वादश-पणः ।। ०३.३.२३ ।।

रात्रौ निष्कसने द्वि-गुणः ।। ०३.३.२४ ।।

स्त्री-पुंसयोर्मैथुन-अर्थेनाङ्ग-विचेष्टायां रहोअश्लील-सम्भाषायां वा चतुर्-विंशति-पणः स्त्रिया दण्डः । पुंसो द्वि-गुणः ।। ०३.३.२५ ।।

केश-नीवि-दन्त-नख-आलम्बनेषु पूर्वः साहस-दण्डः । पुंसो द्वि-गुणः ।। ०३.३.२६ ।।

शङ्कित-स्थाने सम्भाषायां च पण-स्थाने शिफा-दण्डः ।। ०३.३.२७ ।।

स्त्रीणां ग्राम-मध्ये चण्डालः पक्ष-अन्तरे पञ्च-शिफा दद्यात् ।। ०३.३.२८ ।।

पणिकं वा प्रहारं मोक्षयेत् इत्यतीचारः । ।। ०३.३.२९ ।।

प्रतिषिद्धयोः स्त्री-पुंसयोरन्योन्य-उपकारे क्षुद्रक-द्रव्याणां द्वादश-पणो दण्डः । स्थूलक-द्रव्याणां चतुर्-विंशति-पणः । हिरण्य-सुवर्णयोश्चतुष्-पञ्चाशत्-पणः स्त्रिया दण्डः । पुंसोर्द्वि-गुणः ।। ०३.३.३० ।।

त एवागम्ययोरर्ध-दण्डाः । तथा प्रतिषिद्ध-पुरुष-व्यवहारेषु च इति प्रतिषेधः । ।। ०३.३.३१ ।।

राज-द्विष्ट-अतिचाराभ्यां आत्म-अपक्रमणेन च । ।। ०३.३.३२अ ब ।।

स्त्री-धन-आनीत-शुल्कानां अस्वाम्यं जायते स्त्रियाः ।। ०३.३.३२च्द् ।।

पति-कुलान्निष्पतितायाः स्त्रियाः षट्-पणो दण्डः । अन्यत्र विप्रकारात् ।। ०३.४.०१ ।।

प्रतिषिद्धायां द्वादश-पणः ।। ०३.४.०२ ।।

प्रतिवेश-गृह-अतिगतायाः षट्-पणः ।। ०३.४.०३ ।।

प्रातिवेशिक-भिक्षुक-वैदेहकानां अवकाश-भिक्षा-पण्य-दाने द्वादश-पणो दण्डः ।। ०३.४.०४ ।।

प्रतिषिद्धानां पूर्वः साहस-दण्डः ।। ०३.४.०५ ।।

पर-गृह-अतिगतायाश्चतुर्-विंशति-पणः ।। ०३.४.०६ ।।

पर-भार्या-अवकाश-दाने शत्यो दण्डः । अन्यत्रऽपद्भ्यः ।। ०३.४.०७ ।।

वारण-अज्ञानयोर्निर्दोषः ।। ०३.४.०८ ।।

"पति-विप्रकारात्पति-ज्ञाति-सुख-अवस्थ-ग्रामिक-अन्वाधि-भिक्षुकी-ज्ञाति-कुलानां अन्यतमं अपुरुषं गन्तुं अदोषः" इति आचार्याः ।। ०३.४.०९ ।।

सपुरुषं वा ज्ञाति-कुलं ।। ०३.४.१० ।।

कुतो हि साध्वी-जनस्यच्छलं ।। ०३.४.११ ।।

सुखं एतदवबोद्धुम् । इति कौटिल्यः ।। ०३.४.१२ ।।

प्रेत-व्याधि-व्यसन-गर्भ-निमित्तं अप्रतिषिद्धं एव ज्ञाति-कुल-गमनं ।। ०३.४.१३ ।।

तन्-निमित्तं वारयतो द्वादश-पणो दण्डः ।। ०३.४.१४ ।।

तत्रापि गूहमाना स्त्री-धनं जीयेत । ज्ञातयो वा छादयन्तः शुल्क-शेषं इति निष्पतनं । ।। ०३.४.१५ ।।

पति-कुलान्निष्पत्य ग्राम-अन्तर-गमने द्वादश-पणो दण्डः स्थाप्या-आभरण-लोपश्च ।। ०३.४.१६ ।।

गम्येन वा पुंसा सह प्रस्थाने चतुर्-विंशति-पणः सर्व-धर्म-लोपश्च । अन्यत्र भर्म-दान-तीर्थ-गमनाभ्यां ।। ०३.४.१७ ।।

पुंसः पूर्वः साहस-दण्डः तुल्य-श्रेयसोः । पापीयसो मध्यमः ।। ०३.४.१८ ।।

बन्धुर्-अदण्ड्यः ।। ०३.४.१९ ।।

प्रतिषेधेअर्ध-दण्डाः ।। ०३.४.२० ।।

पथि व्यन्तरे गूढ-देश-अभिगमने मैथुन-अर्थेन शङ्कित-प्रतिषिद्धायां वा पथ्य्-अनुसरणे संग्रहणं विद्यात् ।। ०३.४.२१ ।।

ताल-अवचर-चारण-मत्स्य-बन्धक-लुब्धक-गो-पालक-शौण्डिकानां अन्येषां च प्रसृष्ट-स्त्रीकाणां पथ्य्-अनुसरणं अदोषः ।। ०३.४.२२ ।।

प्रतिषिद्धे वा नयतः पुंसः स्त्रियो वा गच्छन्त्यास्त एवार्ध-दण्डाः इति पथ्य्-अनुसरणं । ।। ०३.४.२३ ।।

ह्रस्व-प्रवासिनां शूद्र-वैश्य-क्षत्रिय-ब्राह्मणानां भार्याः संवत्सर-उत्तरं कालं आकाङ्क्षेरनप्रजाताः । संवत्सर-अधिकं प्रजाताः ।। ०३.४.२४ ।।

प्रतिविहिता द्वि-गुणं कालं ।। ०३.४.२५ ।।

अप्रतिविहिताः सुख-अवस्था बिभृयुः । परं चत्वारि वर्षाण्यष्टौ वा ज्ञातयः ।। ०३.४.२६ ।।

ततो यथा-दत्तं आदाय प्रमुञ्चेयुः ।। ०३.४.२७ ।।

ब्राह्मणं अधीयानं दश-वर्षाण्यप्रजाता । द्वादश प्रजाता । राज-पुरुषं आयुः-क्षयादाकाङ्क्षेत ।। ०३.४.२८ ।।

सवर्णतश्च प्रजाता नापवादं लभेत ।। ०३.४.२९ ।।

कुटुम्ब-ऋद्धि-लोपे वा सुख-अवस्थैर्विमुक्ता यथा-इष्टं विन्देत । जीवित-अर्थं आपद्-गता वा ।। ०३.४.३० ।।

धर्म-विवाहात्कुमारी परिग्रहीतारं अनाख्याय प्रोषितं अश्रूयमाणं सप्त तीर्थान्याकाङ्क्षेत । संवत्सरं श्रूयमाणं ।। ०३.४.३१ ।।

आख्याय प्रोषितं अश्रूयमाणं पञ्च तीर्थान्याकाङ्क्षेत । दश श्रूयमाणं ।। ०३.४.३२ ।।

एक-देश-दत्त-शुल्कं त्रीणि तीर्थान्यश्रूयमाणम् । श्रूयमाणं सप्त तीर्थान्याकाङ्क्षेत ।। ०३.४.३३ ।।

दत्त-शुल्कं पञ्च तीर्थान्यश्रूयमाणम् । दश श्रूयमाणं ।। ०३.४.३४ ।।

ततः परं धर्मस्थैर्विसृष्टा यथा-इष्टं विन्देत ।। ०३.४.३५ ।।

तीर्थ-उपरोधो हि धर्म-वध इति कौटिल्यः इति ह्रस्व-प्रवासः ।। ०३.४.३६ ।।

दीर्घ-प्रवासिनः प्रव्रजितस्य प्रेतस्य वा भार्या सप्त तीर्थान्याकाङ्क्षेत । संवत्सरं प्रजाता ।। ०३.४.३७ ।।

ततः पति-सोदर्यं गच्छेत् ।। ०३.४.३८ ।।

बहुषु प्रत्यासन्नं धार्मिकं भर्म-समर्थं कनिष्ठं अभार्यं वा ।। ०३.४.३९ ।।

तद्-अभावेअप्यसोदर्यं सपिण्डं कुल्यं वाआसन्नं ।। ०३.४.४० ।।

एतेषां एष एव क्रमः ।। ०३.४.४१ ।।

एतानुत्क्रम्य दायादान्वेदने जार-कर्मणि । ।। ०३.४.४२अ ब ।।

जार-स्त्री-दातृ-वेत्तारः सम्प्राप्ताः संग्रह-अत्ययं ।। ०३.४.४२च्द् ।।

अनीश्वराः पितृमन्तः स्थित-पितृ-मातृकाः पुत्राः ।। ०३.५.०१ ।।

तेषां ऊर्ध्वं पितृतो दाय-विभागः पितृ-द्रव्याणां ।। ०३.५.०२ ।।

स्वयं-आर्जितं अविभाज्यम् । अन्यत्र पितृ-द्रव्यादुत्थितेभ्यः ।। ०३.५.०३ ।।

पितृ-द्रव्यादविभक्त-उपगतानां पुत्राः पौत्रा वा आ-चतुर्थादित्यंश-भाजः ।। ०३.५.०४ ।।

तावदविच्छिन्नः पिण्डो भवति ।। ०३.५.०५ ।।

विच्छिन्न-पिण्डाः सर्वे समं विभजेरन् ।। ०३.५.०६ ।।

अपितृ-द्रव्या विभक्त-पितृ-द्रव्या वा सह जीवन्तः पुनर्विभजेरन् ।। ०३.५.०७ ।।

यतश्चौत्तिष्ठेत स द्व्य्-अंशं लभेत ।। ०३.५.०८ ।।

द्रव्यं अपुत्रस्य सोदर्या भ्रातरः सह-जीविनो वा हरेयुः कन्याश्च ।। ०३.५.०९ ।।

रिक्थं पुत्रवतः पुत्रा दुहितरो वा धर्मिष्ठेषु विवाहेषु जाताः ।। ०३.५.१० ।।

तद्-अभावे पिता धरमाणः ।। ०३.५.११ ।।

पित्र्-अभावे भ्रातरो भ्रातृ-पुत्राश्च ।। ०३.५.१२ ।।

अपितृका बहवोअपि च भ्रातरो भ्रातृ-पुत्राश्च पितुरेकं अंशं हरेयुः ।। ०३.५.१३ ।।

सोदर्याणां अनेक-पितृकाणां पितृतो दाय-विभागः ।। ०३.५.१४ ।।

पितृ-भ्रातृ-पुत्राणां पूर्वे विद्यमाने नापरं अवलम्बन्ते । ज्येष्ठे च कनिष्ठं अर्थ-ग्राहिणं ।। ०३.५.१५ ।।

जीवद्-विभागे पिता नएकं विशेषयेत् ।। ०३.५.१६ ।।

न चएकं अकारणान्निर्विभजेत ।। ०३.५.१७ ।।

पितुरसत्यर्थे ज्येष्ठाः कनिष्ठाननुगृह्णीयुः । अन्यत्र मिथ्या-वृत्तेभ्यः ।। ०३.५.१८ ।।

प्राप्त-व्यवहाराणां विभागः ।। ०३.५.१९ ।।

अप्राप्त-व्यवहाराणां देय-विशुद्धं मातृ-बन्धुषु ग्राम-वृद्धेषु वा स्थापयेयुः आ-व्यवहार-प्रापणात् । प्रोषितस्य वा ।। ०३.५.२० ।।

सम्निविष्ट-समं असम्निविष्टेभ्यो नैवेशनिकं दद्युः । कन्याभ्यश्च प्रादानिकं ।। ०३.५.२१ ।।

ऋण-रिक्थयोः समो विभागः ।। ०३.५.२२ ।।

"उद-पात्राण्यपि निष्किंचना विभजेरन्" इत्याचार्याः ।। ०३.५.२३ ।।

छलं एतदिति कौटिल्यः ।। ०३.५.२४ ।।

सतोअर्थस्य विभागो नासतः ।। ०३.५.२५ ।।

एतावानर्थः सामान्यस्तस्यएतावान्प्रत्य्-अंश इत्यनुभाष्य ब्रुवन्साक्षिषु विभागं कारयेत् ।। ०३.५.२६ ।।

दुर्विभक्तं अन्योन्य-अपहृतं अन्तर्हितं अविज्ञात-उत्पन्नं वा पुनर्विभजेरन् ।। ०३.५.२७ ।।

अदायादकं राजा हरेत्स्त्री-वृत्ति-प्रेत-कार्य-वर्जम् । अन्यत्र श्रोत्रिय-द्रव्यात् ।। ०३.५.२८ ।।

तत्त्रैवेद्येभ्यः प्रयच्छेत् ।। ०३.५.२९ ।।

पतितः पतिताज्जातः क्लीबश्चानंशाः । जड-उन्मत्त-अन्ध-कुष्ठिनश्च ।। ०३.५.३० ।।

सति भार्य-अर्थे तेषां अपत्यं अतद्-विधं भागं हरेत् ।। ०३.५.३१ ।।

ग्रास-आच्छादनं इतरे पतित-वर्जाः ।। ०३.५.३२ ।।

तेषां च कृत-दाराणां लुप्ते प्रजनने सति । ।। ०३.५.३३अ ब ।।

सृजेयुर्बान्धवाः पुत्रांस्तेषां अंशान्प्रकल्पयेत् ।। ०३.५.३३च्द् ।।

एक-स्त्री-पुत्राणां ज्येष्ठ-अंशः ब्राह्मणानां अजाः । क्षत्रियाणां अश्वाः । वैश्यानां गावः । शूद्राणां अवयः ।। ०३.६.०१ ।।

काण-लङ्गास्तेषां मध्यम-अंशः । भिन्न-वर्णाः कनिष्ठ-अंशः ।। ०३.६.०२ ।।

चतुष्पद-अभावे रत्न-वर्जानां दशानां भागं द्रव्याणां एकं ज्येष्ठो हरेत् ।। ०३.६.०३ ।।

प्रतिमुक्त-स्वधा-पाशो हि भवति ।। ०३.६.०४ ।।

इत्यौशनसो विभागः ।। ०३.६.०५ ।।

पितुः परिवापाद्यानं आभरणं च ज्येष्ठ-अंशः । शयन-आसनं भुक्त-कांस्यं च मध्यम-अंशः । कृष्णं धान्य-आयसं गृह-परिवापो गो-शकटं च कनिष्ठ-अंशः ।। ०३.६.०६ ।।

शेष-द्रव्याणां एक-द्रव्यस्य वा समो विभागः ।। ०३.६.०७ ।।

अदायादा भगिन्यः । मातुः परिवापाद्भुक्त-कांस्य-आभरण-भागिन्यः ।। ०३.६.०८ ।।

मानुष-हीनो ज्येष्ठस्तृतीयं अंशं ज्येष्ठ-अंशाल्लभेत । चतुर्थं अन्याय-वृत्तिः । निवृत्त-धर्म-कार्यो वा ।। ०३.६.०९ ।।

काम-आचारः सर्वं जीयेत ।। ०३.६.१० ।।

तेन मध्यम-कनिष्ठौ व्याख्यातौ ।। ०३.६.११ ।।

तयोर्मानुष-उपेतो ज्येष्ठ-अंशादर्धं लभेत ।। ०३.६.१२ ।।

नाना-स्त्री-पुत्राणां तु संस्कृत-असंस्कृतयोः कन्या-कृत-क्षतयोरभावे च एकस्याः पुत्रयोर्यमयोर्वा पूर्व-जन्मना ज्येष्ठ-भावः ।। ०३.६.१३ ।।

सूत-मागध-व्रात्य-रथ-काराणां ऐश्वर्यतो विभागः ।। ०३.६.१४ ।।

शेषास्तं उपजीवेयुः ।। ०३.६.१५ ।।

अनीश्वराः सम-विभागाः ।। ०३.६.१६ ।।

चातुर्वर्ण्य-पुत्राणां ब्राह्मणी-पुत्रश्चतुरोअंशान्हरेत् । क्षत्रिया-पुत्र-स्त्रीनंशान् । वैश्या-पुत्रो द्वावंशौ । एकं शूद्रा-पुत्रः ।। ०३.६.१७ ।।

तेन त्रि-वर्ण-द्वि-वर्ण-पुत्र-विभागः क्षत्रिय-वैश्ययोर्व्याख्यातः ।। ०३.६.१८ ।।

ब्राह्मणस्यानन्तरा-पुत्रस्तुल्य-अंशः ।। ०३.६.१९ ।।

क्षत्रिय-वैश्ययोरर्ध-अंशः तुल्य-अंशो वा मानुष-उपेतः ।। ०३.६.२० ।।

तुल्य-अतुल्ययोरेक-पुत्रः सर्वं हरेत् । बन्धूंश्च बिभृयात् ।। ०३.६.२१ ।।

ब्राह्मणानां तु पारशवस्तृतीयं अंशं लभेत । द्वावंशौ सपिण्डः कुल्यो वाआसन्नः । स्वधा-दान-हेतोः ।। ०३.६.२२ ।।

तद्-अभावे पितुराचार्योअन्तेवासी वा ।। ०३.६.२३ ।।

क्षेत्रे वा जनयेदस्य नियुक्तः क्षेत्रजं सुतं । ।। ०३.६.२४अ ब ।।

मातृ-बन्धुः सगोत्रो वा तस्मै तत्प्रदिशेद्धनं ।। ०३.६.२४च्द् ।।

"पर-परिग्रहे बीजं उत्सृष्टं क्षेत्रिणः" इत्याचार्याः || ०३.७.०१ ||

"माता भस्त्रा । यस्य रेतस्तस्यापत्यम्" इत्यपरे || ०३.७.०२ ||

विद्यमानं उभयं इति कौटिल्यः || ०३.७.०३ ||

स्वयं-जातः कृत-क्रियायां औरसः || ०३.७.०४ ||

तेन तुल्यः पुत्रिका-पुत्रः || ०३.७.०५ ||

सगोत्रेणान्य-गोत्रेण वा नियुक्तेन क्षेत्र-जातः क्षेत्रजः पुत्रः || ०३.७.०६ ||

जनयितुरसत्यन्यस्मिन्पुत्रे स एव द्वि-पितृको द्वि-गोत्रो वा द्वयोरपि स्वधा-रिक्थ-भाग्भवति || ०३.७.०७ ||

तत्-सधर्मा बन्धूनां गृहे गूढ-जातस्तु गूढजः || ०३.७.०८ ||

बन्धुनाउत्सृष्टोअपविद्धः संस्कर्तुः पुत्रः || ०३.७.०९ ||

कन्या-गर्भः कानीनः || ०३.७.१० ||

सगर्भ-ऊढायाः सह-ऊढः || ०३.७.११ ||

पुनर्-भूतायाः पौनर्भवः || ०३.७.१२ ||

स्वयं-जातः पितुर्बन्धूनां च दायादः || ०३.७.१३ ||

पर-जातः संस्कर्तुरेव न बन्धूनां || ०३.७.१४ ||

तत्-सधर्मा माता-पितृभ्यां अद्भिर्मुक्तो दत्तः || ०३.७.१५ ||

स्वयं बन्धुभिर्वा पुत्र-भाव-उपगत उपगतः || ०३.७.१६ ||

पुत्रत्वेअधिकृतः कृतकः || ०३.७.१७ ||

परिक्रीतः क्रीतः इति । || ०३.७.१८ ||

औरसे तुउत्पन्ने सवर्णास्तृतीय-अंश-हराः । असवर्णा ग्रास-आच्छादन-भागिनः || ०३.७.१९ ||

ब्राह्मण-क्षत्रिययोरनन्तरा-पुत्राः सवर्णाः । एक-अन्तरा असवर्णाः || ०३.७.२० ||

ब्राह्मणस्य वैश्यायां अम्बष्ठः । शूद्रायां निषादः पारशवो वा || ०३.७.२१ ||

क्षत्रियस्य शूद्रायां उग्रः || ०३.७.२२ ||

शूद्र एव वैश्यस्य || ०३.७.२३ ||

सवर्णासु चएषां अचरित-व्रतेभ्यो जाता व्रात्याः || ०३.७.२४ ||

इत्यनुलोमाः || ०३.७.२५ ||

शूद्रादायोगव-क्षत्त-चण्डालाः ।। ०३.७.२६ ।।

वैश्यान्मागध-वैदेहकौ ।। ०३.७.२७ ।।

क्षत्रियात्सूतः ।। ०३.७.२८ ।।

पौराणिकस्त्वन्यः सूतो मागधश्च । ब्रह्म-क्षत्राद्विशेषः ।। ०३.७.२९ ।।

त एते प्रतिलोमाः स्वधर्म-अतिक्रमाद्राज्ञः सम्भवन्ति ।। ०३.७.३० ।।

उग्रान्नैषाद्यां कुक्कुटः । विपर्यये पुल्कसः ।। ०३.७.३१ ।।

वैदेहिकायां अम्बष्ठाद्वैणः । विपर्यये कुशीलवः ।। ०३.७.३२ ।।

क्षत्तायां उग्रात्श्व-पाकः ।। ०३.७.३३ ।।

इत्येतेअन्ये चान्तरालाः ।। ०३.७.३४ ।।

कर्मणा वैश्यो रथ-कारः ।। ०३.७.३५ ।।

तेषां स्व-योनौ विवाहः । पूर्व-अपर-गामित्वं वृत्त-अनुवृत्तं च ।। ०३.७.३६ ।।

शूद्र-सधर्माणो वा । अन्यत्र चण्डालेभ्यः ।। ०३.७.३७ ।।

केवलं एवं वर्तमानः स्वर्गं आप्नोति राजा । नरकं अन्यथा ।। ०३.७.३८ ।।

सर्वेषां अन्तरालानां समो विभागः ।। ०३.७.३९ ।।

देशस्य जात्याः संघस्य धर्मो ग्रामस्य वाअपि यः । ।। ०३.७.४०अ ब ।।

उचितस्तस्य तेनएव दाय-धर्मं प्रकल्पयेत् ।। ०३.७.४०च्द् ।।

सामन्त-प्रत्यया वास्तु-विवादाः ।। ०३.८.०१ ।।

गृहं क्षेत्रं आरामः सेतु-बन्धस्तटाकं आधारो वा वास्तुः ।। ०३.८.०२ ।।

कर्ण-कील-आयस-सम्बन्धोअनुगृहं सेतुः ।। ०३.८.०३ ।।

यथा-सेतु-भोगं वेश्म कारयेत् ।। ०३.८.०४ ।।

अभूतं वा पर-कुड्यादपक्रम्य द्वावरत्नी त्रिपदीं वा देश-बन्धं कारयेत् ।। ०३.८.०५ ।।

अवस्करं भ्रमं उद-पानं वा न गृह-उचितादन्यत्र । अन्यत्र सूतिका-कूपादा-निर्दश-अहादिति ।। ०३.८.०६ ।।

तस्यातिक्रमे पूर्वः साहस-दण्डः ।। ०३.८.०७ ।।

तेनैन्धनावघातन-कृतं कल्याण-कृत्येष्वाचाम-उदक-मार्गाश्च व्याख्याताः ।। ०३.८.०८ ।।

त्रिपदी-प्रतिक्रान्तं अध्यर्धं अरत्निं वा गाढ-प्रसृतं उदक-मार्गं प्रस्रवण-प्रपातं वा कारयेत् ।। ०३.८.०९ ।।

तस्यातिक्रमे चतुष्-पञ्चाशत्-पणो दण्डः ।। ०३.८.१० ।।

एकपदी-प्रतिक्रान्तं अरत्निं वा चक्रि-चतुष्पद-स्थानं अग्निष्ठं उदन्-जर-स्थानं रोचनीं कुट्टनीं वा कारयेत् ।। ०३.८.११ ।।

तस्यातिक्रमे चतुर्-विंशति-पणो दण्डः ।। ०३.८.१२ ।।

सर्व-वास्तुकयोः प्राक्षिप्तकयोर्वा शालयोः किष्कुरन्तरिका त्रिपदी वा ।। ०३.८.१३ ।।

तयोश्चतुर्-अङ्गुलं नीप्र-अन्तरम्<नीव्र-अन्तरम्?> समारूढकं वा ।। ०३.८.१४ ।।

किष्कु-मात्रं आणि-द्वारं अन्तरिकायां खण्ड-फुल्ल-अर्थं असम्पातं कारयेत् ।। ०३.८.१५ ।।

प्रकाश-अर्थं अल्पं ऊर्ध्वं वात-अयनं कारयेत् ।। ०३.८.१६ ।।

तद्-अवसिते वेश्मनिच्छादयेत् ।। ०३.८.१७ ।।

सम्भूय वा गृह-स्वामिनो यथा-इष्टं कारयेयुः । अनिष्टं वारयेयुः ।। ०३.८.१८ ।।

वान-लट्याश्चऊर्ध्वं आवार्य-भागं कट-प्रच्छन्नं अवमर्श-भित्तिं वा कारयेद्वर्ष-आबाध-भयात् ।। ०३.८.१९ ।।

तस्यातिक्रमे पूर्वः साहस-दण्डः । प्रतिलोम-द्वार-वात-अयन-बाधायां च । अन्यत्र राज-मार्ग-रथ्याभ्यः ।। ०३.८.२० ।।

खात-सोपान-प्रणाली-निश्रेण्य्-अवस्कर-भागैर्बहिर्-बाधायां भोग-निग्रहे च ।। ०३.८.२१ ।।

पर-कुड्यं उदकेनौपघ्नतो द्वादश-पणो दण्डः । मूत्र-पुरीष-उपघाते द्वि-गुणः ।। ०३.८.२२ ।।

प्रणाली-मोक्षो वर्षति । अन्यथा द्वादश-पणो दण्डः ।। ०३.८.२३ ।।

प्रतिषिद्धस्य च वसतः । निरस्यतश्चावक्रयिणं अन्यत्र पारुष्य-स्तेय-साहस-संग्रहण-मिथ्या-भोगेभ्यः ।। ०३.८.२४ ।।

स्वयं-अभिप्रस्थितो वर्ष-अवक्रय-शेषं दद्यात् ।। ०३.८.२५ ।।

सामान्ये वेश्मनि साहाय्यं अप्रयच्छतः । सामान्यं उपरुन्धतो भोगं च गृहे द्वादश-पणो दण्डः ।। ०३.८.२६ ।।

विनाशयतस्तद्-द्वि-गुणः ।। ०३.८.२७ ।।

कोष्ठक-अङ्गण-वर्चानां अग्नि-कुट्टन-शालयोः । ।। ०३.८.२८अ ब ।।

विवृतानां च सर्वेषां सामान्यो भोग इष्यते ।। ०३.८.२८च्द् ।।

ज्ञाति-सामन्त-धनिकाः क्रमेण भूमि-परिग्रहान्क्रेतुं अभ्याभवेयुः ।। ०३.९.०१ ।।

ततोअन्ये बाह्याः ।। ०३.९.०२ ।।

सामन्त-चत्वारिंशत्-कुल्येषु गृह-प्रतिमुखे वेश्म श्रावयेयुः । सामन्त-ग्राम-वृद्धेषु क्षेत्रं आरामं सेतु-बन्धं तटाकं आधारं वा मर्यादासु यथा-सेतु-भोगं "अनेनार्घेण कः क्रेता" इति ।। ०३.९.०३ ।।

त्रिराघुषितं अव्याहतं क्रेता क्रेतुं लभेत ।। ०३.९.०४ ।।

स्पर्धया वा मूल्य-वर्धने मूल्य-वृद्धिः सशुल्का कोशं गच्छेत् ।। ०३.९.०५ ।।

विक्रय-प्रतिक्रोष्टा शुल्कं दद्यात् ।। ०३.९.०६ ।।

अस्वामि-प्रतिक्रोशे चतुर्-विंशति-पणो दण्डः ।। ०३.९.०७ ।।

सप्त-रात्रादूर्ध्वं अनभिसरतः प्रतिक्रुष्टो विक्रीणीत ।। ०३.९.०८ ।।

प्रतिक्रुष्ट-अतिक्रमे वास्तुनि द्विशतो दण्डः । अन्यत्र चतुर्-विंशति-पणो दण्डः इति वास्तु-विक्रयः । ।। ०३.९.०९ ।।

सीम-विवादं ग्रामयोरुभयोः सामन्ता पञ्च-ग्रामी दश-ग्रामी वा सेतुभिः स्थावरैः कृत्रिमैर्वा कुर्यात् ।। ०३.९.१० ।।

कर्षक-गो-पालक-वृद्धाः पूर्व-भुक्तिका वा बाह्याः सेतूनां अभिज्ञा बहव एको वा निर्दिश्य सीम-सेतून्विपरीत-वेषाः सीमानं नयेयुः ।। ०३.९.११ ।।

उद्दिष्टानां सेतूनां अदर्शने सहस्रं दण्डः । ।। ०३.९.१२ ।।

तदेव नीते सीम-अपहारिणां सेतुच्-छिदां च कुर्यात् ।। ०३.९.१३ ।।

प्रनष्ट-सेतु-भोगं वा सीमानं राजा यथा-उपकारं विभजेत् इति सीम-विवादः । ।। ०३.९.१४ ।।

क्षेत्र-विवादं सामन्त-ग्राम-वृद्धाः कुर्युः ।। ०३.९.१५ ।।

तेषां द्वैधी-भावे यतो बहवः शुचयोअनुमता वा ततो नियच्छेयुः मध्यं वा गृह्णीयुः ।। ०३.९.१६ ।।

तद्-उभय-परा-उक्तं वास्तु राजा हरेत् । प्रनष्ट-स्वामिकं च ।। ०३.९.१७ ।।

यथा-उपकारं वा विभजेत् ।। ०३.९.१८ ।।

प्रसह्य-आदाने वास्तुनि स्तेय-दण्डः ।। ०३.९.१९ ।।

कारण-आदाने प्रयासं आजीवं च परिसंख्याय बन्धं दद्यात् इति क्षेत्र-विवादः । ।। ०३.९.२० ।।

मर्यादा-अपहरणे पूर्वः साहस-दण्डः ।। ०३.९.२१ ।।

मर्यादा-भेदे चतुर्-विंशति-पणः ।। ०३.९.२२ ।।

तेन तपो-वन-विवीत-महा-पथ-श्मशान-देव-कुल-यजन-पुण्य-स्थान-विवादा व्याख्याताः इति मर्यादा-स्थापनं । ।। ०३.९.२३ ।।

सर्व एव विवादाः सामन्त-प्रत्ययाः ।। ०३.९.२४ ।।

विवीत-स्थल-केदार-षण्ड-खल-वेश्म-वाहन-कोष्ठानां पूर्वं-पूर्वं आबाधं सहेत ।। ०३.९.२५ ।।

ब्रह्म-सोम-अरण्य-देव-यजन-पुण्य-स्थान-वर्जाः स्थल-प्रदेशाः ।। ०३.९.२६ ।।

आधार-परिवाह-केदार-उपभोगैः पर-क्षेत्र-कृष्ट-बीज-हिंसायां यथा-उपघातं मूल्यं दद्युः ।। ०३.९.२७ ।।

केदार-आराम-सेतु-बन्धानां परस्पर-हिंसायां हिंसा-द्वि-गुणो दण्डः ।। ०३.९.२८ ।।

पश्चान्-निविष्टं अधर-तटाकं नौपरि-तटाकस्य केदारं उदकेनऽप्लावयेत् ।। ०३.९.२९ ।।

उपरि-निविष्टं नाधर-तटाकस्य पूर-आस्रावं वारयेद् । अन्यत्र त्रि-वर्ष-उपरत-कर्मणः ।। ०३.९.३० ।।

तस्यातिक्रमे पूर्वः साहस-दण्डः । तटाक-वामनं च ।। ०३.९.३१ ।।

पञ्च-वर्ष-उपरत-कर्मणः सेतु-बन्धस्य स्वाम्यं लुप्येत । अन्यत्रऽपद्भ्यः ।। ०३.९.३२ ।।

तटाक-सेतु-बन्धानां नव-प्रवर्तने पाञ्चवर्षिकः परिहारः । भग्न-उत्सृष्टानां चातुर्वर्षिकः । समुपारूढानां त्रैवर्षिकः । स्थलस्य द्वैवर्षिकः ।। ०३.९.३३ ।।

स्व-आत्म-आधाने विक्रये च ।। ०३.९.३४ ।।

खात-प्रावृत्तिं अनदी-निबन्ध-आयतन-तटाक-केदार-आराम-षण्ड-वापानां सस्य-वर्ण-भाग-उत्तरिकं अन्येभ्यो वा यथा-उपकारं दद्युः ।। ०३.९.३५ ।।

प्रक्रय-अवक्रय-अधिभाग-भोगनिषृष्ट-उपभोक्तारश्चएषां प्रतिकुर्युः ।। ०३.९.३६ ।।

अर्पतीकारे हीन-द्वि-गुणो दण्डः ।। ०३.९.३७ ।।

सेतुभ्यो मुञ्चतस्तोयं अवारे षट्-पणो दमः । ।। ०३.९.३८अ ब ।।

वारे वा तोयं अन्येषां प्रमादेनौपरुन्धतः ।। ०३.९.३८च्द् ।।

कर्म-उदक-मार्गं उचितं रुन्धतः कुर्वतोअनुचितं वा पूर्वः साहस-दण्डः । सेतु-कूप-पुण्य-स्थान-चैत्य-देव-आयतनानि च पर-भूमौ निवेशयतः ।। ०३.१०.०१ ।।

पूर्व-अनुवृत्तं धर्म-सेतुं आधानं विक्रयं वा नयतो नाययतो वा मध्यमः साहस-दण्डः । श्रोतृऋणां उत्तमः । अन्यत्र भग्न-उत्सृष्टात् ।। ०३.१०.०२ ।।

स्वाम्यभावे ग्रामाः पुण्य-शीला वा प्रतिकुर्युः ।। ०३.१०.०३ ।।

पथि-प्रमाणं दुर्ग-निवेशे व्याख्यातं ।। ०३.१०.०४ ।।

क्षुद्र-पशु-मनुष्य-पथं रुन्धतो द्वादश-पणो दण्डः । महा-पशु-पथं चतुर्-विंशति-पणः । हस्ति-क्षेत्र-पथं चतुष्-पञ्चाशत्-पणः । सेतु-वन-पथं षट्-शतः । श्मशान-ग्राम-पथं द्विशतः । द्रोण-मुख-पथं पञ्च-शतः । स्थानीय-राष्ट्र-विवीत-पथं साहस्रः ।। ०३.१०.०५ ।।

अतिकर्षणे चएषां दण्ड-चतुर्था दण्डाः ।। ०३.१०.०६ ।।

कर्षणे पूर्व-उक्ताः ।। ०३.१०.०७ ।।

क्षेत्रिकस्याक्षिपतः क्षेत्रं उपवासस्य वा त्यजतो बीज-काले द्वादश-पणो दण्डः । अन्यत्र दोष-उपनिपात-अविषह्येभ्यः ।। ०३.१०.०८ ।।

करदाः करदेष्वाधानं विक्रयं वा कुर्युः । ब्रह्म-देयिका ब्रह्म-देयिकेषु ।। ०३.१०.०९ ।।

अन्यथा पूर्वः साहस-दण्डः ।। ०३.१०.१० ।।

करदस्य वाअकरद-ग्रामं प्रविशतः ।। ०३.१०.११ ।।

करदं तु प्रविशतः सर्व-द्रव्येषु प्राकाम्यं स्यात् । अन्यत्रागारात् ।। ०३.१०.१२ ।।

तदप्यस्मै दद्यात् ।। ०३.१०.१३ ।।

अनादेयं अकृषतोअन्यः पञ्च-वर्षाण्युपभुज्य प्रयास-निष्क्रयेण दद्यात् ।। ०३.१०.१४ ।।

अकरदाः परत्र वसन्तो भोगं उपजीवेयुः ।। ०३.१०.१५ ।।

ग्राम-अर्थेन ग्रामिकं व्रजन्तं उपवासाः पर्यायेणानुगच्छेयुः ।। ०३.१०.१६ ।।

अननुगच्छन्तः पण-अर्ध-पणिकं योजनं दद्युः ।। ०३.१०.१७ ।।

ग्रामिकस्य ग्रामादस्तेन-पारदारिकं निरस्यतश्चतुर्-विंशति-पणो दण्डः । ग्रामस्यौत्तमः ।। ०३.१०.१८ ।।

निरस्तस्य प्रवेशो ह्यभिगमेन व्याख्यातः ।। ०३.१०.१९ ।।

स्तम्भैः समन्ततो ग्रामाद्धनुः-शत-अपकृष्टं उपसालं कारयेत् ।। ०३.१०.२० ।।

पशु-प्रचार-अर्थं विवीतं आलवनेनौपजीवेयुः ।। ०३.१०.२१ ।।

विवीतं भक्षयित्वाअपसृतानां उष्ट्र-महिषाणां पादिकं रूपं गृह्णीयुः । गव-अश्व-खराणां चार्ध-पादिकम् । क्षुद्र-पशूनां षोडश-भागिकं ।। ०३.१०.२२ ।।

भक्षयित्वा निषण्णानां एत एव द्वि-गुणा दण्डाः । परिवसतां चतुर्-गुणाः ।। ०३.१०.२३ ।।

ग्राम-देव-वृषा वाअनिर्दश-अहा वा धेनुरुक्षाणो गो-वृषाश्चादण्ड्याः ।। ०३.१०.२४ ।।

सस्य-भक्षणे सस्य-उपघातं निष्पत्तितः परिसंख्याय द्वि-गुणं दापयेत् ।। ०३.१०.२५ ।।

स्वामिनश्चानिवेद्य चारयतो द्वादश-पणो दण्दः । प्रमुञ्चतश्चतुर्-विंशति-पणः ।। ०३.१०.२६ ।।

पालिनां अर्ध-दण्डाः ।। ०३.१०.२७ ।।

तदेव षण्ड-भक्षणे कुर्यात् ।। ०३.१०.२८ ।।

वाट-भेदे द्वि-गुणः वेश्म-खल-वलय-गतानां च धान्यानां भक्षणे ।। ०३.१०.२९ ।।

हिंसा-प्रतीकारं कुर्यात् ।। ०३.१०.३० ।।

अभय-वन-मृगाः परिगृहीता वा भक्षयन्तः स्वामिनो निवेद्य यथाअवध्यास्तथा प्रतिषेद्धव्याः ।। ०३.१०.३१ ।।

पशवो रश्मि-प्रतोदाभ्यां वारयितव्याः ।। ०३.१०.३२ ।।

तेषां अन्यथा हिंसायां दण्ड-पारुष्य-दण्डाः ।। ०३.१०.३३ ।।

प्रार्थयमाना दृष्ट-अपराधा वा सर्व-उपायैर्नियन्तव्याः इति क्षेत्र-पथ-हिंसा । ।। ०३.१०.३४ ।।

कर्षकस्य ग्रामं अभ्युपेत्याकुर्वतो ग्राम एवात्ययं हरेत् ।। ०३.१०.३५ ।।

कर्म-अकरणे कर्म-वेतन-द्वि-गुणम् । हिरण्य-अदाने प्रत्यंश-द्वि-गुणम् । भक्ष्य-पेय-अदाने च प्रहवणेषु द्वि-गुणं अंशं दद्यात् ।। ०३.१०.३६ ।।

प्रेक्षायां अनंशदः । सस्व-जनो न प्रेक्षेत ।। ०३.१०.३७ ।।

प्रच्छन्न-श्रवण-ईक्षणे च सर्व-हिते च कर्मणि निग्रहेण द्वि-गुणं अंशं दद्यात् ।। ०३.१०.३८ ।।

सर्व-हितं एकस्य ब्रुवतः कुर्युराज्ञां ।। ०३.१०.३९ ।।

अकरणे द्वादश-पणो दण्डः ।। ०३.१०.४० ।।

तं चेत्सम्भूय वा हन्युः पृथगेषां अपराध-द्वि-गुणो दण्डः ।। ०३.१०.४१ ।।

उपहन्तृषु विशिष्टः ।। ०३.१०.४२ ।।

ब्राह्मणश्चएषां ज्यैष्ठ्यं नियम्येत ।। ०३.१०.४३ ।।

प्रहवणेषु चएषां ब्राह्मणा नाकामाः कुर्युः । अंशं च लभेरन् ।। ०३.१०.४४ ।।

तेन देश-जाति-कुल-संघानां समयस्यानपाकर्म व्याख्यातं ।। ०३.१०.४५ ।।

राजा देश-हितान्सेतून्कुर्वतां पथि संक्रमान् । ।। ०३.१०.४६अ ब ।।

ग्राम-शोभाश्च रक्षाश्च तेषां प्रिय-हितं चरेत् ।। ०३.१०.४६च्द् ।।

सपाद-पणा धर्म्या मास-वृद्धिः पण-शतस्य । पञ्च-पणा व्यावहारिकी । दश-पणा कान्तारगाणाम् । विंशति-पणा सामुद्राणां ।। ०३.११.०१ ।।

ततः परं कर्तुः कारयितुश्च पूर्वः साहस-दण्डः । श्रोतृऋणां एक-एकं प्रत्यर्ध-दण्डः ।। ०३.११.०२ ।।

राजन्ययोग-क्षेम-आवहे तु धनिक-धारणिकयोश्चरित्रं अवेक्षेत ।। ०३.११.०३ ।।

धान्य-वृद्धिः सस्य-निष्पत्तावुपार्धा । परं मूल्य-कृता वर्धेत ।। ०३.११.०४ ।।

प्रक्षेप-वृद्धिरुदयादर्धं सम्निधान-सन्ना वार्षिकी देया ।। ०३.११.०५ ।।

चिर-प्रवासः स्तम्भ-प्रविष्टो वा मूल्य-द्वि-गुणं दद्यात् ।। ०३.११.०६ ।।

अकृत्वा वृद्धिं साधयतो वर्धयतो वा । मूल्यं वा वृद्धिं आरोप्य श्रावयतो बन्ध-चतुर्-गुणो दण्डः ।। ०३.११.०७ ।।

तुच्छ-श्रावणायां अभूत-चतुर्-गुणः ।। ०३.११.०८ ।।

तस्य त्रि-भागं आदाता दद्यात् । शेषं प्रदाता ।। ०३.११.०९ ।।

दीर्घ-सत्त्र-व्याधि-गुरु-कुल-उपरुद्धं बालं असारं वा नऋणं अनुवर्धेत ।। ०३.११.१० ।।

मुच्यमानं ऋणं अप्रतिगृह्णतो द्वादश-पणो दण्डः ।। ०३.११.११ ।।

कारण-अपदेशेन निवृत्त-वृद्धिकं अन्यत्र तिष्ठेत् ।। ०३.११.१२ ।।

दश-वर्ष-उपेक्षितं ऋणं अप्रतिग्राह्यम् । अन्यत्र बाल-वृद्ध-व्याधित-व्यसनि-प्रोषित-देश-त्याग-राज्य-विभ्रमेभ्यः ।। ०३.११.१३ ।।

प्रेतस्य पुत्राः कुसीदं दद्युः । दायादा वा रिक्थ-हराः । सह-ग्राहिणः । प्रतिभुवो वा ।। ०३.११.१४ ।।

न प्रातिभाव्यं अन्यत् ।। ०३.११.१५ ।।

असारं बाल-प्रातिभाव्यं ।। ०३.११.१६ ।।

असंख्यात-देश-कालं तु पुत्राः पौत्रा दायादा वा रिक्थं हरमाणा दद्युः ।। ०३.११.१७ ।।

जीवित-विवाह-भूमि-प्रातिभाव्यं असंख्यात-देश-कालं तु पुत्राः पौत्रा वा वहेयुः ।। ०३.११.१८ ।।

नानाऋण-समवाये तु नएकं द्वौ युगपदभिवदेयाताम् । अन्यत्र प्रतिष्ठमानात् ।। ०३.११.१९ ।।

तत्रापि गृहीत-आनुपूर्व्या राज-श्रोत्रिय-द्रव्यं वा पूर्वं प्रतिपादयेत् ।। ०३.११.२० ।।

दम्पत्योः पिता-पुत्रयोः भ्रातृऋणां चाविभक्तानां परस्पर--कृतं ऋणं असाध्यं ।। ०३.११.२१ ।।

अग्राह्याः कर्म-कालेषु कर्षका राज-पुरुषाश्च ।। ०३.११.२२ ।।

स्त्री चाप्रतिश्राविणी पति-कृतं ऋणम् । अन्यत्र गो-पालक-अर्ध-सीतिकेभ्यः ।। ०३.११.२३ ।।

पतिस्तु ग्राह्यः स्त्री-कृतं ऋणम् । अप्रति-विधाय प्रोषित इति ।। ०३.११.२४ ।।

सम्प्रतिपत्तावुत्तमः ।। ०३.११.२५ ।।

अस्मप्रतिपत्तौ तु साक्षिणः प्रमाणं प्रात्ययिकाः शुचयोअनुमता वा त्रयोअवर-अर्ध्याः ।। ०३.११.२६ ।।

पक्ष-अनुमतौ वा द्वौ । ऋणं प्रति न त्वेवएकः ।। ०३.११.२७ ।।

प्रतिषिद्धाः स्याल-सहाय-अन्वर्थि-धनिक-धारणिक-वैरि-न्यङ्ग-धृत-दण्डाः । पूर्वे चाव्यवहार्याः ।। ०३.११.२८ ।।

राज-श्रोत्रिय-ग्राम-भृतक-कुष्ठि-व्रणिनः पतित-चण्डाल-कुत्सित-कर्माणोअन्ध-बधिर-मूक-अहं-वादिनः स्त्री-राज-पुरुषाश्च । अन्यत्र स्व-वर्गेभ्यः ।। ०३.११.२९ ।।

पारुष्य-स्तेय-संग्रहणेषु तु वैरि-स्याल-सहाय-वर्जाः ।। ०३.११.३० ।।

रहस्य-व्यवहारेष्वेका स्त्री पुरुष उपश्रोता उपद्रष्टा वा साक्षी स्याद्राज-तापस-वर्जं ।। ०३.११.३१ ।।

स्वामिनो भृत्यानां ऋत्विग्-आचार्याः शिष्याणां माता-पितरौ पुत्राणां चानिग्रहेण साक्ष्यं कुर्युः । तेसां इतरे वा ।। ०३.११.३२ ।।

परस्पर-अभियोगे चएषां उत्तमाः परा-उक्ता दश-बन्धं दद्युः । अवराः पञ्च-बन्धं इति साक्ष्य्-अधिकारः ।। ०३.११.३३ ।।

ब्राह्मण-उद-कुम्भ-अग्नि-सकाशे साक्षिणः परिगृह्णीयात् ।। ०३.११.३४ ।।

तत्र ब्राह्मणं ब्रूयात्"सत्यं ब्रूहि" इति ।। ०३.११.३५ ।।

राजन्यं वैश्यं वा "मा तवैष्टा-पूर्त-फलम् । कपाल-हस्तः शत्रु-कुलं भिक्षा-अर्थी गच्छेः" इति ।। ०३.११.३६ ।।

शूद्रं "जन्म-मरण-अन्तरे यद्वः पुण्य-फलं तद्राजानं गच्छेद् । राज्ञश्च किल्बिषं युष्मानन्यथा-वादे । दण्डश्चानुबद्धः । पश्चादपि ज्ञायेत यथा-दृष्ट-श्रुतम् । एक-मन्त्राः सत्यं उपहरत" इति ।। ०३.११.३७ ।।

अनुपहरतां सप्त-रात्रादूर्ध्वं द्वादश-पणो दण्डः । त्रि-पक्षादूर्ध्वं अभियोगं दद्युः ।। ०३.११.३८ ।।

साक्षि-भेदे यतो बहवः शुचयोअनुमता वा ततो नियच्छेयुः । मध्यं वा गृह्णीयुः ।। ०३.११.३९ ।।

तद्वा द्रव्यं राजा हरेत् ।। ०३.११.४० ।।

साक्षिणश्चेदभियोगादूनं ब्रूयुरतिरिक्तस्याभियोक्ता बन्धं दद्यात् ।। ०३.११.४१ ।।

अतिरिक्तं वा ब्रूयुस्तद्-अतिरिक्तं राजा हरेत् ।। ०३.११.४२ ।।

बालिश्यादभियोक्तुर्वा दुह्श्रुतं दुर्लिखितं प्रेत-अभिनिवेशं वा समीक्ष्य साक्षि-प्रत्ययं एव स्यात् ।। ०३.११.४३ ।।

"साक्षि-बालिष्येष्वेव पृथग्-अनुयोगे देश-काल-कार्याणां पूर्व-मध्यम-उत्तमा दण्डाः" इत्यौशनसाः ।। ०३.११.४४ ।।

"कूट-साक्षिणो यं अर्थं अभूतं कुर्युर्भूतं वा नाशयेयुस्तद्दश-गुणं दण्डं दद्युः" इति मानवाः ।। ०३.११.४५ ।।

"बालिश्याद्वा विसंवादयतां चित्रो घातः" इति बार्हस्पत्याः ।। ०३.११.४६ ।।

नैति कौटिल्यः ।। ०३.११.४७ ।।

ध्रुवं हि साक्षिभिः श्रोतव्यं ।। ०३.११.४८ ।।

अशृण्वतां चतुर्-विंशति-पणो दण्डः । ततोअर्धं अब्रुवाणानां ।। ०३.११.४९ ।।

देश-काल-अविदूरस्थान्साक्षिणः प्रतिपादयेत् । ।। ०३.११.५०अ ब ।।

दूरस्थानप्रसारान्वा स्वामि-वाक्येन साधयेत् ।। ०३.११.५०च्द् ।।

उपनिधिरृणेन व्याख्यातः ।। ०३.१२.०१ ।।

पर-चक्र-आटविकाभ्यां दुर्ग-राष्ट्र-विलोपे वा । प्रतिरोधकैर्वा ग्राम-सार्थ-व्रज-विलोपे । चक्र-युक्त-नाशे वा । ग्राम-मध्य-अग्न्य्-उदक-आबाधे ज्वाला-वेग-उपरुद्धे वा । नावि निमग्नायां मुषितायां वा स्वयं उपरूढो नौपनिधिं अभ्यावहेत् ।। ०३.१२.०२ ।।

उपनिधि-भोक्ता देश-काल-अनुरूपं भोग-वेतनं दद्यात् । द्वादश-पणं च दण्डं ।। ०३.१२.०३ ।।

उपभोग-निमित्तं नष्टं विनष्टं वाअभ्यावहेत् । चतुर्-विंशति-पणश्च दण्डः । अन्यथा वा निष्पतने ।। ०३.१२.०४ ।।

प्रेतं व्यसन-गतं वा नौपनिधिं अभ्यावहेत् ।। ०३.१२.०५ ।।

आधान-विक्रय-अपव्ययनेषु चास्य चतुर्-गुण-पञ्च-बन्धो दण्डः ।। ०३.१२.०६ ।।

परिवर्तने निष्पातने वा मूल्य-समः ।। ०३.१२.०७ ।।

तेनऽधि-प्रणाश-उपभोग-विक्रय-आधान-अपहारा व्याख्याताः ।। ०३.१२.०८ ।।

नऽधिः सौपकारः सीदेत् । न चास्य मूल्यं वर्धेत । अन्यत्र निसर्गात् ।। ०३.१२.०९ ।।

निरुपकारः सीदेत् । मूल्यं चास्य वर्धेत ।। ०३.१२.१० ।।

उपस्थितस्यऽधिं अप्रयच्छतो द्वादशण्पणो दण्डः ।। ०३.१२.११ ।।

प्रयोजक-असम्निधाने वा ग्राम-वृद्धेषु स्थापयित्वा निष्क्रयं आधिं प्रतिपद्येत ।। ०३.१२.१२ ।।

निवृत्त-वृद्धिको वाआधिस्तत्-काल-कृत-मूल्यस्तत्रएवावतिष्ठेत । अनाश-विनाश-करण-अधिष्ठितो वा ।। ०३.१२.१३ ।।

धारणिक-असम्निधाने वा विनाश-भयादुद्गत-अर्घं धर्मस्थ-अनुज्ञातो विक्रीणीत । आधि-पाल-प्रत्ययो वा ।। ०३.१२.१४ ।।

स्थावरस्तु प्रयास-भोग्यः फल-भोग्यो वा प्रक्षेप-वृद्धि-मूल्य-शुद्धं आजीवं अमूल्य-क्षयेणौपनयेत् ।। ०३.१२.१५ ।।

अनिसृष्ट-उपभोक्ता मूल्य-शुद्धं आजीवं बन्धं च दद्यात् ।। ०३.१२.१६ ।।

शेषं उपनिधिना व्याख्यातं ।। ०३.१२.१७ ।।

एतेनऽदेशोअन्वाधिश्च व्याख्यातौ ।। ०३.१२.१८ ।।

सार्थेनान्वाधि-हस्तो वा प्रदिष्टां भूमिं अप्राप्तश्चोरैर्भग्न-उत्सृष्टो वा नान्वाधिं अभ्यावहेत् ।। ०३.१२.१९ ।।

अन्तरे वा मृतस्य दायादोअपि नाभ्यावहेत् ।। ०३.१२.२० ।।

शेषं उपनिधिना व्यकह्यातं ।। ०३.१२.२१ ।।

याचितकं अवक्रीतकं वा यथा-विधं गृह्णीयुस्तथा-विधं एवार्पयेयुः ।। ०३.१२.२२ ।।

भ्रेष-उपनिपाताभ्यां देश-काल-उपरोधि दत्तं नष्टं विनष्टं वा नाभ्यावहेयुः ।। ०३.१२.२३ ।।

शेषं उपनिधिना व्याख्यातं ।। ०३.१२.२४ ।।

वैयावृत्य-विक्रयस्तु वैयावृत्य-करा यथा-देश-कालं विक्रीणानाः पण्यं यथा-जातं मूल्यं उदयं च दद्युः ।। ०३.१२.२५ ।।

देश-काल-अतिपातने वा परिहीणं सम्प्रदान-कालिकेनार्घेण मूल्यं उदयं च दद्युः ।। ०३.१२.२६ ।।

यथा-सम्भाषितं वा विक्रीणाना नौदयं अधिगच्छेयुः । मूल्यं एव दद्युः ।। ०३.१२.२७ ।।

अर्घ-पतने वा परिहीणं यथा-परिहीणं मूल्यं ऊनं दद्युः ।। ०३.१२.२८ ।।

सांव्यवहारिकेषु वा प्रात्ययिकेष्वराज-वाच्येषु भ्रेष-उपनिपाताभ्यां नष्टं विनष्टं वा मूल्यं अपि न दद्युः ।। ०३.१२.२९ ।।

देश-काल-अन्तरितानां तु पण्यानां क्षय-व्यय-विशुद्धं मूल्यं उदयं च दद्युः । पण्य-समवायानां च प्रत्यंशं ।। ०३.१२.३० ।।

शेषं उपनिधिना व्याख्यातं ।। ०३.१२.३१ ।।

एतेन वैयावृत्य-विक्रयो व्याख्यातः ।। ०३.१२.३२ ।।

निक्षेपश्चौपनिधिना ।। ०३.१२.३३ ।।

तं अन्येन निक्षिपतं अन्यस्यार्पयतो हीयेत ।। ०३.१२.३४ ।।

निक्षेप-अपहारे पूर्व-अपदानं निक्षेप्तारश्च प्रमाणं ।। ०३.१२.३५ ।।

अशुचयो हि कारवः ।। ०३.१२.३६ ।।

नएषां करण-पूर्वो निक्षेप-धर्मः ।। ०३.१२.३७ ।।

करण-हीनं निक्षेपं अपव्ययमानं गूढ-भित्ति-न्यस्तान्साक्षिणो निक्षेप्ता रहसि प्रणिपातेन प्रज्ञापयेत् । वन-अन्ते वा मद्य-प्रहवण-विश्वासेन ।। ०३.१२.३८ ।।

रहसि वृद्धो व्याधितो वा वैदेहकः कश्चित्कृत-लक्षणं द्रव्यं अस्य हस्ते निक्षिप्यापगच्छेत् ।। ०३.१२.३९ ।।

तस्य प्रतिदेशेन पुत्रो भ्राता वाअभिगम्य निक्षेपं याचेत ।। ०३.१२.४० ।।

दाने शुचिः । अन्यथा निक्षेपं स्तेय-दण्डं च दद्यात् ।। ०३.१२.४१ ।।

प्रव्रज्या-अभिमुखो वा श्रद्धेयः कश्चित्कृत-लक्षणं द्रव्यं अस्य हस्ते निक्षिप्य प्रतिष्ठेत ।। ०३.१२.४२ ।।

ततः काल-अन्तर-आगतो याचेत ।। ०३.१२.४३ ।।

दाने शुचिः । अन्यथा निक्षेपं स्तेय-दण्डं च दद्यात् ।। ०३.१२.४४ ।।

कृत-लक्षणेन वा द्रव्येण प्रत्यानयेदेनं ।। ०३.१२.४५ ।।

बालिश-जातीयो वा रात्रौ राज-दायिका-क्षण-भीतः सारं अस्य हस्ते निक्षिप्यापगच्छेत् ।। ०३.१२.४६ ।।

स एनं बन्धन-अगार-गतो याचेत ।। ०३.१२.४७ ।।

दाने शुचिः । अन्यथा निक्षेपं स्तेय-दण्डं च दद्यात् ।। ०३.१२.४८ ।।

अभिज्ञानेन चास्य गृहे जनं उभयं याचेत ।। ०३.१२.४९ ।।

अन्यतर्त-आदाने यथा-उक्तं पुरस्तात् ।। ०३.१२.५० ।।

द्रव्य-भोगानां आगमं चास्यानुयुञ्जीत । तस्य चार्थस्य व्यवहार-उपलिङ्गनम् । अभियोक्तुश्चार्थ-सामर्थ्यं ।। ०३.१२.५१ ।।

एतेन मिथः-समवायो व्याख्यातः ।। ०३.१२.५२ ।।

तस्मात्साक्षिमदच्छन्नं कुर्यात्सम्यग्-विभाषितं । ।। ०३.१२.५३अ ब ।।

स्वे परे वा जने कार्यं देश-काल-अग्र-वर्णतः ।। ०३.१२.५३च्द् ।।

उदर-दास-वर्जं आर्य-प्राणं अप्राप्त-व्यवहारं शूद्रं विक्रय-आधानं नयतः स्व-जनस्य द्वादश-पणो दण्डः । वैश्यं द्वि-गुणः । क्षत्रियं त्रि-गुणः । ब्राह्मणं चतुर्-गुणः ।। ०३.१३.०१ ।।

पर-जनस्य पूर्व-मध्यम-उत्तम-वधा दण्डाः । क्रेतृ-श्रोतृऋणां च ।। ०३.१३.०२ ।।

म्लेच्छानां अदोषः प्रजां विक्रेतुं आधातुं वा ।। ०३.१३.०३ ।।

न त्वेवऽर्यस्य दास-भावः ।। ०३.१३.०४ ।।

अथवाआर्यं आधाय कुल-बन्धन आर्याणां आपदि । निष्क्रयं चाधिगम्य बालं साहाय्य-दातारं वा पूर्वं निष्क्रीणीरन् ।। ०३.१३.०५ ।।

सकृद्-आत्म-आधाता निष्पतितः सीदेत् । द्विरन्येनऽहितकः । सकृदुभौ पर-विषय-अभिमुखौ ।। ०३.१३.०६ ।।

वित्त-अपहारिणो वा दासस्यऽर्य-भावं अपहरतोअर्ध-दण्डः ।। ०३.१३.०७ ।।

निष्पतित-प्रेत-व्यसनिनां आधाता मूल्यं भजेत ।। ०३.१३.०८ ।।

प्रेत-विण्-मूत्र-उच्छिष्ट-ग्राहणं आहितस्य नग्न-स्नापनं दण्ड-प्रेषणं अतिक्रमणं च स्त्रीणां मूल्य-नाश-करं । धात्री-परिचारिक-अर्ध-सीतिक-उपचारिकाणां च मोक्ष-करं ।। ०३.१३.०९ ।।

सिद्धं उपचारकस्याभिप्रजातस्यापक्रमणं ।। ०३.१३.१० ।।

धात्रीं आहितिकां वाअकामां स्व-वशां गच्छतः पूर्वः साहस-दण्डः । पर-वशां मध्यमः ।। ०३.१३.११ ।।

कन्यां आहितिकां वा स्वयं अन्येन वा दुषयतो मूल्य-नाशः शुल्कं तद्-द्वु-गुणश्च दण्डः ।। ०३.१३.१२ ।।

आत्म-विक्रयिणः प्रजां आर्यां विद्यात् ।। ०३.१३.१३ ।।

आत्म-अधिगतं स्वामि-कर्म-अविरुद्धं लभेत । पित्र्यं च दायं ।। ०३.१३.१४ ।।

मूल्येन चऽर्यत्वं गच्छेत् ।। ०३.१३.१५ ।।

तेनौदर-दास-आहितकौ व्याख्यातौ ।। ०३.१३.१६ ।।

प्रक्षेप-अनुरूपश्चास्य निष्क्रयः ।। ०३.१३.१७ ।।

दण्ड-प्रणीतः कर्मणा दण्डं उपनयेत् ।। ०३.१३.१८ ।।

आर्य-प्राणो ध्वज-आहृतः कर्म-काल-अनुरूपेण मूल्य-अर्धेन वा विमुच्येत ।। ०३.१३.१९ ।।

गृहे-जात-दाय-आगत-लब्ध-क्रीतानां अन्यतमं दासं ऊन-अष्ट-वर्षं विबन्धुं अकामं नीचे कर्मणि विदेशे दासीं वा सगर्भां अप्रतिविहित-गर्भ-भर्मण्यां विक्रय-आधानं नयतः पूर्वः साहस-दण्डः । क्रेतृ-श्रोतृऋणां च ।। ०३.१३.२० ।।

दासं अनुरूपेण निष्क्रयेणऽर्यं अकुर्वतो द्वादश-पणो दण्डः । संरोधश्चऽ-करणात् ।। ०३.१३.२१ ।।

दास-द्रव्यस्य ज्ञातयो दायादाः । तेषां अभावे स्वामी ।। ०३.१३.२२ ।।

स्वामिनः स्वस्यां दास्यां जातं समातृकं अदासं विद्यात् ।। ०३.१३.२३ ।।

गृह्या चेत्कुटुम्ब-अर्थ-चिन्तनी माता भ्राता भगिनी चास्या अदासाः स्युः ।। ०३.१३.२४ ।।

दासं दासीं वा निष्क्रीय पुनर्विक्रय-आधानं नयतो द्वादश-पणो दण्डः । अन्यत्र स्वयं-वादिभ्यः इति दास-कल्पः । ।। ०३.१३.२५ ।।

कर्म-करस्य कर्म-सम्बन्धं आसन्ना विद्युः ।। ०३.१३.२६ ।।

यथा-सम्भाषितं वेतनं लभेत । कर्म-काल-अनुरूपं असम्भाषित-वेतनः ।। ०३.१३.२७ ।।

कर्षकः सस्यानां गो-पालकः सर्पिषां वैदेहकः पण्यानां आत्मना व्यवहृतानां दश-भागं असम्भाषित-वेतनो लभेत ।। ०३.१३.२८ ।।

सम्भाषित-वेतनस्तु यथा-सम्भाषितं ।। ०३.१३.२९ ।।

कारु-शिल्पि-कुशीलव-चिकित्सक-वाग्-जीवन-परिचारक-आदिराशा-कारिक-वर्गस्तु यथाअन्यस्तद्-विधः कुर्याद्यथा वा कुशलाः कल्पयेयुस्तथा वेतनं लभेत ।। ०३.१३.३० ।।

साक्षि-प्रत्ययं एव स्यात् ।। ०३.१३.३१ ।।

साक्षिणां अभावे यतः कर्म ततोअनुयुञ्जीत ।। ०३.१३.३२ ।।

वेतन-आदाने दश-बन्धो दण्डः । षट्-पणो वा ।। ०३.१३.३३ ।।

अपव्ययमाने द्वादश-पणो दण्डः । पञ्च-बन्धो वा ।। ०३.१३.३४ ।।

नदी-वेग-ज्वाला-स्तेन-व्याल-उपरुद्धः सर्व-स्व-पुत्र-दार-आत्म-दानेनऽर्तस्त्रातारं आहूय निष्तीर्णः कुशल-प्रदिष्टं वेतनं दद्यात् ।। ०३.१३.३५ ।।

तेन सर्वत्रऽर्त-दान-अनुशया व्याख्याताः ।। ०३.१३.३६ ।।

लभेत पुंश्चली भोगं संगमस्यौपलिङ्गनात् । ।। ०३.१३.३७अ ब ।।

अतियाच्ना तु जीयेत दौर्मत्य-अविनयेन वा ।। ०३.१३.३७च्द् ।।

गृहीत्वा वेतनं कर्माकुर्वतो भृतकस्य द्वादश-पणो दण्डः । संरोधश्चऽ-करणात् ।। ०३.१४.०१ ।।

अशक्तः कुत्सिते कर्मणि व्याधौ व्यसने वाअनुशयं लभेत । परेण वा कारयितुं ।। ०३.१४.०२ ।।

तस्य-व्यय-कर्मणा लभेत भर्ता वा कारयितुं ।। ०३.१४.०३ ।।

"नान्यस्त्वया कारयितव्यो । मया वा नान्यस्य कर्तव्यम्" इत्यवरोधे भर्तुरकारयतो भृतकस्याकुर्वतो वा द्वादश-पणो दण्डः ।। ०३.१४.०४ ।।

कर्म-निष्ठापने भर्तुरन्यत्र गृहीत-वेतनो नासकामः कुर्यात् ।। ०३.१४.०५ ।।

"उपस्थितं अकारयतः कृतं एव विद्याद्" इत्याचार्याः ।। ०३.१४.०६ ।।

नैति कौटिल्यः ।। ०३.१४.०७ ।।

कृतस्य वेतनं नाकृतस्यास्ति ।। ०३.१४.०८ ।।

स चेदल्पं अपि कारयित्वा न कारयेत्कृतं एवास्य विद्यात् ।। ०३.१४.०९ ।।

देश-काल-अतिपातनेन कर्मणां अन्यथा-करणे वा नासकामः कृतं अनुमन्येत ।। ०३.१४.१० ।।

सम्भाषितादधिक-क्रियायां प्रयासं न मोघं कुर्यात् ।। ०३.१४.११ ।।

तेन संघ-भृता व्याख्याताः ।। ०३.१४.१२ ।।

तेषां आधिः सप्त-रात्रं आसीत ।। ०३.१४.१३ ।।

ततोअन्यं उपस्थापयेत् । कर्म-निष्पाकं च ।। ०३.१४.१४ ।।

न चानिवेद्य भर्तुः संघः कंचित्परिहरेदुपनयेद्वा ।। ०३.१४.१५ ।।

तस्यातिक्रमे चतुर्-विंशति-पणो दण्डः ।। ०३.१४.१६ ।।

संघेन परिहृतस्यार्ध-दण्डः इति भृतक-अधिकारः ।। ०३.१४.१७ ।।

संघ-भृताः सम्भूय-समुत्थातारो वा यथा-सम्भाषितं वेतनं समं वा विभजेरन् ।। ०३.१४.१८ ।।

कर्षण-वैदेहका वा सस्य-पण्य-आरम्भ-पर्यवसान-अन्तरे सन्नस्य यथा-कृतस्य कर्मणः प्रत्यंशं दद्युः ।। ०३.१४.१९ ।।

पुरुष-उपस्थाने समग्रं अंशं दद्युः ।। ०३.१४.२० ।।

संसिद्धे तुउद्धृत-पण्ये सन्नस्य तदानीं एव प्रत्यंशं दद्युः ।। ०३.१४.२१ ।।

सामान्या हि पथि-सिद्धिश्चासिद्धिश्च ।। ०३.१४.२२ ।।

प्रक्रान्ते तु कर्मणि स्वस्थस्यापक्रामतो द्वादश-पणो दण्डः ।। ०३.१४.२३ ।।

न च प्राकाम्यं अपक्रमणे ।। ०३.१४.२४ ।।

चोरं त्वभय-पूर्वं कर्मणः प्रत्यंशेन ग्राहयेद् । दद्यात्प्रत्यंशं अभयं च ।। ०३.१४.२५ ।।

पुनः-स्तेये प्रवासनम् । अन्यत्र-गमने च ।। ०३.१४.२६ ।।

महा-अपराधे तु दूष्यवदाचरेत् ।। ०३.१४.२७ ।।

याजकाः स्वा-प्रचार-द्रव्य-वर्जं यथा-सम्भाषितं वेतनं समं वा विभजेरन् ।। ०३.१४.२८ ।।

अग्निष्टोम-आदिषु च क्रतुषु दीक्षणादूर्ध्वं तृतीयं अंशं । मध्यम-उपसद ऊर्ध्वं अर्धं अंशं । सुत्ये प्रातः-सवनादूर्ध्वं पाद-ऊनं अंशं ।। ०३.१४.२९ ।।

माध्यन्दिनात्सवनादूर्ध्वं समग्रं अंशं लभेत ।। ०३.१४.३० ।।

नीता हि दक्षिणा भवन्ति ।। ०३.१४.३१ ।।

बृहस्पति-सव-वर्जं प्रतिसवनं हि दक्षिणा दीयन्ते ।। ०३.१४.३२ ।।

तेनाहर्-गण-दक्षिणा व्याख्याताः ।। ०३.१४.३३ ।।

सनानां आ-दश-अहो-रात्रात्शेष-भृताः कर्म कुर्युः । अन्ये वा स्व-प्रत्ययाः ।। ०३.१४.३४ ।।

कर्मण्यसमाप्ते तु यजमानः सीदेद् । ऋत्विजः कर्म समापय्य दक्षिणां हरेयुः ।। ०३.१४.३५ ।।

असमाप्ते तु कर्मणि याज्यं याजकं वा त्यजतः पूर्वः साहस-दण्डः ।। ०३.१४.३६ ।।

अनाहित-अग्निः शत-गुरु-यज्वा च सहस्रगुः । ।। ०३.१४.३७अ ब ।।

सुरापो वृषली-भर्ता ब्रह्महा गुरु-तल्पगः ।। ०३.१४.३७च्द् ।।

असत्-प्रतिग्रहे युक्तः स्तेनः कुत्सित-याजकः । ।। ०३.१४.३८अ ब ।।

अदोषस्त्यक्तुं अन्योन्यं कर्म-संकर-निश्चयात् ।। ०३.१४.३८च्द् ।।

विक्रीय पण्यं अप्रयच्छतो द्वादश-पणो दण्डः । अन्यत्र दोष-उपनिपात-अविषह्येभ्यः ।। ०३.१५.०१ ।।

पण्य-दोषो दोषः ।। ०३.१५.०२ ।।

राज-चोर-अग्न्य्-उदक-बाध उपनिपातः ।। ०३.१५.०३ ।।

बहु-गुण-हीनं आर्त-कृतं वाअविषह्यं ।। ०३.१५.०४ ।।

वैदेहकानां एक-रात्रं अनुशयः । कर्षकाणां त्रि-रात्रं । गो-रक्षकाणां पञ्च-रात्रं ।। ०३.१५.०५ ।।

व्यामिश्राणां उत्तमानां च वर्णानां वृत्ति-विक्रये सप्त-रात्रं ।। ०३.१५.०६ ।।

आतिपातिकानां पण्यानां "अन्यत्र-अविक्रेयम्" इत्यवरोधेनानुशयो देयः ।। ०३.१५.०७ ।।

तस्यातिक्रमे चतुर्-विंशति-पणो दण्डः । पण्य-दश-भागो वा ।। ०३.१५.०८ ।।

क्रीत्वा पण्यं अप्रतिगृह्णतो द्वादश-पणो दण्डः । अन्यत्र दोष-उपनिपात-अविषह्येभ्यः ।। ०३.१५.०९ ।।

समानश्चानुशयो विक्रेतुरनुशयेन ।। ०३.१५.१० ।।

विवाहानां तु त्रयाणां पूर्वेषां वर्णानां पाणि-ग्रहणात्सिद्धं उपावर्तनं । शूद्राणां च प्रकर्मणः ।। ०३.१५.११ ।।

वृत्त-पाणि-ग्रहणयोरपि दोषं औपशायिकं दृष्ट्वा सिद्धं उपावर्तनं ।। ०३.१५.१२ ।।

न त्वेवाभिप्रजातयोः ।। ०३.१५.१३ ।।

कन्या-दोषं औपशायिकं अनाख्याय प्रयच्छतः कन्यां षण्-णवतिर्दण्डः । शुल्क-स्त्री-धन-प्रतिदानं च ।। ०३.१५.१४ ।।

वरयितुर्वा वर-दोषं अनाख्याय विन्दतो द्वि-गुणः । शुल्क-स्त्री-धन-नाशश्च ।। ०३.१५.१५ ।।

द्विपद-चतुष्पदानां तु कुण्ठ-व्याधित-अशुचीनां उत्साह-स्वास्थ्य-शुचीनां आख्याने द्वादश-पणो दण्डः ।। ०३.१५.१६ ।।

आ-त्रि-पक्षादिति चतुष्पदानां उपावर्तनम् । आ-संवत्सरादिति मनुष्याणां ।। ०३.१५.१७ ।।

तावता हि कालेन शक्यं शौच-आशौचे ज्ञातुं ।। ०३.१५.१८ ।।

दाता प्रतिग्रहीता च स्यातां नौपहतौ यथा । ।। ०३.१५.१९अ ब ।।

दाने क्रये वाअनुशयं तथा कुर्युः सभासदः ।। ०३.१५.१९च्द् ।।

दत्तस्याप्रदानं ऋण-आदानेन व्याख्यातं ।। ०३.१६.०१ ।।

दत्तं अव्यवहार्यं एकत्रानुशये वर्तेत ।। ०३.१६.०२ ।।

सर्व-स्वं पुत्र-दारं आत्मानं वा प्रदायानुशयिनः प्रयच्छेत् ।। ०३.१६.०३ ।।

धर्म-दानं असाधुषु कर्मसु चाउपघातिकेषु वा । अर्थ-दानं अनुपकारिष्वपकारिषु वा । काम-दानं अनर्हेषु च ।। ०३.१६.०४ ।।

यथा च दाता प्रतिग्रहीता च नौपहतौ स्यातां तथाअनुशयं कुशलाः कल्पयेयुः ।। ०३.१६.०५ ।।

दण्ड-भयादाक्रोश-भयादनर्थ-भयाद्वा भय-दानं प्रतिगृह्णतः स्तेय-दण्डः । प्रयच्छतश्च ।। ०३.१६.०६ ।।

रोष-दानं पर-हिंसायां । राज्ञां उपरि दर्प-दानं च ।। ०३.१६.०७ ।।

तत्रौत्तमो दण्डः ।। ०३.१६.०८ ।।

प्रातिभाव्यं दण्ड-शुल्क-शेषं आक्षिकं सौरिकं च नाकामः पुत्रो दायादो वा रिक्थ-हरो दद्यात् इति दत्तस्यानपाकर्म । ।। ०३.१६.०९ ।।

अस्वामि-विक्रयस्तु नष्ट-अपहृतं आसाद्य स्वामी धर्मस्थेन ग्राहयेत् ।। ०३.१६.१० ।।

देश-काल-अतिपत्तौ वा स्वयं गृहीत्वाउपहरेत् ।। ०३.१६.११ ।।

धर्मस्थश्च स्वामिनं अनुयुञ्जीत "कुतस्ते लब्धम्" इति ।। ०३.१६.१२ ।।

स चेदाचार-क्रमं दर्शयेत । न विक्रेतारं । तस्य द्रव्यस्यातिसर्गेण मुच्येत ।। ०३.१६.१३ ।।

विक्रेता चेद्दृश्येत । मूल्यं स्तेय-दण्डं च दद्यात् ।। ०३.१६.१४ ।।

स चेदपसारं अधिगच्छेदपसरेदा-अपसार-क्षयात् ।। ०३.१६.१५ ।।

क्षये मूल्यं स्तेय-दण्डं च दद्यात् ।। ०३.१६.१६ ।।

नाष्टिकश्च स्व-करणं कृत्वा नष्ट-प्रत्याहृतं लभेत ।। ०३.१६.१७ ।।

स्व-करण-अभावे पञ्च-बन्धो दण्डः ।। ०३.१६.१८ ।।

तच्च द्रव्यं राज-धर्म्यं स्यात् ।। ०३.१६.१९ ।।

नष्ट-अपहृतं अनिवेद्यौत्कर्षतः स्वामिनः पूर्वः साहस-दण्डः ।। ०३.१६.२० ।।

शुल्क-स्थाने नष्ट-अपहृत-उत्पन्नं तिष्ठेत् ।। ०३.१६.२१ ।।

त्रि-पक्षादूर्ध्वं अनभिसारं राजा हरेत् । स्वामी वा स्व-करणेन ।। ०३.१६.२२ ।।

पञ्च-पणिकं द्विपद-रूपस्य निष्क्रयं दद्यात् । चतुष्पणिकं एक-खुरस्य । द्विपणिकं गोमहिषस्य । पादिकं क्षुद्र-पशूनां ।। ०३.१६.२३ ।।

रत्न-सार-फल्गु-कुप्यानां पञ्चकं शतं दद्यात् ।। ०३.१६.२४ ।।

पर-चक्र-अटवी-हृतं तु प्रत्यानीय राजा यथा-स्वं प्रयच्छेत् ।। ०३.१६.२५ ।।

चोर-हृतं अविद्यमानं स्व-द्रव्येभ्यः प्रयच्छेत् । प्रत्यानेतुं अशक्तो वा ।। ०३.१६.२६ ।।

स्वयं-ग्राहेणऽहृतं प्रत्यानीय तन्-निष्क्रयं वा प्रयच्छेत् ।। ०३.१६.२७ ।।

पर-विषयाद्वा विक्रमेणऽनीतं यथा-प्रदिष्टं राज्ञा भुञ्जीत । अन्यत्रऽर्य-प्राणेभ्यो देव-ब्राह्मण-तपस्वि-द्रव्येभ्यश्च इत्यस्वामि-विक्रयः । ।। ०३.१६.२८ ।।

स्व-स्वामि-सम्बन्धस्तु भोग-अनुवृत्तिरुच्छिन्न-देशानां यथा-स्वं द्रव्याणां ।। ०३.१६.२९ ।।

यत्स्वं द्रव्यं अन्यैर्भुज्यमानं दश वर्षाण्युपेक्षेत । हीयेतास्य । अन्यत्र बाल-वृद्ध-व्याधित-व्यसनि-प्रोषित-देश-त्याग-राज्य-विभ्रमेभ्यः ।। ०३.१६.३० ।।

विंशति-वर्ष-उपेक्षितं अनवसितं वास्तु नानुयुञ्जीत ।। ०३.१६.३१ ।।

ज्ञातयः श्रोत्रियाः पाषण्डा वा राज्ञां असंनिधौ पर-वास्तुषु विवसन्तो न भोगेन हरेयुः । उपनिधिं आधिं निधिं निक्षेपं स्त्रियं सीमानं राज-श्रोत्रिय-द्रव्याणि च ।। ०३.१६.३२ ।।

आश्रमिणः पाषण्डा वा महत्यवकाशे परस्परं अबाधमाना वसेयुः ।। ०३.१६.३३ ।।

अल्पां बाधां सहेरन् ।। ०३.१६.३४ ।।

पूर्व-आगतो वा वास-पर्यायं दद्यात् ।। ०३.१६.३५ ।।

अप्रदाता निरस्येत ।। ०३.१६.३६ ।।

वानप्रस्थ-यति-ब्रह्म-चारिणां आचार्य-शिष्य-धर्म-भ्रातृ-समान-तीर्थ्या रिक्थ-भाजः क्रमेण ।। ०३.१६.३७ ।।

विवाद-पदेषु चएषां यावन्तः पणा दण्डास्तावती रात्रीः क्षपण-अभिषेक-अग्नि-कार्य-महा-कच्छ्र-वर्धनानि राज्ञश्चरेयुः ।। ०३.१६.३८ ।।

अहिरण्य-सुवर्णाः पाषढाः साधवः ।। ०३.१६.३९ ।।

ते यथा-स्वं उपवास-व्रतैराराधयेयुः । अन्यत्र पारुष्य-स्तेय-साहस-संग्रहणेभ्यः ।। ०३.१६.४० ।।

तेषु यथा-उक्ता दण्डाः कार्याः ।। ०३.१६.४१ ।।

प्रव्रज्यासु वृथा-आचारान्राजा दण्डेन वारयेत् । ।। ०३.१६.४२अ ब ।।

धर्मो ह्यधर्म-उपहतः शास्तारं हन्त्युपेक्षितः ।। ०३.१६.४२च्द् ।।

साहसं अन्वयवत्प्रसभ-कर्म ।। ०३.१७.०१ ।।

निरन्वये स्तेयम् । अपव्ययने च ।। ०३.१७.०२ ।।

"रत्न-सार-फल्गु-कुप्यानां साहसे मूल्य-समो दण्डः" इति मानवाः ।। ०३.१७.०३ ।।

"मूल्य-द्वि-गुणः" इत्यौशनसाः ।। ०३.१७.०४ ।।

यथा-अपराध इति कौटिल्यः ।। ०३.१७.०५ ।।

"पुष्प-फल-शाक-मूल-कन्द-पक्व-अन्न-चर्म-वेणु-मृद्-भाण्ड-आदीनां क्षुद्रक-द्रव्याणां द्वादश-पण-अवरश्चतुर्विंशति-पण-परो दण्डः ।। ०३.१७.०६ ।।

काल-आयस-काष्ठ-रज्जु-द्रव्य-क्षुद्र-पशु-पट-आदीनां स्थूलक-द्रव्याणां चतुर्विंशति-पण-अवरोअष्ट-चत्वारिंशत्-पण-परो दण्डः ।। ०३.१७.०७ ।।

ताम्र-वृत्त-कंस-काच-दन्त-भाण्ड-आदीनां स्थूलक-द्रव्याणां अष्ट-चत्वारिंशत्-पण-अवरः षण्-णवति-परः पूर्वः साहस-दण्डः ।। ०३.१७.०८ ।।

महा-पशु-मनुष्य-क्षेत्र-गृह-हिरण्य-सुवर्ण-सूक्ष्म-वस्त्र-आदीनां स्थूलक-द्रव्याणां द्विशत-अवरः पञ्च-शत-परो मध्यमः साहस-दण्डः ।। ०३.१७.०९ ।।

स्त्रियं पुरुषं वाअभिषह्य बध्नतो बन्धयतो बन्धं वा मोक्षयतः पञ्च-शत-अवरः सहस्र-पर उत्तमः साहस-दण्डः इत्याचार्याः ।। ०३.१७.१० ।।

"यः साहसं "प्रतिपत्ता" इति कारयति स द्वि-गुणं दद्यात् ।। ०३.१७.११ ।।

"यावद्धिरण्यं उपयोक्ष्यते तावद्दास्यामि" इति स चतुर्-गुणं दण्डं दद्यात् ।। ०३.१७.१२ ।।

यः "एतावद्धिरण्यं दास्यामि" इति प्रमाणं उद्दिश्य कारयति स यथा-उक्तं हिरण्यं दण्डं च दद्यात्" इति बार्हस्पत्याः ।। ०३.१७.१३ ।।

स चेत्कोपं मदं मोहं वाअपदिशेद्यथा-उक्तवद्दण्डं एनं कुर्यादिति कौटिल्यः ।। ०३.१७.१४ ।।

दण्ड-कर्मसु सर्वेषु रूपं अष्ट-पणं शतं । ।। ०३.१७.१५अ ब ।।

शतात्परेषु व्याजीं च विद्यात्पञ्च-पणं शतं ।। ०३.१७.१५च्द् ।।

प्रजानां दोष-बाहुल्याद्राज्ञां वा भाव-दोषतः । ।। ०३.१७.१६अ ब ।।

रूप-व्याज्यावधर्मिष्ठे धर्म्या तु प्रकृतिः स्मृता ।। ०३.१७.१६च्द् ।।

वाक्-पारुष्यं उपवादः कुत्सनं अभिभर्त्सनं इति ।। ०३.१८.०१ ।।

शरीर-प्रकृति-श्रुत-वृत्ति-जन-पदानां शरीर-उपवादे काण-खञ्ज-आदिभिः सत्ये त्रि-पणो दण्डः । मिथ्या-उपवादे षट्-पणो दण्डः ।। ०३.१८.०२ ।।

"शोभन-अक्षिमन्तः" इति काण-खञ्ज-आदीनां स्तुति-निन्दायां द्वादश-पणो दण्डः ।। ०३.१८.०३ ।।

कुष्ठ-उन्माद-क्लैब्य-आदिभिः कुत्सायां च सत्य-मिथ्या-स्तुति-निन्दासु द्वादश-पण-उत्तरा दण्डास्तुल्येषु ।। ०३.१८.०४ ।।

विशिष्टेषु द्वि-गुणाः । हीनेष्वर्ध-दण्डाः । पर-स्त्रीषु द्वि-गुणाः । प्रमाद-मद-मोह-आदिभिरर्ध-दण्डाः ।। ०३.१८.०५ ।।

कुष्ठ-उन्मादयोश्चिकित्सकाः संनिकृष्टा पुमांसश्च प्रमाणं । क्लीब-भावे स्त्रियो मूत्र-फेनोअप्सु विष्ठा-निमज्जनं च ।। ०३.१८.०६ ।।

प्रकृत्य्-उपवादे ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-अन्त-अवसायिनां अपरेण पूर्वस्य त्रि-पण-उत्तरा दण्डाः । पूर्वेणापरस्य द्वि-पण-अधराः । कुब्राह्मण-आदिभिश्च कुत्सायां ।। ०३.१८.०७ ।।

तेन श्रुत-उपवादो वाग्-जीवनानां । कारु-कुशीलवानां वृत्त्य्-उपवादः । प्राज्जूणक-गान्धार-आदीनां च जन-पद-उपवादा व्याख्याताः ।। ०३.१८.०८ ।।

यः परं "एवं त्वां करिष्यामि" इति करणेनाभिभर्त्सयेद् । अकरणे यस्तस्य करणे दण्डस्ततोअर्ध-दण्डं दद्यात् ।। ०३.१८.०९ ।।

अशक्तः कोपं मदं मोहं वाअपदिशेद्द्वादश-पणं दण्डं दद्यात् ।। ०३.१८.१० ।।

जात-वैर-आशयः शक्तश्चापकर्तुं यावज्-जीविक-अवस्थं दद्यात् ।। ०३.१८.११ ।।

स्व-देश-ग्रामयोः पूर्वं मध्यमं जाति-संघयोः । ।। ०३.१८.१२अ ब ।।

आक्रोशाद्देव-चैत्यानां उत्तमं दण्डं अर्हति ।। ०३.१८.१२च्द् ।।

दण्ड-पारुष्यं स्पर्शनं अवगूर्णं प्रहतं इति ।। ०३.१९.०१ ।।

नाभेरधः-कायं हस्त-पङ्क-भस्म-पांसुभिरिति स्पृशतस्त्रि-पणो दण्डः । तैरेवामेध्यैः पाद-ष्ठीविकाभ्यां च षट्-पणः । छर्दि-मूत्र-पुरीष-आदिभिर्द्वादश-पणः ।। ०३.१९.०२ ।।

नाभेरुपरि द्वि-गुणाः । शिरसि चतुर्-गुणाः समेषु ।। ०३.१९.०३ ।।

विशिष्टेषु द्वि-गुणाः । हीनेष्वर्ध-दण्डाः । पर-स्त्रीषु द्वि-गुणाः । प्रमाद-मद-मोह-आदिभिरर्ध-दण्डाः ।। ०३.१९.०४ ।।

पाद-वस्त्र-हस्त-केश-अवलम्बनेषु षट्-पण-उत्तरा दण्डाः ।। ०३.१९.०५ ।।

पीडन-आवेष्टन-अञ्चन-प्रकर्षण-अध्यासनेषु पूर्वः साहस-दण्डः ।। ०३.१९.०६ ।।

पातयित्वाअपक्रामतोअर्ध-दण्डः ।। ०३.१९.०७ ।।

शूद्रो येनाङ्गेन ब्राह्मणं अभिहन्यात्तदस्यच्छेदयेत् ।। ०३.१९.०८ ।।

अवगूर्णे निष्क्रयः । स्पर्शेअर्ध-दण्डः ।। ०३.१९.०९ ।।

तेन चण्डाल-अशुचयो व्याख्याताः ।। ०३.१९.१० ।।

हस्तेनावगूर्णे त्रि-पण-अवरो द्वादश-पण-परो दण्डः । पादेन द्वि-गुणः । दुःख-उत्पादनेन द्रव्येण पूर्वः साहस-दण्डः । प्राण-आबाधिकेन मध्यमः ।। ०३.१९.११ ।।

काष्ठ-लोष्ट-पाषाण-लोह-दण्ड-रज्जु-द्रव्याणां अन्यतमेन दुःखं अशोणितं उत्पादयतश्चतुर्विंशति-पणो दण्डः । शोणित-उत्पादने द्वि-गुणः । अन्यत्र दुष्ट-शोणितात् ।। ०३.१९.१२ ।।

मृत-कल्पं अशोणितं घ्नतो हस्त-पाद-पारञ्चिकं वा कुर्वतः पूर्वः साहस-दण्डः । पाणि-पाद-दन्त-भङ्गे कर्ण-नास-आच्छेदने व्रण-विदारणे च्च । अन्यत्र दुष्ट-व्रणेभ्यः ।। ०३.१९.१३ ।।

सक्थि-ग्रीव-आभञ्जने नेत्र-भेदने वा वाक्य-चेष्टा-भोजन-उपरोधेषु च मध्यमः साहस-दण्डः समुत्थान-व्ययश्च ।। ०३.१९.१४ ।।

विपत्तौ कण्टक-शोधनाय नीयेत ।। ०३.१९.१५ ।।

महा-जनस्यएकं घ्नतः प्रत्येकं द्वि-गुणो दण्डः ।। ०३.१९.१६ ।।

"पर्युषितः कलहोअनुप्रवेशो वा नाभियोज्यः" इत्याचार्याः ।। ०३.१९.१७ ।।

नास्त्यपकारिणो मोक्ष इति कौटिल्यः ।। ०३.१९.१८ ।।

"कलहे पूर्व-आगतो जयति । अक्षममाणो हि प्रधावति" इत्याचार्याः ।। ०३.१९.१९ ।।

नैति कौटिल्यः ।। ०३.१९.२० ।।

पूर्वं पश्चाद्वाअभिगतस्य साक्षिणः प्रमाणम् । असाक्षिके घातः कलह-उपलिङ्गनं वा ।। ०३.१९.२१ ।।

घात-अभियोगं अप्रतिब्रुवतस्तदहरेव पश्चात्-कारः ।। ०३.१९.२२ ।।

कलहे द्रव्यं अपहरतो दश-पणो दण्डः । क्षुद्रक-द्रव्य-हिंसायां तच्च तावच्च दण्डः । स्थूलक-द्रव्य-हिंसायां तच्च द्वि-गुणश्च दण्डः । वस्त्र-

आभरण-हिरण्य-सुवर्ण-भाण्ड-हिंसायां तच्च पूर्वश्च साहस-दण्डः ।। ०३.१९.२३ ।।

पर-कुड्यं अभिघातेन क्षोभयतस्त्रि-पणो दण्डः । छेदन-भेदने षट्-पणः । प्रतीकारश्च ।। ०३.१९.२४ ।।

दुःख-उत्पादनं द्रव्यं अन्य-वेश्मनि प्रक्षिपतो द्वादश-पणो दण्डः । प्राण-आबाधिकं पूर्वः साहस-दण्डः ।। ०३.१९.२५ ।।

क्षुद्र-पशूनां काष्ठ-आदिभिर्दुःख-उत्पादने पणो द्वि-गुणो वा दण्डः । शोणित-उत्पादने द्वि-गुणः ।। ०३.१९.२६ ।।

महा-पशूनां एतेष्वेव स्थानेष्वद्द्वि-गुणो दण्डः समुत्थान-व्ययश्च ।। ०३.१९.२७ ।।

पुर-उपवन-वनस्पतीनां पुष्प-फलच्-छायावतां प्ररोहच्-छेदने षट्-पणः । क्षुद्र-शाखाच्-छेदने द्वादश-पणः । पीन-शाखाच्-च्छेदने चतुर्-विंशति-पणः । स्कन्ध-वधे पूर्वः साहस-दण्डः । समुच्छित्तौ मध्यमः ।। ०३.१९.२८ ।।

पुष्प-फलच्-छायावद्-गुल्म-लतास्वर्ध-दण्डाः । पुण्य-स्थान-तपो-वन-श्मशान-द्रुमेषु च ।। ०३.१९.२९ ।।

सीम-वृक्षेषु चैत्येषु द्रुमेष्वालक्षितेषु च । ।। ०३.१९.३०अ ब ।।

त एव द्वि-गुणा दण्डाः कार्या राज-वनेषु च ।। ०३.१९.३०च्द् ।।

द्यूत-अध्यक्षो द्यूतं एक-मुखं कारयेत् ।। ०३.२०.०१ ।।

अन्यत्र दीव्यतो द्वादश-पणो दण्डो गूढ-आजीवि-ज्ञापन-अर्थं ।। ०३.२०.०२ ।।

"द्यूत-अभियोगे जेतुः पूर्वः साहस-दण्डः । पराजितस्य मध्यमः ।। ०३.२०.०३ ।।

बालिश-जातीयो ह्येष जेतु-कामः पराजयं न क्षमते" इत्याचार्याः ।। ०३.२०.०४ ।।

नैत्य्कौटिल्यः ।। ०३.२०.०५ ।।

पराजितश्चेद्द्वि-गुण-दण्डः क्रियेत न कश्चन राजानं अभिसरिष्यति ।। ०३.२०.०६ ।।

प्रायशो हि कितवाः कूट-देविनः ।। ०३.२०.०७ ।।

तेषां अध्यक्षाः शुद्धाः काकणीरक्षांश्च स्थापयेयुः ।। ०३.२०.०८ ।।

काकण्य्-अक्षाणां अन्य-उपधाने द्वादश-पणो दण्डः । कूट-कर्मणि पूर्वः साहस-दण्डो जित-प्रत्यादानम् । उपधौ स्तेय-दण्डश्च ।। ०३.२०.०९ ।।

जित-द्रव्यादध्यक्षः पञ्चकं शतं आददीत । काकण्य्-अक्ष-अराला-शलाका-अवक्रयं उदक-भूमि-कर्म-क्रयं च ।। ०३.२०.१० ।।

द्रव्याणां आधानं विक्रयं च कुर्यात् ।। ०३.२०.११ ।।

अक्ष-भूमि-हस्त-दोषाणां चाप्रतिषेधने द्वि-गुणो दण्डः ।। ०३.२०.१२ ।।

तेन समाह्वयो व्याख्यातः । अन्यत्र विद्या-शिल्प-समाह्वयात् इति ।। ०३.२०.१३ ।।

प्रकीर्णकं तु याचितक-अवक्रीतक-आहितक-निक्षेपकाणां यथा-देश-कालं अदाने । यामच्-छाया-समुपवेश-संस्थितीनां वा देश-काल-अतिपातने । गुल्मतर-देयं ब्राह्मणं साधयतः । प्रतिवेश-अनुवेशयोरुपरि निमन्त्रणे च द्वादश-पणो दण्डः ।। ०३.२०.१४ ।।

संदिष्टं अर्थं अप्रयच्छतो । भ्रातृ-भार्यां हस्तेन लङ्घयतो । रूप-आजीवां अन्य-उपरुद्धां गच्छतः । पर-वक्तव्यं पण्यं क्रीणानस्य । समुद्रं गृहं उद्भिन्दतः । सामन्त-चत्वारिंशत्-कुल्य-आबाधां आचरतश्चाष्ट-चत्वारिंशत्-पणो दण्डः ।। ०३.२०.१५ ।।

कुल-नीवी-ग्राहकस्यापव्ययने । विधवां छन्द-वासिनीं प्रसह्याधिचरतः । चण्डालस्यऽर्यां स्पृशतः । प्रत्यासन्नं आपद्यनभिधावतो । निष्कारणं अभिधावनं कुर्वतः । शाक्य-आजीवक-आदीन्वृषल-प्रव्रजितान्देव-पितृ-कार्येषु भोजयतः शत्यो दण्डः ।। ०३.२०.१६ ।।

शपथ-वाक्य-अनुयोगं अनिषृष्टं कुर्वतः । युक्त-कर्म चायुक्तस्य । क्षुद्र-पशु-वृषाणां पुंस्त्व-उपघातिनः । दास्या गर्भं औषधेन पातयतश्च पूर्वः साहस-दण्डः ।। ०३.२०.१७ ।।

पिता-पुत्रयोर्दम्पत्योर्भ्रातृ-भगिन्योर्मातुल-भगिनेययोः शिष्य-आचार्ययोर्वा परस्परं अपतितं त्यजतः । सार्थ-आभिप्रयातं ग्राम-मध्ये वा त्यजतः पूर्वः साहस-दण्डः । कान्तारे मध्यमः । तन्-निमित्तं भ्रेषयत उत्तमः । सह-प्रस्थायिष्वन्येष्वर्ध-दण्डाः ।। ०३.२०.१८ ।।

पुरुषं अबन्धनीयं बध्नतो बन्धयतो बन्धं वा मोक्षयतो । बालं अप्राप्त-व्यवहारं बध्नतो बन्धयतो वा सहस्रं दण्डः ।। ०३.२०.१९ ।।

पुरुष-अपराध-विशेषेण दण्ड-विशेषः कार्यः ।। ०३.२०.२० ।।

तीर्थ-करस्तपस्वी व्याधितः क्षुत्-पिपासा-अध्व-क्लान्तस्तिरो-जन-पदो दण्ड-खेदी निष्किंचनश्चानुग्राह्याः ।। ०३.२०.२१ ।।

देव-ब्राह्मण-तपस्वि-स्त्री-बाल-वृद्ध-व्याधितानां अनाथानां अनभिसरतां धर्मस्थाः कार्याणि कुर्युः । न च देश-काल-भोगच्-छलेनातिहरेयुः ।। ०३.२०.२२ ।।

पूज्या विद्या-बुद्धि-पौरुष-अभिजन-कर्म-अतिशयतश्च पुरुषाः ।। ०३.२०.२३ ।।

एवं कार्याणि धर्मस्थाः कुर्युरच्छल-दर्शिनः । ।। ०३.२०.२४अ ब ।।

समाः सर्वेषु भावेषु विश्वास्या लोक-सम्प्रियाः ।। ०३.२०.२४च्द् ।।

प्रदेष्टारस्त्रयस्त्रयोअमात्याः कण्टक-शोधनं कुर्युः ।। ०४.१.०१ ।।

अर्थ्य-प्रतीकाराः कारु-शासितारः संनिक्षेप्तारः स्व-वित्त-कारवः श्रेणी-प्रमाणा निक्षेपं गृह्णीयुः ।। ०४.१.०२ ।।

विपत्तौ श्रेणी निक्षेपं भजेत ।। ०४.१.०३ ।।

निर्दिष्ट-देश-काल-कार्यं च कर्म कुर्युः । अनिर्दिष्ट-देश-कालं कार्य-अपदेशं ।। ०४.१.०४ ।।

काल-अतिपातने पाद-हीनं वेतनं तद्-द्वि-गुणश्च दण्डः ।। ०४.१.०५ ।।

अन्यत्र भ्रेष-उपनिपाताभ्यां नष्टं विनष्टं वाअभ्यावहेयुः ।। ०४.१.०६ ।।

कार्यस्यान्यथा-करणे वेतन-नाशस्तद्-द्वि-गुणश्च दण्डः ।। ०४.१.०७ ।।

तन्तु-वाया दश-एकादशिकं सूत्रं वर्धयेयुः ।। ०४.१.०८ ।।

वृद्धिच्-छेदे छेद-द्वि-गुणो दण्डः ।। ०४.१.०९ ।।

सूत्र-मूल्यं वान-वेतनं । क्षौम-कौशेयानां अध्यर्ध-गुणं । पत्त्र-ऊर्णा-कम्बल-दुकूलानां द्वि-गुणं ।। ०४.१.१० ।।

मान-हीने हीन-अवहीनं वेतनं तद्-द्वि-गुणश्च दण्डः । तुला-हीने हीन-चतुर्-गुणो दण्डः । सूत्र-परिवर्तने मूल्य-द्वि-गुणः ।। ०४.१.११ ।।

तेन द्वि-पट-वानं व्याख्यातं ।। ०४.१.१२ ।।

ऊर्णा-तुलायाः पञ्च-पलिको विहननच्-छेदो रोमच्-छेदश्च ।। ०४.१.१३ ।।

रजकाः काष्ठ-फलक-श्लक्ष्ण-शिलासु वस्त्राणि नेनिज्युः ।। ०४.१.१४ ।।

अन्यत्र नेनिजतो वस्त्र-उपघातं षट्-पणं च दण्डं दद्युः ।। ०४.१.१५ ।।

मुद्गर-अङ्कादन्यद्वासः परिदधानास्त्रि-पणं दण्डं दद्युः ।। ०४.१.१६ ।।

पर-वस्त्र-विक्रय-अवक्रय-आधानेषु च द्वादश-पणो दण्डः । परिवर्तने मूल्य-द्वि-गुणो वस्त्र-दानं च ।। ०४.१.१७ ।।

मुकुल-अवदातं शिला-पट्ट-शुद्धं धौत-सूत्र-वर्णं प्रमृष्ट-श्वेतं चएक-रात्र-उत्तरं दद्युः ।। ०४.१.१८ ।।

पञ्च-रात्रिकं तनु-रागं । षड्-रात्रिकं नीलं । पुष्प-लाक्षा-मञ्जिष्ठा-रक्तं गुरु-परिकर्म यत्न-उपचार्यं जात्यं वासः सप्त-रात्रिकं ।। ०४.१.१९ ।।

ततः परं वेतन-हानिं प्राप्नुयुः ।। ०४.१.२० ।।

श्रद्धेया राग-विवादेषु वेतनं कुशलाः कल्पयेयुः ।। ०४.१.२१ ।।

परार्ध्यानां पणो वेतनं । मध्यमानां अर्ध-पणः । प्रत्यवराणां पादः । स्थूलकानां माषक-द्वि-माषकं । द्वि-गुणं रक्तकानां ।। ०४.१.२२ ।।

प्रथम-नेजने चतुर्-भागः क्षयः । द्वितीये पञ्च-भागः ।। ०४.१.२३ ।।

तेनौत्तरं व्याख्यातं ।। ०४.१.२४ ।।

रजकैस्तुन्न-वाया व्याख्याताः ।। ०४.१.२५ ।।

सुवर्ण-काराणां अशुचि-हस्ताद्रूप्यं सुवर्णं अनाख्याय सरूपं क्रीणतां द्वादशपणो दण्डः । विरूपं चतुर्-विंशति-पणः । चोर-हस्तादष्ट-चत्वारिंशत्-पणः ।। ०४.१.२६ ।।

प्रच्छन्न-विरूप-मूल्य-हीन-क्रयेषु स्तेय-दण्डः । कृत-भाण्ड-उपधौ च ।। ०४.१.२७ ।।

सुवर्णान्माषकं अपहरतो द्वि-शतो दण्डः । रूप्य-धरणान्माषकं अपहरतो द्वादश-पणः ।। ०४.१.२८ ।।

तेनौत्तरं व्याख्यातं ।। ०४.१.२९ ।।

वर्ण-उत्कर्षं अपसारणं योगं वा साधयतः पञ्च-शतो दण्डः ।। ०४.१.३० ।।

तयोरपचरणे रागस्यापहारं विद्यात् ।। ०४.१.३१ ।।

माषको वेतनं रूप्य-धरणस्य । सुवर्णस्याष्ट-भागः ।। ०४.१.३२ ।।

शिक्षा-विशेषेण द्वि-गुणो वेतन-वृद्धिः ।। ०४.१.३३ ।।

तेनौत्तरं व्याख्यातं ।। ०४.१.३४ ।।

ताम्र-वृत्त-कंस-वैकृन्तक-आर-कूटकानां पञ्चकं शतं वेतनं ।। ०४.१.३५ ।।

ताम्र-पिण्डो दश-भाग-क्षयः ।। ०४.१.३६ ।।

पल-हीने हीन-द्वि-गुणो दण्डः ।। ०४.१.३७ ।।

तेनौत्तरं व्याख्यातं ।। ०४.१.३८ ।।

सीस-त्रपु-पिण्डो विंशति-भाग-क्षयः ।। ०४.१.३९ ।।

काकणी चास्य पल-वेतनं ।। ०४.१.४० ।।

काल-आयस-पिण्डः पञ्च-भाग-क्षयः ।। ०४.१.४१ ।।

काकणी-द्वयं चास्य पल-वेतनं ।। ०४.१.४२ ।।

तेनौत्तरं व्याख्यातं ।। ०४.१.४३ ।।

रूप-दर्शकस्य स्थितां पण-यात्रां अकोप्यां कोपयतः कोप्यां अकोपयतो द्वादश-पणो दण्डः ।। ०४.१.४४ ।।

व्याजी-परिशुद्धौ पण-यात्रा ।। ०४.१.४५ ।।

पणान्माषकं उपजीवतो द्वादश-पणो दण्डः ।। ०४.१.४६ ।।

तेनौत्तरं व्याख्यातं ।। ०४.१.४७ ।।

कूट-रूपं कारयतः प्रतिगृह्णतो निर्यापयतो वा सहस्रं दण्डः । कोशे प्रक्षिपतो वधः ।। ०४.१.४८ ।।

चरक-पांसु-धावकाः सार-त्रि-भागं । द्वौ राजा रत्नं च ।। ०४.१.४९ ।।

रत्न-अपहार उत्तमो दण्डः ।। ०४.१.५० ।।

खनि-रत्न-निधि-निवेदनेषु षष्ठं अंशं निवेत्ता लभेत । द्वादशं अंशं भृतकः ।। ०४.१.५१ ।।

शत-सहस्रादूर्ध्वं राज-गामी निधिः ।। ०४.१.५२ ।।

ऊने षष्ठं अंशं दद्यात् ।। ०४.१.५३ ।।

पौर्वपौरुषिकं निधिं जानपदः शुचिः स्व-करणेन समग्रं लभेत ।। ०४.१.५४ ।।

स्व-करण-अभावे पञ्च-शतो दण्डः । प्रच्छन्न-आदाने सहस्रं ।। ०४.१.५५ ।।

भिषजः प्राण-आबाधिकं अनाख्यायोपक्रममाणस्य विपत्तौ पूर्वः साहस-दण्डः । कर्म-अपराधेन विपत्तौ मध्यमः ।। ०४.१.५६ ।।

मर्म-वध-वैगुण्य-करणे दण्ड-पारुष्यं विद्यात् ।। ०४.१.५७ ।।

कुशीलवा वर्षा-रात्रं एकस्था वसेयुः ।। ०४.१.५८ ।।

काम-दानं अतिमात्रं एकस्यातिवादं च वर्जयेयुः ।। ०४.१.५९ ।।

तस्यातिक्रमे द्वादश-पणो दण्डः ।। ०४.१.६० ।।

कामं देश-जाति-गोत्र-चरण-मैथुन-अवहासेन नर्मयेयुः ।। ०४.१.६१ ।।

कुशीलवैश्चारणा भिक्षुकाश्च व्याख्याताः ।। ०४.१.६२ ।।

तेषां अयः-शूलेन यावतः पणानभिवदेयुस्तावन्तः शिफा-प्रहारा दण्डाः ।। ०४.१.६३ ।।

शेषाणां कर्मणां निष्पत्ति-वेतनं शिल्पिनां कल्पयेत् ।। ०४.१.६४ ।।

एवं चोरानचोर-आख्यान्वणिक्-कारु-कुशीलवान् । ।। ०४.१.६५अ ब ।।

भिक्षुकान्कुहकांश्चान्यान्वारयेद्देश-पीडनात् ।। ०४.१.६६च्द् ।।

संस्था-अध्यक्षः पण्य-संस्थायां पुराण-भाण्डानां स्व-करण-विशुद्धानां आधानं विक्रयं वा स्थापयेत् ।। ०४.२.०१ ।।

तुला-मान-भाण्डानि चावेक्षेत पौतव-अपचारात् ।। ०४.२.०२ ।।

परिमाणी-द्रोणयोरर्ध-पल-हीन-अतिरिक्तं अदोषः ।। ०४.२.०३ ।।

पल-हीन-अतिरिक्ते द्वादश-पणो दण्डः ।। ०४.२.०४ ।।

तेन पल-उत्तरा दण्ड-वृद्धिर्व्याख्याता ।। ०४.२.०५ ।।

तुलायाः कर्ष-हीन-अतिरिक्तं अदोषः ।। ०४.२.०६ ।।

द्वि-कर्ष-हीन-अतिरिक्ते षट्-पणो दण्डः ।। ०४.२.०७ ।।

तेन कर्ष-उत्तरा दण्ड-वृद्धिर्व्याख्याता ।। ०४.२.०८ ।।

आढकस्यार्ध-कर्ष-हीन-अतिरिक्तं अदोषः ।। ०४.२.०९ ।।

कर्ष-हीन-अतिरिक्ते त्रि-पणो दण्डः ।। ०४.२.१० ।।

तेन कर्ष-उत्तरा दण्ड-वृद्धिर्व्याख्याता ।। ०४.२.११ ।।

तुला-मान-विशेषाणां अतोअन्येषां अनुमानं कुर्यात् ।। ०४.२.१२ ।।

तुला-मानाभ्यां अतिरिक्ताभ्यां क्रीत्वा हीनाभ्यां विक्रीणानस्य त एव द्वि-गुणा दण्डाः ।। ०४.२.१३ ।।

गण्य-पण्येष्वष्ट-भागं पण्य-मूल्येष्वपहरतः षण्-णवतिर्दण्डः ।। ०४.२.१४ ।।

काष्ठ-लोह-मणि-मयं रज्जु-चर्म-मृण्-मयं सूत्र-वल्क-रोम-मयं वा जात्यं इत्यजात्यं विक्रय-आधानं नयतो मूल्य-अष्ट-गुणो दण्डः ।। ०४.२.१५ ।।

सार-भाण्डं इत्यसार-भाण्डं तज्-जातं इत्यतज्-जातं राधा-युक्तं इत्युपधियुक्तं समुद्ग-परिवर्तिमं वा विक्रय-आधानं नयतो हीन-मूल्यं चतुष्पञ्चाशत्-पणो दण्डः । पण-मूल्यं द्वि-गुणो । द्वि-पण-मूल्यं द्वि-शतः ।। ०४.२.१६ ।।

तेनार्घ-वृद्धौ दण्ड-वृद्धिर्व्याख्याता ।। ०४.२.१७ ।।

कारु-शिल्पिनां कर्म-गुण-अपकर्षं आजीवं विक्रय-क्रय-उपघातं वा सम्भूय समुत्थापयतां सहस्रं दण्डः ।। ०४.२.१८ ।।

वैदेहकानां वा सम्भूय पण्यं अवरुन्धतां अनर्घेण विक्रीणतां वा सहस्रं दण्डः ।। ०४.२.१९ ।।

तुला-मान-अन्तरं अर्घ-वर्ण-अन्तरं वा धरकस्य मायकस्य वा पण-मूल्यादष्ट-भागं हस्त-दोषेणऽचरतो द्वि-शतो दण्डः ।। ०४.२.२० ।।

तेन द्वि-शत-उत्तरा दण्ड-वृद्धिर्व्याख्याता ।। ०४.२.२१ ।।

धान्य-स्नेह-क्षार-लवण-गन्ध-भैषज्य-द्रव्याणां सम-वर्ण-उपधाने द्वादश-पणो दण्डः ।। ०४.२.२२ ।।

यन्-निषृष्टं उपजीवेयुस्तदेषां दिवस-संजातं संख्याय वणिक्स्थापयेत् ।। ०४.२.२३ ।।

क्रेतृ-विक्रेत्रोरन्तर-पतितं आदायादन्यद्भवति ।। ०४.२.२४ ।।

तेन धान्य-पण्य-निचयांश्चानुज्ञाताः कुर्युः ।। ०४.२.२५ ।।

अन्यथा-निचितं एषां पण्य-अध्यक्षो गृह्णीयात् ।। ०४.२.२६ ।।

तेन धान्य-पण्य-विक्रये व्यवहरेतानुग्रहेण प्रजानां ।। ०४.२.२७ ।।

अनुज्ञात-क्रयादुपरि चएषां स्व-देशीयानां पण्यानां पञ्चकं शतं आजीवं स्थापयेत् । पर-देशीयानां दशकं ।। ०४.२.२८ ।।

ततः परं अर्घं वर्धयतां क्रये विक्रये वा भावयतां पण-शते पञ्च-पणाद्द्वि-शतो दण्डः ।। ०४.२.२९ ।।

तेनार्घ-वृद्धौ दण्ड-वृद्धिर्व्याख्याता ।। ०४.२.३० ।।

सम्भूय-क्रये चएषां अविक्रीते नान्यं सम्भूय-क्रयं दद्यात् ।। ०४.२.३१ ।।

पण्य-उपघाते चएषां अनुग्रहं कुर्यात् ।। ०४.२.३२ ।।

पण्य-बाहुल्यात्पण्य-अध्यक्षः सर्व-पण्यान्येक-मुखानि विक्रीणीत ।। ०४.२.३३ ।।

तेष्वविक्रीतेषु नान्ये विक्रीणीरन् ।। ०४.२.३४ ।।

तानि दिवस-वेतनेन विक्रीणीरन्ननुग्रहेण प्रजानां ।। ०४.२.३५ ।।

देश-काल-अन्तरितानां तु पण्यानां प्रक्षेपं पण्य-निष्पत्तिं शुल्कं वृद्धिं अवक्रयं । ।। ०४.२.३६अ ब ।।

व्ययानन्यांश्च संख्याय स्थापयेदर्घं अर्घवित् ।। ०४.२.३६च्द् ।।

दैवान्यष्टौ महा-भयानि अग्निरुदकं व्याधिर्दुर्भिक्षं मूषिका व्यालाः सर्पा रक्षांसिइति ।। ०४.३.०१ ।।

तेभ्यो जन-पदं रक्षेत् ।। ०४.३.०२ ।।

ग्रीष्मे बहिर्-अधिश्रयणं ग्रामाः कुर्युः । दश-मूली-संग्रहेणाधिष्ठिता वा ।। ०४.३.०३ ।।

नागरिक-प्रणिधावग्नि-प्रतिषेधो व्याख्यातः । निशान्त-प्रणिधौ राज-परिग्रहे च ।। ०४.३.०४ ।।

बलि-होम-स्वस्ति-वाचनैः पर्वसु चाग्नि-पूजाः कारयेत् ।। ०४.३.०५ ।।

वर्षा-रात्रं आनूप-ग्रामाः पूर-वेलां उत्सृज्य वसेयुः ।। ०४.३.०६ ।।

काष्ठ-वेणु-नावश्चौपगृह्णीयुः ।। ०४.३.०७ ।।

उह्यमानं अलाबु-दृति-प्लव-गण्डिका-वेणिकाभिस्तारयेयुः ।। ०४.३.०८ ।।

अनभिसरतां द्वादश-पणो दण्डः । अन्यत्र प्लव-हीनेभ्यः ।। ०४.३.०९ ।।

पर्वसु च नदी-पूजाः कारयेत् ।। ०४.३.१० ।।

माया-योगविदो वेदविदो वा वर्षं अभिचरेयुः ।। ०४.३.११ ।।

वर्ष-अवग्रहे शची-नाथ-गङ्गा-पर्वत-महा-कच्छ-पूजाः कारयेत् ।। ०४.३.१२ ।।

व्याधि-भयं औपनिषदिकैः प्रतीकारैः प्रतिकुर्युः । औषधैश्चिकित्सकाः शान्ति-प्रायश्चित्तैर्वा सिद्ध-तापसाः ।। ०४.३.१३ ।।

तेन मरको व्याख्यातः ।। ०४.३.१४ ।।

तीर्थ-अभिषेचनं महा-कच्छ-वर्धनं गवां श्मशान-अवदोहनं कबन्ध-दहनं देव-रात्रिं च कारयेत् ।। ०४.३.१५ ।।

पशु-व्याधि-मरके स्थान-अर्थ-नीराजनं स्व-दैवत-पूजनं च कारयेत् ।। ०४.३.१६ ।।

दुर्भिक्षे राजा बीज-भक्त-उपग्रहं कृत्वाअनुग्रहं कुर्यात् । दुर्ग-सेतु-कर्म वा भक्त-अनुग्रहेण । भक्त-संविभागं वा । देश-निक्षेपं वा ।। ०४.३.१७ ।।

मित्राणि वा व्यपाश्रयेत । कर्शनं वमनं वा कुर्यात् ।। ०४.३.१८ ।।

निष्पन्न-सस्यं अन्य-विषयं वा सजन-पदो यायात् । समुद्र-सरस्-तटाकानि वा संश्रयेत ।। ०४.३.१९ ।।

धान्य-शाक-मूल-फल-आवापान्वा सेतुषु कुर्वीत । मृग-पशु-पक्षि-व्याल-मत्स्य-आरम्भान्वा ।। ०४.३.२० ।।

मूषिक-भये मार्जार-नकुल-उत्सर्गः ।। ०४.३.२१ ।।

तेषां ग्रहण-हिंसायां द्वादश-पणो दण्डः । शुनां अनिग्रहे चान्यत्रारण्य-चरेभ्यः ।। ०४.३.२२ ।।

स्नुहि-क्षीर-लिप्तानि धान्यानि विसृजेद् । उपनिषद्-योग-युक्तानि वा ।। ०४.३.२३ ।।

मूषिक-करं वा प्रयुञ्जीत ।। ०४.३.२४ ।।

शान्तिं वा सिद्ध-तापसाः कुर्युः ।। ०४.३.२५ ।।

पर्वसु च मूषिक-पूजाः कारयेत् ।। ०४.३.२६ ।।

तेन शलभ-पक्षि-क्रिमि-भय-प्रतीकारा व्याख्याताः ।। ०४.३.२७ ।।

व्याल-भये मदन-रस-युक्तानि पशु-शवानि प्रसृजेत् । मदन-कोद्रव-पूर्णान्यौदर्याणि वा ।। ०४.३.२८ ।।

लुब्धकाः श्व-गणिनो वा कूट-पञ्जर-अवपातैश्चरेयुः ।। ०४.३.२९ ।।

आवरणिनः शस्त्र-पाणयो व्यालानभिहन्युः ।। ०४.३.३० ।।

अनभिसर्तुर्द्वादश-पणो दण्डः ।। ०४.३.३१ ।।

स एव लाभो व्याल-घातिनः ।। ०४.३.३२ ।।

पर्वसु च पर्वत-पूजाः कारयेत् ।। ०४.३.३३ ।।

तेन मृग-पशु-पक्षि-संघ-ग्राह-प्रतीकारा व्याख्याताः ।। ०४.३.३४ ।।

सर्प-भये मन्त्रैरोषधिभिश्च जाङ्गुलीविदश्चरेयुः ।। ०४.३.३५ ।।

सम्भूय वाअपि सर्पान्हन्युः ।। ०४.३.३६ ।।

अथर्व-वेदविदो वाअभिचरेयुः ।। ०४.३.३७ ।।

पर्वसु च नाग-पूजाः कारयेत् ।। ०४.३.३८ ।।

तेनौदक-प्राणि-भय-प्रतीकारा व्याख्याताः ।। ०४.३.३९ ।।

रक्षो-भये रक्षो-घ्नान्यथर्व-वेदविदो माया-योगविदो वा कर्माणि कुर्युः ।। ०४.३.४० ।।

पर्वसु च वितर्दिच्-छत्र-उल्लोपिका-हस्त-पताकाच्-छाग-उपहारैश्चैत्य-पूजाः कारयेत् ।। ०४.३.४१ ।।

"चरुं वश्चरामः" इत्येवं सर्व-भयेष्वहो-रात्रं चरेयुः ।। ०४.३.४२ ।।

सर्वत्र चौपहतान्पिताइवानुगृह्णीयात् ।। ०४.३.४३ ।।

माया-योगविदस्तस्माद्विषये सिद्ध-तापसाः । ।। ०४.३.४४अ ब ।।

वसेयुः पूजिता राज्ञा दैव-आपत्-प्रतिकारिणः ।। ०४.३.४४च्द् ।।

समाहर्तृ-प्रणिधौ जन-पद-रक्षणं उक्तं ।। ०४.४.०१ ।।

तस्य कण्टक-शोधनं वक्ष्यामः ।। ०४.४.०२ ।।

समाहर्ता जन-पदे सिद्ध-तापस-प्रव्रजित-चक्र-चर-चारण-कुहक-प्रच्छन्दक-कार्तान्तिक-नैमित्तिक-मौहूर्तिक-चिकित्सक-उन्मत्त-मूक-बधिर-जड-अन्ध-वैदेहक-कारु-शिल्पि-कुशीलव-वेश-शौण्डिक-आपूपिक-पाक्व-मांसिक-औदनिक-व्यञ्जनान्प्रणिदध्यात् ।। ०४.४.०३ ।।

ते ग्रामाणां अध्यक्षाणां च शौच-आशौचं विद्युः ।। ०४.४.०४ ।।

यं चात्र गूढ-आजीविनं शङ्केत तं सत्त्रिणाअपसर्पयेत् ।। ०४.४.०५ ।।

धर्मस्थं विश्वास-उपगतं सत्त्री ब्रूयात् "असौ मे बन्धुरभियुक्तः । तस्यायं अनर्थः प्रतिक्रियताम् । अयं चार्थः प्रतिगृह्यताम्" इति ।। ०४.४.०६ ।।

स चेत्तथा कुर्यादुपदा-ग्राहक इति प्रवास्येत ।। ०४.४.०७ ।।

तेन प्रदेष्टारो व्याख्याताः ।। ०४.४.०८ ।।

ग्राम-कूटं अध्यक्षं वा सत्त्री ब्रूयात् "असौ जाल्मः प्रभूत-द्रव्यः । तस्यायं अनर्थः । तेनएनं आहारयस्व" इति ।। ०४.४.०९ ।।

स चेत्तथा कुर्यादुत्कोचक इति प्रवास्येत ।। ०४.४.१० ।।

कृतक-अभियुक्तो वा कूट-साक्षिणोअभिज्ञात-अनर्थ-वैपुल्येनऽरभेत ।। ०४.४.११ ।।

ते चेत्तथा कुर्युः कूट-साक्षिण इति प्रवास्येरन् ।। ०४.४.१२ ।।

तेन कूट-श्रावण-कारका व्याख्याताः ।। ०४.४.१३ ।।

यं वा मन्त्र-योग-मूल-कर्मभिः श्माशानिकैर्वा संवदन-करकं मन्येत तं सत्त्री ब्रूयात् "अमुष्य भार्यां स्नुषां दुहितरं वा कामये । सा मां प्रतिकामयताम् । अयं चार्थः प्रतिगृह्यताम्" इति ।। ०४.४.१४ ।।

स चेत्तथा कुर्यात्संवदन-कारक इति प्रवास्येत ।। ०४.४.१५ ।।

तेन कृत्य-अभिचार-शीलौ व्याख्यातौ ।। ०४.४.१६ ।।

यं वा रसस्य कर्तारं क्रेतारं विक्रेतारं भैषज्य-आहार-व्यवहारिणं वा रसदं मन्येत तं सत्त्री ब्रूयात् "असौ मे शत्रुः । तस्यौपघातः क्रियताम् । अयं चार्थः प्रतिगृह्यताम्" इति ।। ०४.४.१७ ।।

स चेत्तथा कुर्याद्रसद इति प्रवास्येत ।। ०४.४.१८ ।।

तेन मदन-योग-व्यवहारी व्याख्यातः ।। ०४.४.१९ ।।

यं वा नाना-लोह-क्षाराणां अङ्गार-भस्म-असंदंश-मुष्टिक-अधिकरणी-बिम्ब-टङ्क-मूषाणां अभीक्ष्ण-क्रेतारं मषी-भस्म-धूम-दिग्ध-हस्त-वस्त्र-लिङ्गं कर्मार-उपकरण-संसर्गं कूट-रूप-कारकं मन्येत तं सत्त्री शिष्यत्वेन संव्यवहारेण चानुप्रविश्य प्रज्ञापयेत् ।। ०४.४.२० ।।

प्रज्ञातः कूट-रूप-कारक इति प्रवास्येत ।। ०४.४.२१ ।।

तेन रागस्यापहर्ता कूट-सुवर्ण-व्यवहारी च व्याख्यातः ।। ०४.४.२२ ।।

आरब्धारस्तु हिंसायां गूढ-आजीवास्त्रयोदश । ।। ०४.४.२३अ ब ।।

प्रवास्या निष्क्रय-अर्थं वा दद्युर्दोष-विशेषतः ।। ०४.४.२३च्द् ।।

सत्त्रि-प्रयोगादूर्ध्वं सिद्ध-व्यञ्जना माणवान्माणव-विद्याभिः प्रलोभयेयुः । प्रस्वापन-अन्तर्-धान-द्वार-अपोह-मन्त्रेण प्रतिरोधकान् । संवदन-मन्त्रेण पारतल्पिकान् ।। ०४.५.०१ ।।

तेषां कृत-उत्साहानां महान्तं संघं आदाय रात्रावन्यं ग्रामं उद्दिश्यान्यं ग्रामं कृतक-स्त्री-पुरुषं गत्वा ब्रूयुः "इहएव विद्या-प्रभावो दृश्यतां । कृच्छ्रः पर-ग्रामो गन्तुम्" इति ।। ०४.५.०२ ।।

ततो द्वार-अपोह-मन्त्रेण द्वाराण्यपोह्य "प्रविश्यताम्" इति ब्रूयुः ।। ०४.५.०३ ।।

अन्तर्-धान-मन्त्रेण जाग्रतां आरक्षिणां मध्येन माणवानतिक्रामयेयुः ।। ०४.५.०४ ।।

प्रस्वापन-मन्त्रेण प्रस्वापयित्वा रक्षिणः शयाभिर्माणवैः संचारयेयुः ।। ०४.५.०५ ।।

संवदन-मन्त्रेण भार्या-व्यञ्जनाः परेषां माणवैः सम्मोदयेयुः ।। ०४.५.०६ ।।

उपलब्ध-विद्या-प्रभावाणां पुरश्चरणा-आद्यादिशेयुरभिज्ञान-अर्थं ।। ०४.५.०७ ।।

कृत-लक्षण-द्रव्येषु वा वेश्मसु कर्म कारयेयुः ।। ०४.५.०८ ।।

अनुप्रविष्टा वाएकत्र ग्राहयेयुः ।। ०४.५.०९ ।।

कृत-लक्षण-द्रव्य-क्रय-विक्रय-आधानेषु योग-सुरा-मत्तान्वा ग्राहयेयुः ।। ०४.५.१० ।।

गृहीतान्पूर्व-अपदान-सहायाननुयुञ्जीत ।। ०४.५.११ ।।

पुराण-चोर-व्यञ्जना वा चोराननुप्रविष्टास्तथाएव कर्म कारयेयुर्ग्राहयेयुश्च ।। ०४.५.१२ ।।

गृहीतान्समाहर्ता पौर-जानपदानां दर्शयेत् "चोर-ग्रहणीं विद्यां अधीते राजा । तस्यौपदेशादिमे चोरा गृहीताः । भूयश्च ग्रहीष्यामि । वारयितव्यो वः स्व-जनः पाप-आचारह्" इति ।। ०४.५.१३ ।।

यं चात्रापसर्प-उपदेशेन शम्या-प्रतोद-आदीनां अपहर्तारं जानीयात्तं एषां प्रत्यादिशेत्"एष राज्ञः प्रभावः" इति ।। ०४.५.१४ ।।

पुराण-चोर-गो-पालक-व्याध-श्व-गणिनश्च वन-चोर-आटविकाननुप्रविष्टाः प्रभूत-कूट-हिरण्य-कुप्य-भाण्डेषु सार्थ-व्रज-ग्रामेष्वेनानभियोजयेयुः ।। ०४.५.१५ ।।

अभियोगे गूढ-बलैर्घातयेयुः । मदन-रस-युक्तेन वा पथ्य्-अदनेन ।। ०४.५.१६ ।।

गृहीत-लोप्त्र-भारानायत-गत-परिश्रान्तान्प्रस्वपतः प्रहवणेषु योग-सुरा-मत्तान्वा ग्राहयेयुः ।। ०४.५.१७ ।।

पूर्ववच्च गृहीत्वाएनान्समाहर्ता प्ररूपयेत् । ।। ०४.५.१८अ ब ।।

सर्वज्ञ-ख्यापनं राज्ञः कारयन्राष्ट्र-वासिषु ।। ०४.५.१८च्द् ।।

सिद्ध-प्रयोगादूर्ध्वं शङ्का-रूप-कर्म-अभिग्रहः ।। ०४.६.०१ ।।

क्षीण-दाय-कुटुम्बम् । अल्प-निर्वेशं । विपरीत-देश-जाति-गोत्र-नाम-कर्म-अपदेशं । प्रच्छन्न-वृत्ति-कर्माणं । ।। ०४.६.०२अ ।।

मांस-सुरा-भक्ष्य-भोजन-गन्ध-माल्य-वस्त्र-विभूषणेषु प्रसक्तम् । अतिव्यय-कर्तारं । पुंश्चली-द्यूत-शौण्डिकेषु प्रसक्तम् । ।। ०४.६.०२ब ।।

अभीक्ष्ण-प्रवासिनम् । अविज्ञात-स्थान-गमनम् । एकान्त-अरण्य-निष्कुट-विकाल-चारिणं । प्रच्छन्ने स-आमिषे वा देशे बहु-मन्त्र-संनिपातं । ।। ०४.६.०२क ।।

सद्यः-क्षत-व्रणानां गूढ-प्रतीकार-कारयितारम् । अन्तर्-गृह-नित्यम् । अभ्यधिगन्तारं । कान्ता-परं । ।। ०४.६.०२ड ।।

पर-परिग्रहाणां पर-स्त्री-द्रव्य-वेश्मनां अभीक्ष्ण-प्रष्टारं । कुत्सित-कर्म-शास्त्र-उपकरण-संसर्गं । ।। ०४.६.०२ए ।।

विरात्रे छन्न-कुड्यच्-छाया-संचारिणं । विरूप-द्रव्याणां अदेश-काल-विक्रेतारं । जात-वैरशयं । हीन-कर्म-जातिं । ।। ०४.६.०२फ़् ।।

विगूहमान-रूपं । लिङ्गेनऽलिङ्गिनं । लिङ्गिनं वा भिन्न-आचारं । पूर्व-कृत-अपदानं । स्व-कर्मभिरपदिष्टं । ।। ०४.६.०२ग् ।।

नागरिक-महा-मात्र-दर्शने गुहमानं अपसरन्तं अनुच्छ्वास-उपवेशिनं आविग्नं शुष्क-भिन्न-स्वर-मुख-वर्णं । ।। ०४.६.०२ह् ।।

शस्त्र-हस्त-मनुष्य-सम्पात-त्रासिनं । हिंस्र-स्तेन-निधि-निक्षेप-अपहार-पर-प्रयोग-गूढ-आजीविनां अन्यतमं शङ्केत इति शङ्का-अभिग्रहः ।। ०४.६.०२इ ।।

रूप-अभिग्रहस्तु नष्ट-अपहृतं अविद्यमानं तज्-जात-व्यवहारिषु निवेदयेत् ।। ०४.६.०३ ।।

तच्चेन्निवेदितं आसाद्य प्रच्छादयेयुः साचिव्य-कर-दोषं आप्नुयुः ।। ०४.६.०४ ।।

अजानन्तोअस्य द्रव्यस्यातिसर्गेण मुच्येरन् ।। ०४.६.०५ ।।

न चानिवेद्य संस्था-अध्यक्षस्य पुराण-भाण्डानां आधानं विक्रयं वा कुर्युः ।। ०४.६.०६ ।।

तच्चेन्निवेदितं आसाद्येत । रूप-अभिगृहीतं आगमं पृच्छेत्"कुतस्ते लब्धम्" इति ।। ०४.६.०७ ।।

स चेत्ब्रूयात्"दायाद्यादवाप्तम् । अमुष्माल्लब्धं क्रीतं कारितं आधि-प्रच्छन्नम् । अयं अस्य देशः कालश्चौपसम्प्राप्तेः । अयं अस्यार्घः प्रमाणं लक्षणं मूल्यं च" इति । तस्यऽगम-समाधौ मुच्येत ।। ०४.६.०८ ।।

नाष्टिकश्चेत्तदेव प्रतिसंदध्यात् । यस्या पूर्वो दीर्घश्च परिभोगः शुचिर्वा देशस्तस्य द्रव्यं इति विद्यात् ।। ०४.६.०९ ।।

चतुष्पद-द्विपदानां अपि हि रूप-लिङ्ग-सामान्यं भवति । किं अङ्ग पुनरेक-योनि-द्रव्य-कर्तृ-प्रसूतानां कुप्य-आभरण-भाण्डानां इति ।। ०४.६.१० ।।

स चेद्ब्रूयात्"याचितकं अवक्रीतकं आहितकं निक्षेपं उपनिधिं वैयावृत्य-कर्म वाअमुष्य" इति । तस्यापसार-प्रतिसंधानेन मुच्येत ।। ०४.६.११ ।।

"नएवम्" इत्यपसारो वा ब्रूयात् । रूप-अभिगृहीतः परस्य दान-कारणं आत्मनः प्रतिग्रह-कारणं उपलिङ्गनं वा दायक-दापक-निबन्धक-प्रतिग्राहक-उपद्रष्टृभिरुपश्रोतृभिर्वा प्रतिसमानयेत् ।। ०४.६.१२ ।।

उज्झित-प्रनष्ट-निष्पतित-उपलब्धस्य देश-काल-लाभ-उपलिङ्गनेन शुद्धिः ।। ०४.६.१३ ।।

अशुद्धस्तच्च तावच्च दण्डं दद्यात् ।। ०४.६.१४ ।।

अन्यथा स्तेय-दण्डं भजेत इति रूप-अभिग्रहः । ।। ०४.६.१५ ।।

कर्म-अभिग्रहस्तु मुषित-वेश्मनः प्रवेश-निष्कसनं अद्वारेण । द्वारस्य संधिना बीजेन वा वेधम् । उत्तम-अगारस्य जाल-वात-अयन-नीप्र-वेधम् । आरोहण-अवतरणे च कुड्यस्य वेधम् । उपखननं वा गूढ-द्रव्य-निक्षेपण-ग्रहण-उपायम् । उपदेश-उपलभ्यं अभ्यन्तरच्-छेद-उत्कर-परिमर्द-उपकरणं अभ्यन्तर-कृतं विद्यात् ।। ०४.६.१६ ।।

विपर्यये बाह्य-कृतम् । उभयत उभय-कृतं ।। ०४.६.१७ ।।

अभ्यन्तर-कृते पुरुषं आसन्नं व्यसनिनं क्रूर-सहायं तस्कर-उपकरण-संसर्गं । स्त्रियं वा दरिद्र-कुलां अन्य-प्रसक्तां वा । ।। ०४.६.१८अ ।।

परिचारक-जनं वा तद्-विध-आचारम् । अतिस्वप्नं । निद्रा-क्लान्तम् । आविग्नं- शुष्क-भिन्न-स्वर-मुख-वर्णम् । अनवस्थितम् । ।। ०४.६.१८ब ।।

अतिप्रलापिनम् । उच्च-आरोहण-संरब्ध-गात्रं । विलून-निघृष्ट-भिन्न-पाटित-शरीर-वस्त्रं । जात-किण-संरब्ध-हस्त-पादं । ।। ०४.६.१८क ।।

पांसु-पूर्ण-केश-नखं विलून-भुग्न-केश-नखं वा । सम्यक्-स्नात-अनुलिप्तं तैल-प्रमृष्ट-गात्रं सद्यो-दौत-हस्त-पादं वा । ।। ०४.६.१८ड ।।

पांसु-पिच्छिलेषु तुल्य-पाद-पद-निक्षेपं । प्रवेश-निष्कसनयोर्वा तुल्य-माल्य-मद्य-गन्ध-वस्त्रच्-छेद-विलेपन-स्वेदं परीक्षेत ।। ०४.६.१८ए ।।

चोरं पारदारिकं वा विद्यात् ।। ०४.६.१९ ।।

सगोप-स्थानिको बाह्यं प्रदेष्टा चोर-मार्गणं । ।। ०४.६.२०अ ब ।।

कुर्यान्नागरिकश्चान्तर्-दुर्गे निर्दिष्ट-हेतुभिः ।। ०४.६.२०च्द् ।।

तैल-अभ्यक्तं आशु-मृतकं परीक्षेत ।। ०४.७.०१ ।।

निष्कीर्ण-मूत्र-पुरीषं वात-पूर्ण-कोष्ठ-त्वक्कं शून-पाद-पाणिमान्मीलित-अक्षं सव्यञ्जन-कण्ठं पीटन-निरुद्ध-उच्छ्वास-हतं विद्यात् ।। ०४.७.०२ ।।

तं एव संकुचित-बाहु-सक्थिं उद्बन्ध-हतं विद्यात् ।। ०४.७.०३ ।।

शून-पाणि-पाद-उदरं अपगत-अक्षं उद्वृत्त-नाभिं अवरोपितं विद्यात् ।। ०४.७.०४ ।।

निस्तब्ध-गुद-अक्षं संदष्ट-जिह्वं आध्मात-उदरं उदक-हतं विद्यात् ।। ०४.७.०५ ।।

शोणित-अनुसिक्तं भग्न-भिन्न-गात्रं काष्ठैरश्मभिर्वा हतं विद्यात् ।। ०४.७.०६ ।।

सम्भग्न-स्फुटित-गात्रं अवक्षिप्तं विद्यात् ।। ०४.७.०७ ।।

श्याव-पाणि-पाद-दन्त-नखं शिथिल-मांस-रोम-चर्माणं फेन-उपदिग्ध-मुखं विष-हतं विद्यात् ।। ०४.७.०८ ।।

तं एव सशोणित-दंशं सर्प-कीट-हतं विद्यात् । ।। ०४.७.०९ ।।

विक्षिप्त-वस्त्र-गात्रं अतिवन्त-विरिक्तं मदन-योग-हतं विद्यात् ।। ०४.७.१० ।।

अतोअन्यतमेन कारणेन हतं हत्वा वा दण्ड-भयादुद्बद्ध-निकृत्त-कण्ठं विद्यात् ।। ०४.७.११ ।।

विष-हतस्य भोजन-शेषं वयोभिः परीक्षेत ।। ०४.७.१२ ।।

हृदयादुद्धृत्याग्नौ प्रक्षिप्तं चिटिचिटायद्-इन्द्र-धनुर्-वर्णं वा विष-युक्तं विद्यात् । दग्धस्य हृदयं अदग्धं दृष्ट्वा वा ।। ०४.७.१३ ।।

तस्य परिचारक-जनं वाग्-दण्ड-पारुष्य-अतिलब्धं मार्गेत । दुःख-उपहतं अन्य-प्रसक्तं वा स्त्री-जनं । दाय-वृत्ति-स्त्री-जन-अभिमन्तारं वा बन्धुं ।। ०४.७.१४ ।।

तदेव हत-उद्बद्धस्य परीक्षेत ।। ०४.७.१५ ।।

स्वयं उद्बद्धस्य वा विप्रकारं अयुक्तं मार्गेत ।। ०४.७.१६ ।।

सर्वेषां वा स्त्री-दायाद्य-दोषः कर्म-स्पर्धा प्रतिपक्ष-द्वेषः पण्य-संस्था-समवायो वा विवाद-पदानां अन्यतमद्वा रोष-स्थानं ।। ०४.७.१७ ।।

रोष-निमित्तो घातः ।। ०४.७.१८ ।।

स्वयं-आदिष्ट-पुरुषैर्वा । चोरैरर्थ-निमित्तं । सादृश्यादन्य-वैरिभिर्वा हतस्य घातं आसन्नेभ्यः परीक्षेत ।। ०४.७.१९ ।।

येनऽहूतः सह स्थितः प्रस्थितो हत-भूमिं आनीतो वा तं अनुयुञ्जीत ।। ०४.७.२० ।।

ये चास्य हत-भूमावासन्न-चरास्तानेक-एकशः पृच्छेत्"केनायं इहऽनीतो हतो वा । कः स-शस्त्रः संगूहमान उद्विग्नो वा युष्माभिर्दृष्टः" इति ।। ०४.७.२१ ।।

ते यथा ब्रूयुस्तथाअनुयुञ्जीत ।। ०४.७.२२ ।।

अनाथस्य शरीर-स्थं उपभोगं परिच्छदं । ।। ०४.७.२३अ ब ।।

वस्त्रं वेषं विभूषां वा दृष्ट्वा तद्-व्यवहारिणः ।। ०४.७.२३च्द् ।।

अनुयुञ्जीत संयोगं निवासं वास-कारणं । ।। ०४.७.२४अ ब ।।

कर्म च व्यवहारं च ततो मार्गणं आचरेत् ।। ०४.७.२४च्द् ।।

रज्जु-शस्त्र-विषैर्वाअपि काम-क्रोध-वशेन यः । ।। ०४.७.२५अ ब ।।

घातयेत्स्वयं आत्मानं स्त्री वा पापेन मोहिता ।। ०४.७.२५च्द् ।।

रज्जुना राज-मार्गे तांश्चण्डालेनापकर्षयेत् । ।। ०४.७.२६अ ब ।।

न श्मशान-विधिस्तेषां न सम्बन्धि-क्रियास्तथा ।। ०४.७.२६च्द् ।।

बन्धुस्तेषां तु यः कुर्यात्प्रेत-कार्य-क्रिया-विधिं । ।। ०४.७.२७अ ब ।।

तद्-गतिं स चरेत्पश्चात्स्व-जनाद्वा प्रमुच्यते ।। ०४.७.२७च्द् ।।

संवत्सरेण पतति पतितेन समाचरन् । ।। ०४.७.२८अ ब ।।

याजन-अध्यापनाद्यौनात्तैश्चान्योअपि समाचरन् ।। ०४.७.२८च्द् ।।

मुषित-संनिधौ बाह्यानां अभ्यन्तराणां च साक्षिणां अभिशस्तस्य देश-जाति-गोत्र-नाम-कर्म-सार-सहाय-निवासाननुयुञ्जीत ।। ०४.८.०१ ।।

तांश्चापदेशैः प्रतिसमानयेत् ।। ०४.८.०२ ।।

ततः पूर्वस्याह्नः प्रचारं रात्रौ निवासं च<चा> ग्रहणादित्यनुयुञ्जीत ।। ०४.८.०३ ।।

तस्यापसार-प्रतिसंधाने शुद्धः स्यात् । अन्यथा कर्म-प्राप्तः ।। ०४.८.०४ ।।

त्रि-रात्रादूर्ध्वं अग्राह्यः शङ्कितकः पृच्छा-अभावादन्यत्रौपकरण-दर्शनात् ।। ०४.८.०५ ।।

अचोरं चोर इत्यभिव्याहरतश्चोर-समो दण्डः । चोरं प्रच्छादयतश्च ।। ०४.८.०६ ।।

चोरेणाभिशस्तो वैर-द्वेषाभ्यां अपदिष्टकः शुद्धः स्यात् ।। ०४.८.०७ ।।

शुद्धं परिवासयतः पूर्वः साहस-दण्डः ।। ०४.८.०८ ।।

शङ्का-निष्पन्नं उपकरण-मन्त्रि-सहाय-रूप-वैयावृत्य-करान्निष्पादयेत् ।। ०४.८.०९ ।।

कर्मणश्च प्रदेश-द्रव्य-आदान-अंश-विभागैः प्रतिसमानयेत् ।। ०४.८.१० ।।

एतेषां कारणानां अनभिसंधाने विप्रलपन्तं अचोरं विद्यात् ।। ०४.८.११ ।।

दृश्यते ह्यचोरोअपि चोर-मार्गे यदृच्छया संनिपाते चोर-वेष-शस्त्र-भाण्ड-सामान्येन गृह्यमाणश्चोर-भाण्डस्यौपवासेन वा । यथाअणि-माण्डव्यः कर्म-क्लेश-भयादचोरः "चोरोअस्मि" इति ब्रुवाणः ।। ०४.८.१२ ।।

तस्मात्समाप्त-करणं नियमयेत् ।। ०४.८.१३ ।।

मन्द-अपराधं बालं वृद्धं व्याधितं मत्तं उन्मत्तं क्षुत्-पिपासा-अध्व-क्लान्तं अत्याशितं आमक-अशितं दुर्बलं वा न कर्म कारयेत् ।। ०४.८.१४ ।।

तुल्य शील-पुंश्चली-प्रापाविक-कथा-अवकाश-भोजन-दातृभिरपसर्पयेत् ।। ०४.८.१५ ।।

एवं अतिसंदध्यात् । यथा वा निक्षेप-अपहारे व्याख्यातं ।। ०४.८.१६ ।।

आप्त-दोषं कर्म कारयेत् । न त्वेव स्त्रियं गर्भिणीं सूतिकां वा मास-अवर-प्रजातां ।। ०४.८.१७ ।।

स्त्रियास्त्वर्ध-कर्म । वाक्य-अनुयोगो वा ।। ०४.८.१८ ।।

ब्राह्मणस्य सत्त्रि-परिग्रहः श्रुतवतस्तपस्विनश्च ।। ०४.८.१९ ।।

तस्यातिक्रम उत्तमो दण्डः कर्तुः कारयितुश्च । कर्मणा व्यापादनेन च ।। ०४.८.२० ।।

व्यावहारिकं कर्म-चतुष्कं षड्दण्डाः । सप्त कशाः । द्वावुपरि-निबन्धौ । उदक-नालिका च ।। ०४.८.२१ ।।

परं पाप-कर्मणां नव वेत्र-लताः । द्वादश कशाः । द्वावूरू-वेष्टौ । विंशतिर्नक्त-माल-लताः । द्वात्रिंशत्-तलाः । द्वौ वृश्चिक-बन्धौ । उल्लंबने च द्वे । सूची हस्तस्य । यवागू-पीतस्य एक-पर्व-दहनं अङ्गुल्याः । स्नेह-पीतस्य प्रतापनं एकं अहः । शिशिर-रात्रौ बल्बज-अग्र-शय्या च ।। ०४.८.२२ ।।

इत्यष्टादशकं कर्म ।। ०४.८.२३ ।।

तस्य-उपकरणं प्रमाणं प्रहरणं प्रधरणं अवधारणं च खर-पट्टादागमयेत् ।। ०४.८.२४ ।।

दिवस-अन्तरं एक-एकं च कर्म कारयेत् ।। ०४.८.२५ ।।

पूर्व-कृत-अपदानं प्रतिज्ञायापहरन्तं एक-देश-दृष्ट-द्रव्यं कर्मणा रूपेण वा गृहीतं राज-कोशं अवस्तृणन्तं कर्म-वध्यं वा राज-वचनात्समस्तं व्यस्तं अभ्यस्तं वा कर्म कारयेत् ।। ०४.८.२६ ।।

सर्व-अपराधेष्वपीडनीयो ब्राह्मणः ।। ०४.८.२७ ।।

तस्याभिशस्त-अङ्को ललाटे स्याद्व्यवहार-पतनाय । स्तेयो श्वा । मनुष्य-वधे कबन्धः । गुरु-तल्पे भगम् । सुरा-पाने मद्य-ध्वजः ।। ०४.८.२८ ।।

ब्राह्मणं पाप-कर्माणं उद्घुष्याङ्क-कृत-व्रणं । ।। ०४.८.२९अ ब ।।

कुर्यान्निर्विषयं राजा वासयेदाकरेषु वा ।। ०४.८.२९च्द् ।।

समाहर्तृ-प्रदेष्टारः पूर्वं अध्यक्षाणां अध्यक्ष-पुरुषाणां च नियमनं कुर्युः ।। ०४.९.०१ ।।

खनि-सार-कर्म-अन्तेभ्यः सारं रत्नं वाअपहरतः शुद्ध-वधः ।। ०४.९.०२ ।।

फल्गु-द्रव्य-कर्म-अन्तेभ्यः फल्गु द्रव्यं उपस्करं वा पूर्वः साहस-दण्डः ।। ०४.९.०३ ।।

पण्य-भूमिभ्यो वा राज-पण्यं माष-मूल्यादूर्ध्वं आपाद-मूल्यादित्यपहरतो द्वादश-पणो दण्डः । आ-द्वि-पाद-मूल्यादिति चतुर्-विंशति-पणः । आ-त्रि-पाद-मूल्यादिति षट्-त्रिंशत्-पणः । आ-पण-मूल्यादित्यष्ट-चत्वारिंशत्-पणः । आ-द्वि-पण-मूल्यादिति पूर्वः साहस-दण्डः । आ-चतुष्पण-मूल्यादिति मध्यमः । आ-अष्ट-पण-मूल्यादित्युत्तमः । आ-दश-पण-मूल्याद् इति वधः ।। ०४.९.०४ ।।

कोष्ठ-पण्य-कुप्य-आयुध-अगारेभ्यः कुप्य-भाण्ड-उपस्कर-अपहारेष्वर्ध-मूल्येषु एत एव दण्डाः ।। ०४.९.०५ ।।

कोश-भाण्ड-अगार-अक्ष-शालाभ्यश्चतुर्-भाग-मूल्येषु एत एव द्वि-गुणा दण्डाः ।। ०४.९.०६ ।।

चोराणां अभिप्रधर्षणे चित्रो घातः ।। ०४.९.०७ ।।

इति राज-परिग्रहेषु व्याख्यातं ।। ०४.९.०८ ।।

बाह्येषु तु प्रच्छन्नं अहनि क्षेत्र-खल-वेश्म-आपणेभ्यः कुप्य-भाण्डं उपस्करं वा माष-मूल्यादूर्ध्वं आ-पाद-मूल्यादित्यपहरतस्त्रि-पणो दण्डः । गोमय-प्रदेहेन वा प्रलिप्यावघोषणम् आ-द्वि-पाद-मूल्यादिति षट्-पणः । गोमय-भस्मना वा प्रलिप्यावघोषणम् । आ-त्रि-पाद-मूल्यादिति नव-पणः । गोमय-भस्मना वा प्रलिप्यावघोषणम् । शराव-मेखलया वा आ-पण-मूल्यादिति द्वादश-पणः । मुण्डनं प्रव्राजनं वा आ-द्वि-पण-मूल्यादिति चतुर्-विंशति-पणः । मुण्डस्यैष्टका-शकलेन प्रव्राजनं वा आ-चतुष्-पण-मूल्यादिति षट्-त्रिंशत्-पणह् आ-पञ्च-पण-मूल्याद् इत्यष्ट-चत्वारिंशत्-पणः । आ-दश-पण-मूल्यादिति पूर्वः साहस-दण्डह् आ-विंशति-पण-मूल्यादित्द्विशतह् आ-त्रिंशत्-पण-मूल्यादिति पञ्च-शतह् आ-चत्वारिंशत्-पण-मूल्यादिति साहस्रह् आ-पञ्चाशत्-पण-मूल्यादिति वधः ।। ०४.९.०९ ।।

प्रसह्य दिवा रात्रौ वाआन्तर्यामिकं अपहरतोअर्ध-मूल्येषु एत एव दण्डाः ।। ०४.९.१० ।।

प्रसह्य दिवा रात्रौ वा सशस्त्रस्यापहरतश्चतुर्-भाग-मूल्येषु एत एव द्वि-गुणा दण्डाः ।। ०४.९.११ ।।

कुटुंबिक-अध्यक्ष-मुख्य-स्वामिनां कूट-शासन-मुद्रा-कर्मसु पूर्व-मध्य-उत्तम-वधा दण्डाः । यथा-अपराधं वा ।। ०४.९.१२ ।।

धर्मस्थश्चेद्विवदमानं पुरुषं तर्जयति भर्त्सयत्यपसारयत्यभिग्रसते वा पूर्वं अस्मै साहस-दण्डं कुर्यात् । वाक्-पारुष्ये द्वि-गुणं ।। ०४.९.१३ ।।

पृच्छ्यं न पृच्छति । अपृच्छ्यं पृच्छति । पृष्ट्वा वा विसृजति । शिक्षयति । स्मारयति । पूर्वं ददाति वा । इति मध्यमं अस्मै साहस-दण्डं कुर्यात् ।। ०४.९.१४ ।।

देयं देशं न पृच्छति । अदेयं देशं पृच्छति । कार्यं अदेशेनातिवाहयति । छलेनातिहरति । काल-हरणेन श्रान्तं अपवाहयति । मार्ग-आपन्नं वाक्यं उत्क्रमयति । मति-साहाय्यं साक्षिभ्यो ददाति । तारित-अनुशिष्टं कार्यं पुनरपि गृह्णाति । उत्तमं अस्मै साहस-दण्डं कुर्यात् ।। ०४.९.१५ ।।

पुनर्-अपराधे द्वि-गुणं स्थानाद्व्यवरोपणं च ।। ०४.९.१६ ।।

लेखकश्चेदुक्तं न लिखति । अनुक्तं लिखति । दुरुक्तं उपलिखति । सूक्तं उल्लिखति । अर्थ-उत्पत्तिं वा विकल्पयति । इति पूर्वं अस्मै साहस-दण्डं कुर्याद् । यथा-अपराधं वा ।। ०४.९.१७ ।।

धर्मस्थः प्रदेष्टा वा हैरण्य-दण्डं अदण्ड्ये क्षिपति क्षेप-द्वि-गुणं अस्मै दण्डं कुर्यात् । हीन-अतिरिक्त-अष्ट-गुणं वा ।। ०४.९.१८ ।।

शरीर-दण्डं क्षिपति शारीरं एव दण्डं भजेत । निष्क्रय-द्वि-गुणं वा ।। ०४.९.१९ ।।

यं वा भूतं अर्थं नाशयति अभूतं अर्थं करोति तद्-अष्ट-गुणं दण्डं दद्यात् ।। ०४.९.२० ।।

धर्मस्थीये चारके बन्धन-अगारे वा शय्या-आसन-भोजन-उच्चार-संचार-रोध-बन्धनेषु त्रि-पण-उत्तरा दण्डाः कर्तुः कारयितुश्च ।। ०४.९.२१ ।।

चारकादभियुक्तं मुञ्चतो निष्पातयतो वा मध्यमः साहस-दण्डः । अभियोग-दानं च । बन्धन-अगारात्सर्व-स्वं वधश्च ।। ०४.९.२२ ।।

बन्धन-अगार-अध्यक्षस्य संरुद्धकं अनाख्याय चारयतश्चतुर्-विंशति-पणो दण्डः । कर्म कारयतो द्वि-गुणः । स्थान-अन्यत्वं गमयतोअन्न-पानं वा रुन्धतः षण्-णवतिर्दण्डः । परिक्लेशयत उत्कोटयतो वा मध्यमः साहस-दण्डः । घ्नतः साहस्रः ।। ०४.९.२३ ।।

परिगृहीतां दासीं आहितिकां वा संरुद्धिकां अधिचरतः पूर्वः साहस-दण्डः । चोर-डामरिक-भार्यां मध्यमः । संरुद्धिकां आर्यां उत्तमः ।। ०४.९.२४ ।।

संरुद्धस्य वा तत्रएव घातः ।। ०४.९.२५ ।।

तदेवाक्षण-गृहीतायां आर्यायां विद्यात् । दास्यां पूर्वः साहस-दण्डः ।। ०४.९.२६ ।।

चारकं अभित्त्वा निष्पातयतो मध्यमः । भित्त्वा वधः । बन्धन-अगारात्सर्व-स्वं वधश्च ।। ०४.९.२७ ।।

एवं अर्थ-चरान्पूर्वं राजा दण्डेन शोधयेत् । ।। ०४.९.२८अ ब ।।

शोधयेयुश्च शुद्धास्ते पौर-जानपदान्दमैः ।। ०४.९.२८च्द् ।।

तीर्थ-घात-ग्रन्थि-भेद-ऊर्ध्व-कराणां प्रथमेअपराधे संदेशच्-छेदनं चतुष्-पञ्चाशत्-पणो वा दण्डः । द्वितीये छेदनं पणस्य शत्यो वा दण्डः । तृतीये दक्षिण-हस्त-वधश्चतुः-शतो वा दण्डः । चतुर्थे यथा-कामी वधः ।। ०४.१०.०१ ।।

पञ्च-विंशति-पण-अवरेषु कुक्कुट-नकुल-मार्जार-श्व-सूकर-स्तेयेषु हिंसायां वा चतुष्-पञ्चाशत्-पणो दण्डः । नास-अग्रच्-छेदनं वा चण्डाल-अरण्य-चराणां अर्ध-दण्डाः ।। ०४.१०.०२ ।।

पाश-जाल-कूट-अवपातेषु बद्धानां मृग-पशु-पक्षि-व्याल-मत्स्यानां आदाने तच्च तावच्च दण्डः ।। ०४.१०.०३ ।।

मृग-द्रव्य-वनान्मृग-द्रव्य-अपहारे शात्यो दण्डः ।। ०४.१०.०४ ।।

बिंब-विहार-मृग-पक्षि-स्तेये हिंसायां वा द्वि-गुणो दण्डः ।। ०४.१०.०५ ।।

कारु-शिल्पि-कुशीलव-तपस्विनां क्षुद्रक-द्रव्य-अपहारे शत्यो दण्डः । स्थूलक-द्रव्य-अपहारे द्वि-शतः । कृषि-द्रव्य-अपहारे च ।। ०४.१०.०६ ।।

दुर्गं अकृत-प्रवेशस्य प्रविशतः प्राकारच्-छिद्राद्वा निक्षेपं गृहीत्वाअपसरतः काण्डरा-वधो । द्वि-शातो वा दण्डः ।। ०४.१०.०७ ।।

चक्र-युक्तं नावं क्षुद्र-पशुं वाअपहरत एक-पाद-वधः । त्रि-शतो वा दण्डः ।। ०४.१०.०८ ।।

कूट-काकण्य्-अक्ष-अराला-शलाका-हस्त-विषम-कारिण एक-हस्त-वधः । चतुः-शतो वा दण्डः ।। ०४.१०.०९ ।।

स्तेन-पारदारिकयोः साचिव्य-कर्मणि स्त्रियाः संगृहीतायाश्च कर्ण-नासाच्-छेदनम् । पञ्च-शतो वा दण्डः । पुंषो द्वि-गुणः ।। ०४.१०.१० ।।

महा-पशुं एकं दासं दासीं वाअपहरतः प्रेत-भाण्डं वा विक्रीणानस्य द्वि-पाद-वधः । षट्-छतो वा दण्डः ।। ०४.१०.११ ।।

वर्ण-उत्तमानां गुरूणां च हस्त-पाद-लङ्घने राज-यान-वाहन-आद्य्-आरोहणे चएक-हस्त-पाद-वधः । सप्त-शतो वा दण्डः ।। ०४.१०.१२ ।।

शूद्रस्य ब्राह्मण-वादिनो देव-द्रव्यं अवस्तृणतो राज-द्विष्टं आदिशतो द्वि-नेत्र-भेदिनश्च योग-अञ्जनेनान्धत्वम् । अष्ट-शतो वा दण्डः ।। ०४.१०.१३ ।।

चोरं पारदारिकं वा मोक्षयतो राज-शासनं ऊनं अतिरिक्तं वा लिखतः कन्यां दासीं वा सहिरण्यं अपरहतः कूट-व्यवहारिणो विमांस-विक्रयिणश्च वाम-हस्त-द्वि-पाद-वधो । नव-शतो वा दण्डः ।। ०४.१०.१४ ।।

मानुष-मांस-विक्रये वधः ।। ०४.१०.१५ ।।

देव-पशु-प्रतिमा-मनुष्य-क्षेत्र-गृह-हिरण्य-सुवर्ण-रत्न-सस्य-अपहारिण उत्तमो दण्डः । शुद्ध-वधो वा ।। ०४.१०.१६ ।।

पुरुषं चापराधं च कारणं गुरु-लाघवं । ।। ०४.१०.१७अ ब ।।

अनुबन्धं तदात्वं च देश-कालौ समीक्ष्य च ।। ०४.१०.१७च्द् ।।

उत्तम-अवर-मध्यत्वं प्रदेष्टा दण्ड-कर्मणि । ।। ०४.१०.१८अ ब ।।

राज्ञश्च प्रकृतीनां च कल्पयेदन्तरा स्थितः ।। ०४.१०.१८च्द् ।।

कलहे घ्नतः पुरुषं चित्रो घातः || ०४.११.०१ ||

सप्त-रात्रस्यान्तर्-मृते शुद्ध-वधः । पक्षस्यान्तरुत्तमः । मासस्यान्तः पञ्च-शतः समुत्थान-व्ययश्च || ०४.११.०२ ||

शस्त्रेण प्रहरत उत्तमो दण्डः || ०४.११.०३ ||

मदेन हस्त-वधः । मोहेन द्वि-शतः || ०४.११.०४ ||

वधे वधः || ०४.११.०५ ||

प्रहारेण गर्भं पातयत उत्तमो दण्डः । भैषज्येन मध्यमः । परिक्लेशेन पूर्वः साहस-दण्डः || ०४.११.०६ ||

प्रसभ-स्त्री-पुरुष-घातक-अभिसारक-निग्राहक-अवघोषक-अवस्कन्दक-उपवेधकान्पथि-वेश्म-प्रतिरोधकान्राज-हस्त्य्-अश्व-रथानां हिंसकान्स्तेनान्वा शूलानारोहयेयुः || ०४.११.०७ ||

यश्चएनान्दहेदपनयेद्वा स तं एव दण्डं लभेत । साहसं उत्तमं वा || ०४.११.०८ ||

हिंस्र-स्तेनानां भक्त-वास-उपकरण-अग्नि-मन्त्र-दान-वैयावृत्य-कर्मसुउत्तमो दण्डः । परिभाषणं अविज्ञाते || ०४.११.०९ ||

हिंस्र-स्तेनानां पुत्र-दारं असमन्त्रं विसृजेत् । समन्त्रं आददीत || ०४.११.१० ||

राज्य-कामुकं अन्तःपुर-प्रधर्षकं अटव्य्-अमित्र-उत्साहकं दुर्ग-राष्ट्र-दण्ड-कोपकं वा शिरो-हस्त-प्रदीपिकं घातयेत् || ०४.११.११ ||

ब्राह्मणं तमः प्रवेशयेत् || ०४.११.१२ ||

मातृ-पितृ-पुत्र-भ्रात्-आचार्य-तपस्वि-घातकं वाअ-त्वक्-शिरः-प्रादीपिकं घातयेत् || ०४.११.१३ ||

तेषां आक्रोशे जिह्वाच्-छेदः । अङ्ग-अभिरदने तद्-अङ्गान्मोच्यः || ०४.११.१४ ||

यदृच्छा-घाते पुंसः पशु-यूथ-स्तेये च शुद्ध-वधः || ०४.११.१५ ||

दश-अवरं च यूथं विद्यात् || ०४.११.१६ ||

उदक-धारणं सेतुं भिन्दतस्तत्रएवाप्सु निमज्जनम् । अनुदकं उत्तमः साहस-दण्डः । भग्न-उत्सृष्टकं मध्यमः || ०४.११.१७ ||

विष-दायकं पुरुषं स्त्रियं च पुरुषघ्नीं अपः प्रवेशयेदगर्भिणीम् । गर्भिणीं मास-अवर-प्रजातां || ०४.११.१८ ||

पति-गुरु-प्रजा-घातिकां अग्नि-विषदां संधिच्-छेदिकां वा गोभिः पाटयेत् || ०४.११.१९ ||

विवीत-क्षेत्र-खल-वेश्म-द्रव्य-हस्ति-वन-आदीपिकं अग्निना दाहयेत् || ०४.११.२० ||

राज-आक्रोशक-मन्त्र-भेदकयोरनिष्ट-प्रवृत्तिकस्य ब्राह्मण-महानस-अवलेहिनश्च जिह्वां उत्पाटयेत् || ०४.११.२१ ||

प्रहरण-आवरण-स्तेनं अनायुधीयं इषुभिर्घातयेत् || ०४.११.२२ ||

आयुधीयस्यौत्तमः || ०४.११.२३ ||

मेढ्र-फल-उपघातिनस्तदेवच्छेदयेत् || ०४.११.२४ ||

जिह्वा-नास-उपघाते संदंश-वधः || ०४.११.२५ ||

एते शास्त्रेष्वनुगताः क्लेश-दण्डा महात्मनां । ।। ०४.११.२६अ ब ।।

अक्लिष्टानां तु पापानां धर्म्यः शुद्ध-वधः स्मृतः ।। ०४.११.२६च्द् ।।

सवर्णां अप्राप्त-फलां प्रकुर्वतो हस्त-वधः । चतुः-शतो वा दण्डः ।। ०४.१२.०१ ।।

मृतायां वधः ।। ०४.१२.०२ ।।

प्राप्त-फलां प्रकुर्वतो मध्यमा-प्रदेशिनी-वधो । द्वि-शतो वा दण्डः ।। ०४.१२.०३ ।।

पितुश्चावहीनं दद्यात् ।। ०४.१२.०४ ।।

न च प्राकाम्यं अकामायां लब्भेत ।। ०४.१२.०५ ।।

सकामायां चतुष्-पञ्चाशत्-पणो दण्डः । स्त्रियास्त्वर्ध-दण्डः ।। ०४.१२.०६ ।।

पर-शुल्क-अवरुद्धायां हस्त-वधः । चतुः-शतो वा दण्डः । शुल्क-दानं च ।। ०४.१२.०७ ।।

सप्त-आर्तव-प्रजातां वरणादूर्ध्वं अलभमानः प्रकृत्य प्राकामी स्यात् । न च पितुरवहीनं दद्यात् ।। ०४.१२.०८ ।।

ऋतु-प्रतिरोधिभिः स्वाम्यादपक्रामति ।। ०४.१२.०९ ।।

त्रि-वर्ष-प्रजात-आर्तवायास्तुल्यो गन्तुं अदोषः । ततः परं अतुल्योअप्यनलंकृतायाः ।। ०४.१२.१० ।।

पितृ-द्रव्य-आदाने स्तेयं भजेत ।। ०४.१२.११ ।।

परं उद्दिश्यान्यस्य विन्दतो द्वि-शतो दण्डः ।। ०४.१२.१२ ।।

न च प्राकांयं अकामायां लभेत ।। ०४.१२.१३ ।।

कन्यां अन्यां दर्शयित्वाअन्यां प्रयच्छतः शत्यो दण्डस्तुल्यायाम् । हीनायां द्वि-गुणः ।। ०४.१२.१४ ।।

प्रकर्मण्यकुमार्याश्चतुष्-पञ्चाशत्-पणो दण्डः । शुल्क-व्यय-कर्मणी च प्रतिदद्यात् ।। ०४.१२.१५ ।।

अवस्थाय तज्-जातं पश्चात्-कृता द्वि-गुणं दद्यात् ।। ०४.१२.१६ ।।

अन्य-शोणित-उपधाने द्विशतो दण्डः । मिथ्या-अभिशंसिनश्च पुंसः ।। ०४.१२.१७ ।।

शुल्क-व्यय-कर्मणी च जीयेत ।। ०४.१२.१८ ।।

न च प्राकांयं अकामायां लभेत ।। ०४.१२.१९ ।।

स्त्री-प्रकृता सकामा समाना द्वादश-पणं दण्डं दद्यात् । प्रकर्त्री द्वि-गुणं ।। ०४.१२.२० ।।

अकामायाः शत्यो दण्ड आत्म-राग-अर्थम् । शुल्क-दानं च ।। ०४.१२.२१ ।।

स्वयं प्रकृता राज-दास्यं गच्छेत् ।। ०४.१२.२२ ।।

बहिर्-ग्रामस्य प्रकृतायां मिथ्या-अभिशंसने च द्वि-गुणो दण्डः ।। ०४.१२.२३ ।।

प्रसह्य कन्यां अपहरतो द्वि-शतः । ससुवर्णां उत्तमः ।। ०४.१२.२४ ।।

बहूनां कन्या-अपहारिणां पृथग्यथा-उक्ता दण्डाः ।। ०४.१२.२५ ।।

गणिका-दुहितरं प्रकुर्वतश्चतुष्-पञ्चाशत्-पणो दण्डः । शुल्कं मातुर्भोगः षोडश-गुणः ।। ०४.१२.२६ ।।

दासस्य दास्या वा दुहितरं अदासीं प्रकुर्वतश्चतुर्-विंशति-पणो दण्डः शुल्क-आबन्ध्य-दानं च ।। ०४.१२.२७ ।।

निष्क्रय-अनुरूपां दासीं प्रकुर्वतो द्वादश-पणो दण्डो वस्त्र-आबन्ध्य-दानं च ।। ०४.१२.२८ ।।

साचिव्य-अवकाश-दाने कर्तृ-समो दण्डः ।। ०४.१२.२९ ।।

प्रोषित-पतिकां अपचरन्तीं पति-बन्धुस्तत्-पुरुषो वा संगृह्णीयात् ।। ०४.१२.३० ।।

संगृहीता पतिं आकाङ्क्षेत ।। ०४.१२.३१ ।।

पतिश्चेत्क्षमेत विसृज्येतौभयं ।। ०४.१२.३२ ।।

अक्षमायां स्त्रियाः कर्ण-नास-आच्छेदनम् । वधं जारश्च प्राप्नुयात् ।। ०४.१२.३३ ।।

जारं चोर इत्यभिहरतः पञ्च-शतो दण्डः । हिरण्येन मुञ्चतस्तद्-अष्ट-गुणः ।। ०४.१२.३४ ।।

केशाकेशिकं संग्रहणम् । उपलिङ्गनाद्वा शरीर-उपभोगानाम् । तज्-जातेभ्यः(तज्-ज्ञातेभ्यः? चf-ण्१२-६०)) । स्त्री-वचनाद्वा ।। ०४.१२.३५ ।।

पर-चक्र-अटवी-हृतां ओघ-प्रव्यूढां अरण्येषु दुर्भिक्षे वा त्यक्तां प्रेत-भाव-उत्सृष्टां वा पर-स्त्रियं निस्तारयित्वा यथा-संभाषितं समुपभुञ्जीत ।। ०४.१२.३६ ।।

जाति-विशिष्टां अकामां अपत्यवतीं निष्क्रयेण दद्यात् ।। ०४.१२.३७ ।।

चोर-हस्तान्नदी-वेगाद्दुर्भिक्षाद्देश-विभ्रमात् । ।। ०४.१२.३८अ ब ।।

निस्तारयित्वा कान्तारान्नष्टां त्यक्तां मृताइति वा ।। ०४.१२.३८च्द् ।।

भुञ्जीत स्त्रियं अन्येषां यथा-संभाषितं नरः । ।। ०४.१२.३९अ ब ।।

न तु राज-प्रतापेन प्रमुक्तां स्वजनेन वा ।। ०४.१२.३९च्द् ।।

न चौत्तमां न चाकामां पूर्व-अपत्यवतीं न च । ।। ०४.१२.४०अ ब ।।

ईदृशीं त्वनुरूपेण निष्क्रयेणापवाहयेत् ।। ०४.१२.४०च्द् ।।

ब्राह्मणं अपेयं अभक्ष्यं वा ग्रासयत उत्तमो दण्डः । क्षत्रियं मध्यमः । वैश्यं पूर्वः साहस-दण्डः । शूद्रं चतुष्-पञ्चाशत्-पणो दण्डः ।। ०४.१३.०१ ।।

स्वयं ग्रसितारो निर्विषयाः कार्याः ।। ०४.१३.०२ ।।

पर-गृह-अभिगमने दिवा पूर्वः साहस-दण्डः । रात्रौ मध्यमः ।। ०४.१३.०३ ।।

दिवा रात्रौ वा सशस्त्रस्य प्रविशत उत्तमो दण्डः ।। ०४.१३.०४ ।।

भिक्षुक-वैदेहकौ मत्त-उन्मत्तौ बलादापदि चातिसंनिकृष्टाः प्रवृत्त-प्रवेशाश्चादण्ड्याः । अन्यत्र प्रतिषेधात् ।। ०४.१३.०५ ।।

स्व-वेश्मनो विरात्रादूर्ध्वं परिवारं आरोहतः पूर्वः साहस-दण्डः । पर-वेश्मनो मध्यमः । ग्राम-आराम-वाट-भेदिनश्च ।। ०४.१३.०६ ।।

ग्रामेष्वन्तः सार्थिका ज्ञात-सारा वसेयुः ।। ०४.१३.०७ ।।

मुषितं प्रवासितं चएषां अनिर्गतं रात्रौ ग्राम-स्वामी दद्यात् ।। ०४.१३.०८ ।।

ग्राम-अन्तरेषु वा मुषितं प्रवासितं विवीत-अध्यक्षो दद्यात् ।। ०४.१३.०९ ।।

अविवीतानां चोर-रज्जुकः ।। ०४.१३.१० ।।

तथाअप्यगुप्तानां सीम-अवरोधेन विचयं दद्युः ।। ०४.१३.११ ।।

असीम-अवरोधे पञ्च-ग्रामी दश-ग्रामी वा ।। ०४.१३.१२ ।।

दुर्बलं वेश्म शकटं अनुत्तब्धं ऊर्ध-स्तंभं शस्त्रं अनपाश्रयं अप्रतिच्छन्नं श्वभ्रं कूपं कूट-अवपातं वा कृत्वा हिंसायां दण्ड-पारुष्यं विद्यात् ।। ०४.१३.१३ ।।

वृक्षच्-छेदने दंय-रश्मि-हरणे चतुष्पदानां अदान्त-सेवने वाहने वा काष्ठ-लोष्ट-पाषाण-दण्ड-बाण-बाहु-विक्षेपणेषु याने हस्तिना च स्मघट्टने "अपेहि" इति प्रकोशन्नदण्ड्यः ।। ०४.१३.१४ ।।

हस्तिना रोषितेन हतो द्रोण-अन्नं मद्य-कुंभं माल्य-अनुलेपनं दन्त-प्रमार्जनं च पटं दद्यात् ।। ०४.१३.१५ ।।

अश्व-मेध-अवभृथ-स्नानेन तुल्यो हस्तिना वध इति पाद-प्रक्षालनं ।। ०४.१३.१६ ।।

उदासीन-वधे यातुरुत्तमो दण्डः ।। ०४.१३.१७ ।।

शृङ्गिणा दंष्ट्रिणा वा हिंस्यमानं अमोक्षयतः स्वामिनः पूर्वः साहस-दण्डः । प्रतिक्रुष्टस्य द्वि-गुणः ।। ०४.१३.१८ ।।

शृङ्गि-दंष्ट्रिभ्यां अन्योन्यं घातयतस्तच्च तावच्च दण्डः ।। ०४.१३.१९ ।।

देव-पशुं ऋषभं उक्षाणं गो-कुमारीं वा वाहयतः पञ्च-शतो दण्डः । प्रवासयत उत्तमः ।। ०४.१३.२० ।।

लोम-दोह-वाहन-प्रजनन-उपकारिणां क्षुद्र-पशूनां अदाने तच्च तावच्च दण्डः । प्रवासने च । अन्यत्र देव-पितृ-कार्येभ्यः ।। ०४.१३.२१ ।।

छिन्न-नस्यं भग्न-युगं तिर्यक्-प्रतिमुख-आगतं प्रत्यासरद्वा चक्र-युक्तं याता पशु-मनुष्य-संबाधे वा हिंसायां अदण्ड्यः ।। ०४.१३.२२ ।।

अन्यथा यथा-उक्तं मानुष-प्राणि-हिंसायां दण्डं अभ्यावहेत् ।। ०४.१३.२३ ।।

अमानुष-प्राणि-वधे प्राणि-दानं च ।। ०४.१३.२४ ।।

बाले यातरि यानस्थः स्वामी दण्ड्यः । अस्वामिनि यानस्थः । प्राप्त-व्यवहारो वा याता ।। ०४.१३.२५ ।।

बाल-अधिष्ठितं अपुरुषं वा यानं राजा हरेत् ।। ०४.१३.२६ ।।

कृत्य-अभिचाराभ्यां यत्-परं आपादयेत्तद्-आपादयितव्यः ।। ०४.१३.२७ ।।

कामं भार्यायां अनिच्छन्त्यां कन्यायां वा दार-अर्थिनो भर्तरि भार्याया वा संवदन-करणं ।। ०४.१३.२८ ।।

अन्यथा-हिंसायां मध्यमः साहस-दण्डः ।। ०४.१३.२९ ।।

माता-पित्रोर्भगिनीं मातुलानीं आचार्याणीं स्नुषां दुहितरं भगिनीं वाअधिचरतस्त्रि-लिङ्गच्-छेदनं वधश्च ।। ०४.१३.३० ।।

सकामा तदेव लभेत । दास-परिचारक-आहितक-भुक्ता च ।। ०४.१३.३१ ।।

ब्राह्मण्यां अगुप्तायां क्षत्रियस्यौत्तमः । सर्व-स्वं वैश्यस्य । शूद्रः कट-अग्निना दह्येत ।। ०४.१३.३२ ।।

सर्वत्र राज-भार्या-गमने कुंभी-पाकः ।। ०४.१३.३३ ।।

श्व-पाकी-गमने कृत-कबन्ध-अङ्कः पर-विषयं गच्छेत् । श्व-पाकत्वं वा शूद्रः ।। ०४.१३.३४ ।।

श्व-पाकस्यऽर्या-गमने वधः । स्त्रियाः कर्ण-नास-आच्छेदनं ।। ०४.१३.३५ ।।

प्रव्रजिता-गमने चतुर्-विंशति-पणो दण्डः ।। ०४.१३.३६ ।।

सकामा तदेव लभेत ।। ०४.१३.३७ ।।

रूप-आजीवायाः प्रसह्य-उपभोगे द्वादश-पणो दण्डः ।। ०४.१३.३८ ।।

बहूनां एकां अधिचरतां पृथक्चतुर्-विंशति-पणो दण्डः ।। ०४.१३.३९ ।।

स्त्रियं अयोनौ गच्छतः पूर्वः साहस-दण्डः । पुरुषं अधिमेहतश्च ।। ०४.१३.४० ।।

मैथुने द्वादश-पणस्तिर्यग्-योनिष्वनात्मनः । ।। ०४.१३.४१अ ब ।।

दैवत-प्रतिमानां च गमने द्वि-गुणः स्मृतः ।। ०४.१३.४१च्द् ।।

अदण्ड्य-दण्डने राज्ञो दण्डस्त्रिंशद्-गुणोअंभसि । ।। ०४.१३.४२अ ब ।।

वरुणाय प्रदातव्यो ब्राह्मणेभ्यस्ततः परं ।। ०४.१३.४२च्द् ।।

तेन तत्पूयते पापं राज्ञो दण्ड-अपचारजं । ।। ०४.१३.४३अ ब ।।

शास्ता हि वरुणो राज्ञां मिथ्या व्याचरतां नृषु ।। ०४.१३.४३च्द् ।।

दुर्ग-राष्ट्रयोः कण्टक-शोधनं उक्तं ।। ०५.१.०१ ।।

राज-राज्ययोर्वक्ष्यामः ।। ०५.१.०२ ।।

राजानं अवगृह्यौपजीविनः शत्रु-साधारणा वा ये मुख्यास्तेषु गूढ-पुरुष-प्रणिधिः कृत्य-पक्ष-उपग्रहो वा सिद्धिः यथा-उक्तं पुरस्ताद् । उपजापोअपसर्पो वा यथा पारग्रामिके वक्ष्यामः ।। ०५.१.०३ ।।

राज्य-उपघातिनस्तु वल्लभाः संहता वा ये मुख्याः प्रकाशं अशक्याः प्रतिषेद्धुं दूष्याः तेषु धर्म-रुचिरुपांशु-दण्डं प्रयुञ्जीत ।। ०५.१.०४ ।।

दूष्य-महा-मात्र-भ्रातरं असत्-कृतं सत्त्री प्रोत्साह्य राजानं दर्शयेत् ।। ०५.१.०५ ।।

तं राजा दूष्य-द्रव्य-उपभोग-अतिसर्गेण दूष्ये विक्रमयेत् ।। ०५.१.०६ ।।

शस्त्रेण रसेन वा विक्रान्तं तत्रएव घातयेद्"भ्रातृ-घातकोअयम्" इति ।। ०५.१.०७ ।।

तेन पारशवः परिचारिका-पुत्रश्च व्याख्यातौ ।। ०५.१.०८ ।।

दूष्यं-महामात्रं वा सत्त्रि-प्रोत्साहितो भ्राता दायं याचेत ।। ०५.१.०९ ।।

तं दूष्य-गृह-प्रतिद्वारि रात्रावुपशयानं अन्यत्र वा वसन्तं तीक्ष्णो हन्ता ब्रूयाद्"हतोअयं दाय-कामुकः" इति ।। ०५.१.१० ।।

ततो हत-पक्षं उपगृह्यैतरं निगृह्णीयात् ।। ०५.१.११ ।।

दूष्य-समीपस्था वा सत्त्रिणो भ्रातरं दायं याचमानं घातेन परिभर्त्सयेयुः ।। ०५.१.१२ ।।

तं रात्रौ इति समानं ।। ०५.१.१३ ।।

दूष्य-महा-मात्रयोर्वा यः पुत्रः पितुः पिता वा पुत्रस्य दारानधिचरति । भ्राता वा भ्रातुः । तयोः कापटिक-मुखः कलहः पूर्वेण व्याख्यातः ।। ०५.१.१४ ।।

दूष्य-महा-मात्र-पुत्रं आत्म-संभावितं वा सत्त्री "राज-पुत्रस्त्वम् । शत्रु-भयादिह न्यस्तोअसि" इत्युपजपेत् ।। ०५.१.१५ ।।

प्रतिपन्नं राजा रहसि पूजयेत्"प्राप्त-यौवराज्य-कालं त्वां महा-मात्र-भयान्नाभिषिञ्चामि" इति ।। ०५.१.१६ ।।

तं सत्त्री महा-मात्र-वधे योजयेत् ।। ०५.१.१७ ।।

विक्रान्तं तत्रएव घातयेत्"पितृ-घातकोअयम्" इति ।। ०५.१.१८ ।।

भिक्षुकी वा दूष्य-भार्यां सांवदनिकीभिरौषधीभिः संवास्य रसेनातिसंदध्यात् ।। ०५.१.१९ ।।

इत्याप्य-प्रयोगः ।। ०५.१.२० ।।

दूष्य-महा-मात्रं अटवीं पर-ग्रामं वा हन्तुं कान्तार-व्यवहिते वा देशे राष्ट्र-पालं अन्त-पालं वा स्थापयितुं नागर-स्थानं वा कुपितं अवग्राहितुं सार्थ-अतिवाह्यं प्रत्यन्ते वा सप्रत्यादेयं आदातुं फल्गु-बलं तीक्ष्ण-युक्तं प्रेषयेत् ।। ०५.१.२१ ।।

रात्रौ दिवा वा युद्धे प्रवृत्ते तीक्ष्णाः प्रतिरोधक-व्यञ्जना वा हन्युः "अभियोगे हतः" इति ।। ०५.१.२२ ।।

यात्रा-विहार-गतो वा दूष्य-महा-मात्रान्दर्शनायऽह्वयेत् ।। ०५.१.२३ ।।

ते गूढ-शस्त्रैस्तीक्ष्णैः सह प्रविष्टा मध्यम-कक्ष्यायां आत्म-विचयं अन्तः-प्रवेशन-अर्थं दद्युः ।। ०५.१.२४ ।।

ततो दौवारिक-अभिगृहीतास्तीक्ष्णाः "दूष्य-प्रयुक्ताः स्म" इति ब्रूयुः ।। ०५.१.२५ ।।

ते तद्-अभिविख्याप्य दूष्यान्हन्युः ।। ०५.१.२६ ।।

तीक्ष्ण-स्थाने चान्ये वध्याः ।। ०५.१.२७ ।।

बहिर्-विहार-गतो वा दूष्यानासन्न-आवासान्पूजयेत् ।। ०५.१.२८ ।।

तेषां देवी-व्यञ्जना वा दुःस्त्री रात्रावावासेषु गृह्येतैति समानं पूर्वेण ।। ०५.१.२९ ।।

दूष्य-महा-मात्रं वा "सूदो भक्ष-कारो वा ते शोभनः" इति स्तवेन भक्ष्य-भोज्यं याचेत । बहिर्वा क्वचिदध्व-गतः पानीयं ।। ०५.१.३० ।।

तद्-उभयं रसेन योजयित्वा प्रतिस्वादने तावेवौपयोजयेत् ।। ०५.१.३१ ।।

तद्-अभिविख्याप्य "रसदौ" इति घातयेत् ।। ०५.१.३२ ।।

अभिचार-शीलं वा सिद्ध-व्यञ्जनो "गोधा-कूर्म-कर्कटक-कूटानां लक्षण्यानां अन्यतम-प्राशनेन मनोरथानवाप्स्यसि" इति ग्राहयेत् ।। ०५.१.३३ ।।

प्रतिपन्नं कर्मणि रसेन लोह-मुसलैर्वा घातयेत्"कर्म-व्यापदा हतः" इति ।। ०५.१.३४ ।।

चिकित्सक-व्यञ्जनो वा दौरात्मिकं असाध्यं वा व्याधिं दूष्यस्य स्थापयित्वा भैषज्य-आहार-योगेषु रसेनातिसंदध्यात् ।। ०५.१.३५ ।।

सूद-आरालिक-व्यञ्जना वा प्रणिहिता दूष्यं रसेनातिसंदध्युः ।। ०५.१.३६ ।।

इत्युपनिषत्-प्रतिषेधः ।। ०५.१.३७ ।।

उभय-दूष्य-प्रतिषेधस्तु ।। ०५.१.३८ ।।

यत्र दूष्यः प्रतिषेद्धव्यस्तत्र दूष्यं एव फल्गु-बल-तीक्ष्ण-युक्तं प्रेषयेत् । गच्छ । अमुष्मिन्दुर्गे राष्ट्रे वा सैन्यं उत्थापय हिरण्यं वा । वल्लभाद्वा हिरण्यं आहारय । वल्लभ-कन्यां वा प्रसह्यऽनय । दुर्ग-सेतु-वणिक्-पथ-शून्य-निवेश-खनि-द्रव्य-हस्ति-वन-कर्मणां अन्यतमद्वा कारय राष्ट्र-पाल्यं अन्त-पाल्यं वा यश्च त्वा प्रतिषेधयेन् ।। ०५.१.३९ ।।

।। न वा ते साहाय्यं दद्यात्स बन्धव्यः स्यात्" इति ।।

तथैवैतरेषां प्रेषयेद्"अमुष्याविनयः प्रतिषेद्धव्यः" इति ।। ०५.१.४० ।।

तं एतेषु कलह-स्थानेषु कर्म-प्रतिघातेषु वा विवदमानं तीक्ष्णाः शस्त्रं पातयित्वा प्रच्छन्नं हन्युः ।। ०५.१.४१ ।।

तेन दोषेणैतरे नियन्तव्याः ।। ०५.१.४२ ।।

पुराणां ग्रामाणां कुलानां वा दूष्याणां सीमा-क्षेत्र-खल-वेश्म-मर्यादासु द्रव्य-उपकरण-सस्य-वाहन-हिंसासु प्रेक्षा-कृत्यौत्सवेषु वा समुत्पन्ने कलहे तीक्ष्णैरुत्पादिते वा तीक्ष्णाः शस्त्रं पातयित्वा ब्रूयुः "एवं क्रियन्ते येअमुना कलहायन्तेः इति ।। ०५.१.४३ ।।

तेन दोषेणैतरे नियन्तव्याः ।। ०५.१.४४ ।।

येषां वा दूष्याणां जात-मूलाः कलहास्तेषां क्षेत्र-खल-वेश्मान्यादीपयित्वा बन्धु-संबन्धिषु वाहनेषु वा तीक्ष्णाः शस्त्रं पातयित्वा तथैव ब्रूयुः "अमुना प्रयुक्ताः स्मः" इति ।। ०५.१.४५ ।।

तेन दोषेणैतरे नियन्तव्याः ।। ०४.४.४६ ।।

दुर्ग-राष्ट्र-दूष्यान्वा सत्त्रिणः परस्परस्यऽवेशनिकान्कारयेयुः ।। ०५.१.४७ ।।

तत्र रसदा रसं दद्युः ।। ०५.१.४८ ।।

तेन दोषेणैतरे नियन्तव्याः ।। ०५.१.४९ ।।

भिक्षुकी वा दूष्य-राष्ट्र-मुख्यं "दूष्य-राष्ट्र-मुख्यस्य भार्या स्नुषा दुहिता वा कामयते" इत्युपजपेत् ।। ०५.१.५० ।।

प्रतिपन्नस्यऽभरणं आदाय स्वामिने दर्शयेत्"असौ ते मुख्यो यौवन-उत्सिक्तो भार्यां स्नुषां दुहितरं वाअभिमन्यते" इति ।। ०५.१.५१ ।।

तयोः कलहो रात्रौ इति समानं ।। ०५.१.५२ ।।

दूष्य-दण्ड-उपनतेषु तु युव-राजः सेना-पतिर्वा किंचिदपकृत्यापक्रान्तो विक्रमेत ।। ०५.१.५३ ।।

ततो राजा दूष्य-दण्ड-उपनतानेव प्रेषयेत्फल्गु-बल-तीक्ष्ण-युक्तानिति समानाः सर्व एव योगाः ।। ०५.१.५४ ।।

तेषां च पुत्रेष्वनुक्षियत्सु यो निर्विकारः स पितृ-दायं लभेत ।। ०५.१.५५ ।।

एवं अस्य पुत्र-पौत्राननुवर्तते राज्यं अपास्त-पुरुष-दोषं ।। ०५.१.५६ ।।

स्व-पक्षे पर-पक्षे वा तूष्णीं दण्डं प्रयोजयेत् । ।। ०५.१.५७अ ब ।।

आयत्यां च तदात्वे च क्षमावानविशङ्कितः ।। ०५.१.५७च्द् ।।

कोशं अकोशः प्रत्युत्पन्न-अर्थ-कृच्छ्रः संगृह्णीयात् ।। ०५.२.०१ ।।

जन-पदं महान्तं अल्प-प्रमाणं वाअदेव-मातृकं प्रभूत-धान्यं धान्यस्यांशं तृतीयं चतुर्थं वा याचेत । यथा-सारं मध्यं अवरं वा ।। ०५.२.०२ ।।

दुर्ग-सेतु-कर्म-वणिक्-पथ-शून्य-निवेश-खनि-द्रव्य-हस्ति-वन-कर्म-उपकारिणं प्रत्यन्तं अल्प-प्रमाणं वा न याचेत ।। ०५.२.०३ ।।

धान्य-पशु-हिरण्य-आदि निविशमानाय दद्यात् ।। ०५.२.०४ ।।

चतुर्थं अंशं धान्यानां बीज-भक्त-शुद्धं च हिरण्येन क्रीणीयात् ।। ०५.२.०५ ।।

अरण्य-जातं श्रोत्रिय-स्वं च परिहरेत् ।। ०५.२.०६ ।।

तदप्यनुग्रहेण क्रीणीयात् ।। ०५.२.०७ ।।

तस्याकरणे वा समाहर्तृ-पुरुषा ग्रीष्मे कर्षकाणां उद्वापं कारयेयुः ।। ०५.२.०८ ।।

प्रमाद-अवस्कन्नस्यात्ययं द्वि-गुणं उदाहरन्तो बीज-काले बीज-लेख्यं कुर्युः ।। ०५.२.०९ ।।

निष्पन्ने हरित-पक्व-आदानं वारयेयुः । अन्यत्र शाक-कट-भङ्ग-मुष्टिभ्यां देव-पितृ-पूजा-दान-अर्थं गव-अर्थं वा ।। ०५.२.१० ।।

भिक्षुक-ग्राम-भृतक-अर्थं च राशि-मूलं परिहरेयुः ।। ०५.२.११ ।।

स्व-सस्य-अपहारिणः प्रतिपातोअष्ट-गुणः ।। ०५.२.१२ ।।

पर-सस्य-अपहारिणः पञ्चाशद्-गुणः सीता-अत्ययः । स्व-वर्गस्य । बाह्यस्य तु वधः ।। ०५.२.१३ ।।

चतुर्थं अंशं धान्यानां षष्ठं वन्यानां तूल-लाक्षा-क्षौम-वल्क-कार्पास-रौम-कौशेय-कौषध-गन्ध-पुष्प-फल-शाक-पण्यानां काष्ठ-वेणु-मांस-वल्लूराणां च गृह्णीयुः । दन्त-अजिनस्यार्धं ।। ०५.२.१४ ।।

तदनिसृष्टं विक्रीणानस्य पूर्वः साहस-दण्डः ।। ०५.२.१५ ।।

इति कर्षकेषु प्रणयः ।। ०५.२.१६ ।।

सुवर्ण-रजत-वज्र-मणि-मुक्ता-प्रवाल-अश्व-हस्ति-पण्याः पञ्चाशत्-कराः ।। ०५.२.१७ ।।

सूत्र-वस्त्र-ताम्र-वृत्त-कंस-गन्ध-भैषज्य-शीधु-पण्याश्चत्वारिंशत्-कराः ।। ०५.२.१८ ।।

धान्य-रस-लोह-पण्याः शकट-व्यवहारिणश्च त्रिंशत्-कराः ।। ०५.२.१९ ।।

काच-व्यवहारिणो महा-कारवश्च विंशति-कराः ।। ०५.२.२० ।।

क्षुद्र-कारवो बन्धकी-पोषकाश्च दश-कराः ।। ०५.२.२१ ।।

काष्ठ-वेणु-पाषाण-मृद्-भाण्ड-पक्व-अन्न-हरित-पण्याः पञ्च-कराः ।। ०५.२.२२ ।।

कुशीलवा रूप-आजीवाश्च वेतन-अर्धं दद्युः ।। ०५.२.२३ ।।

हिरण्य-करं कर्मण्यानाहारयेयुः । न चएषां कंचिदपराधं परिहरेयुः ।। ०५.२.२४ ।।

ते ह्यपरिगृहीतं अभिनीय विक्रीणीरन् ।। ०५.२.२५ ।।

इति व्यवहारिषु प्रणयः ।। ०५.२.२६ ।।

कुक्कुट-सूकरं अर्धं दद्यात् । क्षुद्र-पशवः षड्-भागम् । गो-महिष-अश्वतर-खर-उष्ट्राश्च दश-भागं ।। ०५.२.२७ ।।

बन्धकी-पोषका राज-प्रेष्याभिः परम-रूप-यौवनाभिः कोशं संहरेयुः ।। ०५.२.२८ ।।

इति योनि-पोषकेषु प्रणयः ।। ०५.२.२९ ।।

सकृदेव न द्विः प्रयोज्यः ।। ०५.२.३० ।।

तस्याकरणे वा समाहर्ता कार्यं अपदिश्य पौर-जानपदान्भिक्षेत ।। ०५.२.३१ ।।

योग-पुरुषाश्चात्र पूर्वं अतिमात्रं दद्युः ।। ०५.२.३२ ।।

एतेन प्रदेशेन राजा पौर-जानपदान्भिक्षेत ।। ०५.२.३३ ।।

कापटिकाश्चएनानल्पं प्रयच्छतः कुत्सयेयुः ।। ०५.२.३४ ।।

सारतो वा हिरण्यं आढ्यान्याचेत । यथा-उपकारं वा । स्व-वशा वा यदुपहरेयुः ।। ०५.२.३५ ।।

स्थानच्-छत्र-वेष्टन-विभूषाश्चएषां हिरण्येन प्रयच्छेत् ।। ०५.२.३६ ।।

पाषण्ड-संघ-द्रव्यं अश्रोत्रिय-उपभोग्यं देव-द्रव्यं वा कृत्य-कराः प्रेतस्य दग्ध-गृहस्य वा हस्ते न्यस्तं इत्युपहरेयुः ।। ०५.२.३७ ।।

देवता-अध्यक्षो दुर्ग-राष्ट्र-देवतानां यथा-स्वं एकस्थं कोशं कुर्यात् । तथैव चौपहरेत् ।। ०५.२.३८ ।।

दैवत-चैत्यं सिद्ध-पुण्य-स्थानं औपपादिकं वा रात्रावुत्थाप्य यात्रा-समाजाभ्यां आजीवेत् ।। ०५.२.३९ ।।

चैत्य-उपवन-वृक्षेण वा देवता-अभिगमनं अनार्तव-पुष्प-फल-युक्तेन ख्यापयेत् ।। ०५.२.४० ।।

मनुष्य-करं वा वृक्षे रक्षो-भयं प्ररूपयित्वा सिद्ध-व्यञ्जनाः पौर-जानपदानां हिरण्येन प्रतिकुर्युः ।। ०५.२.४१ ।।

सुरुङ्गा-युक्ते वा कूपे नागं अनियत-शिरस्कं हिरण्य-उपहारेण दर्शयेत् ।। ०५.२.४२ ।।

नाग-प्रतिमायां अन्तश्-छन्नायां चैत्यच्-छिद्रे वल्मीकच्-छिद्रे वा सर्प-दर्शनं आहारेण प्रतिबद्ध-संज्ञं कृत्वा श्रद्दधानानां दर्शयेत् ।। ०५.२.४३ ।।

अश्रद्दधानानां आचमन-प्रोक्षणेषु रसं उपचार्य देवता-अभिशापं ब्रूयात् । अभित्यक्तं वा दंशयित्वा ।। ०५.२.४४ ।।

योग-दर्शन-प्रतीकारेण वा कोश-अभिसंहरणं कुर्यात् ।। ०५.२.४५ ।।

वैदेहक-व्यञ्जनो वा प्रभूत-पण्य-अन्तेवासी व्यवहरेत ।। ०५.२.४६ ।।

स यदा पण्य-मूल्ये निक्षेप-प्रयोगैरुपचितः स्यात्तदाएनं रात्रौ मोषयेत् ।। ०५.२.४७ ।।

एतेन रूप-दर्शकः सुवर्ण-कारश्च व्याख्यातौ ।। ०५.२.४८ ।।

वैदेहक-व्यञ्जनो वा प्रख्यात-व्यवहारः प्रहवण-निमित्तं याचितकं अवक्रीतकं वा रूप्य-सुवर्ण-भाण्डं अनेकं गृह्णीयात् ।। ०५.२.४९ ।।

समाजे वा सर्व-पण्य-संदोहेन प्रभूतं हिरण्य-सुवर्णं ऋणं गृह्णीयात् । प्रतिभाण्ड-मूल्यं च ।। ०५.२.५० ।।

तदुभयं रात्रौ मोषयेत् ।। ०५.२.५१ ।।

साध्वी-व्यञ्जनाभिः स्त्रीभिर्दूष्यानुन्मादयित्वा तासां एव वेश्मस्वभिगृह्य सर्व-स्वान्याहरेयुः ।। ०५.२.५२ ।।

दूष्य-कुल्यानां वा विवादे प्रत्युत्पन्ने रसदाः प्रणिहिता रसं दद्युः ।। ०५.२.५३ ।।

तेन दोषेणैतरे पर्यादातव्याः ।। ०५.२.५४ ।।

दूष्यं अभित्यक्तो वा श्रद्धेय-अपदेशं पण्यं हिरण्य-निक्षेपं ऋण-प्रयोगं दायं वा याचेत ।। ०५.२.५५ ।।

दास-शब्देन वा दूष्यं आलम्बेत । भार्यां अस्य स्नुषां दुहितरं वा दासी-शब्देन भार्या-शब्देन वा ।। ०५.२.५६ ।।

तं दूष्य-गृह-प्रतिद्वारि रात्रावुपशयानं अन्यत्र वा वसन्तं तीक्ष्णो हत्वा ब्रूयात्"हतोऽयं अर्थ-कामुकः" इति ।। ०५.२.५७ ।।

तेन दोषेणैतरे पर्यादातव्याः ।। ०५.२.५८ ।।

सिद्ध-व्यञ्जनो वा दूष्यं जम्भक-विद्याभिः प्रलोभयित्वा ब्रूयात्"अक्षय-हिरण्यं राज-द्वारिकं स्त्री-हृदयं अरि-व्याधि-करं आयुष्यं पुत्रीयं वा कर्म जानामि" इति ।। ०५.२.५९ ।।

प्रतिपन्नं चैत्य-स्थाने रात्रौ प्रभूत-सुरा-मांस-गन्धं उपहारं कारयेत् ।। ०५.२.६० ।।

एक-रूपं चात्र हिरण्यं पूर्व-निखातं प्रेत-अङ्गं प्रेत-शिशुर्वा यत्र निहितः स्यात् । ततो हिरण्यं अस्य दर्शयेद्"अत्यल्पम्" इति च ब्रूयात् ।। ०५.२.६१ ।।

"प्रभूत-हिरण्य-हेतोः पुनरुपहारः कर्तव्य इति स्वयं एवएतेन हिरण्येन श्वो-भूते प्रभूतं औपहारिकं क्रीणीहि" इति ।। ०५.२.६२ ।।

स तेन हिरण्येनाउपहारिक-क्रये गृह्येत ।। ०५.२.६३ ।।

मातृ-व्यञ्जनया वा "पुत्रो मे त्वया हतः" इत्यवकुपिता स्यात् ।। ०५.२.६४ ।।

संसिद्धं एवास्य रात्रि-यागे वन-यागे वन-क्रीडायां वा प्रवृत्तायां तीक्ष्णा विशस्याभित्यक्तं अतिनयेयुः ।। ०५.२.६५ ।।

दूष्यस्य वा भृतक-व्यञ्जनो वेतन-हिरण्ये कूट-रूपं प्रक्षिप्य प्ररूपयेत् ।। ०५.२.६६ ।।

कर्म-कर-व्यञ्जनो वा गृहे कर्म कुर्वाणः स्तेन-कूट-रूप-कारक-उपकरणं उपनिदध्यात् । चिकित्सक-व्यञ्जनो वा गरं अगद-अपदेशेन ।। ०५.२.६७ ।।

प्रत्यासन्नो वा दूष्यस्य सत्त्री प्रणिहितं अभिषेक-भाण्डं अमित्र-शासनं च कापटिक-मुखेनऽचक्षीत । कारणं च ब्रूयात् ।। ०५.२.६८ ।।

एवं दूष्येष्वधार्मिकेषु च वर्तेत । नैतरेषु ।। ०५.२.६९ ।।

पक्वं पक्वं इवऽरामात्फलं राज्यादवाप्नुयात् । ।। ०५.२.७०अ ब ।।

आत्मच्-छेद-भयादामं वर्जयेत्कोप-कारकं ।। ०५.२.७०च्द् ।।

दुर्ग-जन-पद-शक्त्या भृत्य-कर्म समुदय-पादेन स्थापयेत् । कार्य-साधन-सहेन वा भृत्य-लाभेन ।। ०५.३.०१ ।।

शरीरं अवेक्षेत । न धर्म-अर्थौ पीडयेत् ।। ०५.३.०२ ।।

ऋत्विग्-आचार्य-मन्त्रि-पुरोहित-सेना-पति-युव-राज-राज-मातृ-राज-महिष्योअष्ट-चत्वारिंशत्-साहस्राः ।। ०५.३.०३ ।।

एतावता भरणेनानास्पद्यत्वं अकोपकं चएषां भवति ।। ०५.३.०४ ।।

दौवारिक-अन्तर्-वंशिक-प्रशास्तृ-समाहर्तृ-संनिधातारश्चतुर्-विंशति-साहस्राः ।। ०५.३.०५ ।।

एतावता कर्मण्या भवन्ति ।। ०५.३.०६ ।।

कुमार-कुमार-मातृ-नायक-पौर-व्यावहारिक-कार्मान्तिक-मन्त्रि-परिषद्-राष्ट्र-अन्त-पालाश्च द्वादश-साहस्राः ।। ०५.३.०७ ।।

स्वामि-परिबन्ध-बल-सहाया ह्येतावता भवन्ति ।। ०५.३.०८ ।।

श्रेणी-मुख्या हस्त्य्-अश्व-रथ-मुख्याः प्रदेष्टारश्चाष्ट-साहस्राः ।। ०५.३.०९ ।।

स्व-वर्ग-अनुकर्षिणो ह्येतावता भवन्ति ।। ०५.३.१० ।।

पत्त्य्-अश्व-रथ-हस्त्य्-अध्यक्षा द्रव्य-हस्ति-वन-पालाश्च चतुः-साहस्राः ।। ०५.३.११ ।।

रथिक-अनीकस्थ-चिकित्सक-अश्व-दमक-वर्धकयो योनि-पोषकाश्च द्वि-साहस्राः ।। ०५.३.१२ ।।

कार्तान्तिक-नैमित्तिक-मौहूर्तिक-पौराणिक-सूत-मागधाः पुरोहित-पुरुषाः सर्व-अध्यक्षाश्च साहस्राः ।। ०५.३.१३ ।।

शिल्पवन्तः पादाताः संख्यायक-लेखक-आदि-वर्गश्च पञ्च-शताः ।। ०५.३.१४ ।।

कुशीलवास्त्वर्ध-तृतीय-शताः । द्वि-गुण-वेतनाश्चएषां तूर्य-कराः ।। ०५.३.१५ ।।

कारु-शिल्पिनो विंशति-शतिकाः ।। ०५.३.१६ ।।

चतुष्पद-द्विपद-परिचारक-पारिकर्मिक-औपस्थायिक-पालक-विष्टि-बन्धकाः षष्टि-वेतनाः । आर्य-युक्त-आरोहक-माणवक-शैल-खनकाः सर्व-उपस्थायिनश्च ।। ०५.३.१७ ।।

आचार्या विद्यावन्तश्च पूजा-वेतनानि यथा-अर्हं लभेरन्पञ्च-शत-अवरं सहस्र-परं ।। ०५.३.१८ ।।

दश-पणिको योजने दूतो मध्यमः । दश-उत्तरे द्वि-गुण-वेतन आ-योजन-शतादिति ।। ०५.३.१९ ।।

समान-विद्येभ्यस्त्रि-गुण-वेतनो राजा राज-सूय-आदिषु क्रतुषु ।। ०५.३.२० ।।

राज्ञः सारथिः साहस्रः ।। ०५.३.२१ ।।

कापटिक-उदास्थित-गृह-पतिक-वैदेहक-तापस-व्यञ्जनाः साहस्राः ।। ०५.३.२२ ।।

ग्राम-भृतक-सत्त्रि-तीक्ष्ण-रसद-भिक्षुक्यः पञ्च-शताः ।। ०५.३.२३ ।।

चार-संचारिणोअर्ध-तृतीय-शताः । प्रयास-वृद्ध-वेतना वा ।। ०५.३.२४ ।।

शत-वर्ग-सहस्र-वर्गाणां अध्यक्षा भक्त-वेतन-लाभं आदेशं विक्षेपं च कुर्युः ।। ०५.३.२५ ।।

अविक्षेपो राज-परिग्रह-दुर्ग-राष्ट्र-रक्ष-अवेक्षणेषु च ।। ०५.३.२६ ।।

नित्य-मुख्याः स्युरनेक-मुख्याश्च ।। ०५.३.२७ ।।

कर्मसु मृतानां पुत्र-दारा भक्त-वेतनं लभेरन् ।। ०५.३.२८ ।।

बाल-वृद्ध-व्याधिताश्चएषां अनुग्राह्याः ।। ०५.३.२९ ।।

प्रेत-व्याधित-सूतिका-कृत्येषु चएषां अर्थ-मान-कर्म कुर्यात् ।। ०५.३.३० ।।

अल्प-कोशः कुप्य-पशु-क्षेत्राणि दद्यात् । अल्पं च हिरण्यं ।। ०५.३.३१ ।।

शून्यं वा निवेशयितुं अभ्युत्थितो हिरण्यं एव दद्यात् । न ग्रामं ग्राम-संजात-व्यवहार-स्थापन-अर्थं ।। ०५.३.३२ ।।

एतेन भृतानां अभृतानां च विद्या-कर्मभ्यां भक्त-वेतन-विशेषं च कुर्यात् ।। ०५.३.३३ ।।

षष्टि-वेतनस्यऽढकं कृत्वा हिरण्य-अनुरूपं भक्तं कुर्यात् ।। ०५.३.३४ ।।

पत्त्य्-अश्व-रथ-द्विपाः सूर्य-उदये बहिः संधि-दिवस-वर्जं शिल्प-योग्याः कुर्युः ।। ०५.३.३५ ।।

तेषु राजा नित्य-युक्तः स्यात् । अभीक्ष्णं चएषां शिल्प-दर्शनं कुर्यात् ।। ०५.३.३६ ।।

कृत-नर-इन्द्र-अङ्कं शस्त्र-आवरणं आयुध-अगारं प्रवेशयेत् ।। ०५.३.३७ ।।

अशस्त्राश्चरेयुः । अन्यत्र मुद्रा-अनुज्ञातात् ।। ०५.३.३८ ।।

नष्टं-विनष्टं वा द्वि-गुणं दद्यात् ।। ०५.३.३९ ।।

विध्वस्त-गणनां च कुर्यात् ।। ०५.३.४० ।।

सार्थिकानां शस्त्र-आवरणं अन्त-पाला गृह्णीयुः । समुद्रं अवचारयेयुर्वा ।। ०५.३.४१ ।।

यात्रां अभ्युत्थितो वा सेनां उद्योजयेत् ।। ०५.३.४२ ।।

ततो वैदेहक-व्यञ्जनाः सर्व-पण्यान्यायुधीयेभ्यो यात्रा-काले द्वि-गुण-प्रत्यादेयानि दद्युः ।। ०५.३.४३ ।।

एवं राज-पण्य-योग-विक्रयो वेतन-प्रत्यादानं च भवति ।। ०५.३.४४ ।।

एवं अवेक्षित-आय-व्ययः कोश-दण्ड-व्यसनं नावाप्नोति ।। ०५.३.४५ ।।

इति भक्त-वेतन-विकल्पः ।। ०५.३.४६ ।।

सत्त्रिणश्चऽयुधीयानां वेश्याः कारु-कुशीलवाः । ।। ०५.३.४७अ ब ।।

दण्ड-वृद्धाश्च जानीयुः शौच-अशौचं अतन्द्रिताः ।। ०५.३.४७च्द् ।।

लोक-यात्राविद्राजानं आत्म-द्रव्य-प्रकृति-संपन्नं प्रिय-हित-द्वारेणऽश्रयेत ।। ०५.४.०१ ।।

यं वा मन्येत "यथाअहं आश्रय-ईप्सुरेवं असौ विनय-ईप्सुराभिगामिक-गुण-युक्तः" इति । द्रव्य-प्रकृति-हीनं अप्येनं आश्रयेत । न त्वेवानात्म-संपन्नं ।। ०५.४.०२ ।।

अनात्मवा हि नीति-शास्त्र-द्वेषादनर्थ्य-संयोगाद्वा प्राप्यापि महदैश्वर्यं न भवति ।। ०५.४.०३ ।।

आत्मवति लब्ध-अवकाशः शास्त्र-अनुयोगं दद्यात् ।। ०५.४.०४ ।।

अविसंवादाद्धि स्थान-स्थैर्यं अवाप्नोति ।। ०५.४.०५ ।।

मति-कर्मसु पृष्ठस्तदात्वे चऽयत्यां च धर्म-अर्थ-संयुक्तं समर्थं प्रवीणवदपरिषद्-भीरुः कथयेत् ।। ०५.४.०६ ।।

ईप्सितः पणेत "धर्म-अर्थ-अनुयोगं अविशिष्टेषु बलवत्-संयुक्तेषु दण्ड-धारणं मत्-संयोगे तदात्वे च दण्ड-धारणं इति न कुर्याः । पक्षं वृत्तिं गुह्यं च मे नौपहन्याः । संज्ञया च त्वां काम-क्रोध-दण्डनेषु वारयेयम्" इति ।। ०५.४.०७ ।।

आदिष्टः प्रदिष्टायां भूमावनुज्ञातः प्रविशेत् । उपविशेच्च पार्श्वतः संनिकृष्ट-विप्रकृष्टः पर-आसनं ।। ०५.४.०८ ।।

विगृह्य कथनं असभ्यं अप्रत्यक्षं अश्रद्धेयं अनृतं च वाक्यं उच्चैरनर्मणि हासं वात-ष्ठीवने च शब्दवती न कुर्यात् ।। ०५.४.०९ ।।

मिथः कथनं अन्येन । जन-वादे द्वन्द्व-कथनम् । राज्ञो वेषं उद्धत-कुहकानां च । रत्न-अतिशय-प्रकाश-अभ्यर्थनम् । एक-अक्ष्य्-ओष्ठ-निर्भोगं भ्रुकुटी-कर्म वाक्य-अवक्षेपणं च ब्रुवति । बलवत्संयुक्त-विरोधम् । स्त्रीभिः स्त्री-दर्शिभिः सामन्त-दूतैर्द्वेष्य-पक्ष-अवक्षिप्तानर्थ्यैश्च प्रतिसंसर्गं एक-अर्थ-चर्यां संघातं च वर्जयेत् ।। ०५.४.१० ।।

अहीन-कालं राज-अर्थं स्व-अर्थं प्रिय-हितैः सह । ।। ०५.४.११अ ब ।।

पर-अर्थं देश-काले च ब्रूयाद्धर्म-अर्थ-संहितं ।। ०५.४.११च्द् ।।

पृष्टः प्रिय-हितं ब्रूयान्न ब्रूयादहितं प्रियं । ।। ०५.४.१२अ ब ।।

अप्रियं वा हितं ब्रूयात्शृण्वतोअनुमतो मिथः ।। ०५.४.१२च्द् ।।

तूष्णीं वा प्रतिवाक्ये स्याद्वेष्य-आदींश्च न वर्णयेत् । ।। ०५.४.१३अ ब ।।

अप्रिया अपि दक्षाः स्युस्तद्-भावाद्ये बहिष्-कृताः ।। ०५.४.१३च्द् ।।

अनर्थ्याश्च प्रिया दृष्टाश्चित्त-ज्ञान-अनुवर्तिनः । ।। ०५.४.१४अ ब ।।

अभिहास्येष्वभिहसेद्घोर-हासांश्च वर्जयेत् ।। ०५.४.१४च्द् ।।

परात्संक्रामयेद्घोरं न च घोरं परे वदेत् । ।। ०५.४.१५अ ब ।।

तितिक्षेतऽत्मनश्चैव क्षमावान्पृथिवी-समः ।। ०५.४.१५च्द् ।।

आत्म-रक्षा हि सततं पूर्वं कार्या विजानता । ।। ०५.४.१६अ ब ।।

अग्नाविव हि संप्रोक्ता वृत्ती राजाउपजीविनां ।। ०५.४.१६च्द् ।।

एक-देशं दहेदग्निः शरीरं वा परं गतः । ।। ०५.४.१७अ ब ।।

सपुत्र-दारं राजा तु घातयेदर्धयेत वा ।। ०५.४.१७च्द् ।।

नियुक्तः कर्मसु व्यय-विशुद्धं उदयं दर्शयेत् ।। ०५.५.०१ ।।

आभ्यन्तरं बाह्यं गुह्यं प्रकाश्यं आत्ययिकं उपेक्षितव्यं वा कार्यं "इदं एवम्" इति विशेषयेच्च ।। ०५.५.०२ ।।

मृगया-द्यूत-मद्य-स्त्रीषु प्रसक्तं नएनं अनुवर्तेत प्रशंसाभिः ।। ०५.५.०३ ।।

आसन्नश्चास्य व्यसन-उपघाते प्रयतेत । पर-उपजाप-अतिसंधान-उपधिभ्यश्च रक्षेत् ।। ०५.५.०४ ।।

इङ्गित-आकारौ चास्य लक्षयेत् ।। ०५.५.०५ ।।

काम-द्वेष-हर्ष-दैन्य-व्यवसाय-भय-द्वन्द्व-विपर्यासं इङ्गित-आकाराभ्यां हि मन्त्र-संवरण-अर्थं आचरति प्राज्ञः ।। ०५.५.०६ ।।

दर्शने प्रसीदति । वाक्यं प्रतिगृह्णाति । आसनं ददाति । विविक्तो दर्शयते । शङ्का-स्थाने नातिशङ्कते । कथायां रमते । परिज्ञाप्येष्ववेक्षते । पथ्यं उक्तं सहते । स्मयमानो नियुङ्क्ते । हस्तेन स्पृशति । श्लाघ्ये नौपहसति । परोक्षं गुणं ब्रवीति । भक्ष्येषु स्मरति । सह विहारं याति । व्यसनेअभ्युपपद्यते । तद्-भक्तीन्पूजयति । गुह्यं आचष्टे । मानं वर्धयति । अर्थं करोति । अनर्थं प्रतिहन्ति इति तुष्ट-ज्ञानं ।। ०५.५.०७ ।।

एतदेव विपरीतं अतुष्टस्य । भूयश्च वक्ष्यामः ।। ०५.५.०८ ।।

संदर्शने कोपः । वाक्यस्याश्रवण-प्रतिषेधौ । आसन-चक्षुषोरदानम् । वर्ण-स्वर-भेदः । एक-अक्षि-भ्रुकुट्य्-ओष्ठ-निर्भोगः । स्वेद-श्वास-स्मितानां अस्थान-उत्पत्तिः । पर-मन्त्रणम् । अकस्माद्-व्रजनम् । वर्धनं अन्यस्य । भूमि-गात्र-विलेखनम् । अन्यस्यौपतोदनम् । विद्या-वर्ण-देश-कुत्सा । सम-दोष-निन्दा । प्रतिदोष-निन्दा । प्रतिलोम-स्तवः । सुकृत-अनवेक्षणम् । दुष्कृत-अनुकीर्तनम् । पृष्ठ-अवधानम् । अतित्यागः । मिथ्या-अभिभाषणम् । राज-दर्शिनां च तद्-वृत्त-अन्यत्वं ।। ०५.५.०९ ।।

वृत्ति-विकारं चावेक्षेताप्यमानुषाणां ।। ०५.५.१० ।।

"अयं उच्चैः सिञ्चति" इति कात्यायनः प्रवव्राज । "क्रौञ्चोअपसव्यम्" इति कणिङ्को भारद्वाजः । "तृणम्" इति दीर्घश्चारायणः । "शीता शाटी" इति घोट-मुखः । "हस्ती प्रत्यौक्षीत्" इति किञ्जल्कः । "रथ-अश्वं प्राशंसीत्" इति पिशुनः । प्रति-रवणे शुनः पिशुन-पुत्रः ।। ०५.५.११ ।।

अर्थ-मान-अवक्षेपे च परित्यागः ।। ०५.५.१२ ।।

स्वामि-शीलं आत्मनश्च किल्बिषं उपलभ्य वा प्रतिकुर्वीत ।। ०५.५.१३ ।।

मित्रं उपकृष्टं वाअस्य गच्छेत् ।। ०५.५.१४ ।।

तत्रस्थो दोष-निर्घातं मित्रैर्भर्तरि चऽचरेत् । ।। ०५.५.१५अ ब ।।

ततो भर्तरि जीवे वा मृते वा पुनराव्रजेत् ।। ०५.५.१५च्द् ।।

राज-व्यसनं एवं अमात्यः प्रतिकुर्वीत ।। ०५.६.०१ ।।

प्रागेव मरण-आबाध-भयाद्राज्ञः प्रिय-हित-उपग्रहेण मास-द्वि-मास-अन्तरं दर्शनं स्थापयेद्"देश-पीडा-अपहं अमित्र-अपहं आयुष्यं पुत्रीयं वा कर्म राजा साधयति" इत्यपदेशेन ।। ०५.६.०२ ।।

राज-व्यञ्जनं अरूप-वेलायां प्रकृतीनां दर्शयेत् । मित्र-अमित्र-दूतानां च ।। ०५.६.०३ ।।

तैश्च यथा-उचितां संभाषां अमात्य-मुखो गच्छेत् ।। ०५.६.०४ ।।

दौवारिक-अन्तर्-वंशिक-मुखश्च यथा-उक्तं राज-प्रणिधिं अनुवर्तयेत् ।। ०५.६.०५ ।।

अपकारिषु च हेडं प्रसादं वा प्रकृति-कान्तं दर्शयेत् । प्रसादं एवौपकारिषु ।। ०५.६.०६ ।।

आप्त-पुरुष-अधिष्ठितौ दुर्ग-प्रत्यन्तस्थौ वा कोश-दण्डावेकस्थौ कारयेत् । कुल्य-कुमार-मुख्यांश्चान्य-अपदेशेन ।। ०५.६.०७ ।।

यश्च मुख्यः पक्षवान्दुर्ग-अटवीस्थो वा वैगुण्यं भजेत तं उपग्राहयेत् ।। ०५.६.०८ ।।

बह्व्-आबाधं वा यात्रां प्रेषयेत् । मित्र-कुलं वा ।। ०५.६.०९ ।।

यस्माच्च सामन्तादाबाधं पश्येत्तं उत्सव-विवाह-हस्ति-बन्धन-अश्व-पण्य-भूमि-प्रदान-अपदेशेनावग्राहयेत् । स्व-मित्रेण वा ।। ०५.६.१० ।।

ततः संधिं अदूष्यं कारयेत् ।। ०५.६.११ ।।

आटविक-अमित्रैर्वा वैरं ग्राहयेत् ।। ०५.६.१२ ।।

तत्-कुलीनं अपरुद्धं वा भूंय्-एक-देशेनौपग्राहयेत् ।। ०५.६.१३ ।।

कुल्य-कुमार-मुख्य-उपग्रहं कृत्वा वा कुमारं अभिषिक्तं एव दर्शयेत् ।। ०५.६.१४ ।।

दाण्ड-कर्मिकवद्वा राज्य-कण्टकानुद्धृत्य राज्यं कारयेत् ।। ०५.६.१५ ।।

यदि वा कश्चिन्मुख्यः सामन्त-आदीनां अन्यतमः कोपं भजेत तं "एहि । राजानं त्वा करिष्यामि" इत्यावाहयित्वा घातयेत् ।। ०५.६.१६ ।।

आपत्-प्रतीकारेण वा साधयेत् ।। ०५.६.१७ ।।

युव-राजे वा क्रमेण राज्य-भारं आरोप्य राज-व्यसनं ख्यापयेत् ।। ०५.६.१८ ।।

पर-भूमौ राज-व्यसने मित्रेणामित्र-व्यञ्जनेन शत्रोः संधिं अवस्थाप्यापगच्छेत् ।। ०५.६.१९ ।।

सामन्त-आदीनां अन्यतमं वाअस्य दुर्गे स्थापयित्वाअपगच्छेत् ।। ०५.६.२० ।।

कुमारं अभिषिच्य वा प्रतिव्यूहेत ।। ०५.६.२१ ।।

परेणाभियुक्तो वा यथा-उक्तं आपत्-प्रतीकारं कुर्यात् ।। ०५.६.२२ ।।

एवं एक-ऐश्वर्यं अमात्यः कारयेदिति कौटिल्यः ।। ०५.६.२३ ।।

"नएवम्" इति भारद्वाजः ।। ०५.६.२४ ।।

"प्रम्रियमाणे वा राजन्यमात्यः कुल्य-कुमार-मुख्यान्परस्परं मुख्येषु वा विक्रमयेत् ।। ०५.६.२५ ।।

विक्रान्तं प्रकृति-कोपेन घातयेत् ।। ०५.६.२६ ।।

कुल्य-कुमार-मुख्यानुपांशु-दण्डेन वा साधयित्वा स्वयं राज्यं गृह्णीयात् ।। ०५.६.२७ ।।

राज्य-कारणाद्धि पिता पुत्रान्पुत्राश्च पितरं अभिद्रुह्यन्ति । किं अङ्ग पुनरमात्य-प्रकृतिर्ह्येक-प्रग्रहो राज्यस्य ।। ०५.६.२८ ।।

तत्स्वयं उपस्थितं नावमन्येत ।। ०५.६.२९ ।।

"स्वयं आरूढा हि स्त्री त्यज्यमानाअभिशपति" इति लोक-प्रवादः ।। ०५.६.३० ।।

कालश्च सकृदभ्येति यं नरं काल-काङ्क्षिणं । ।। ०५.६.३१अ ब ।।

दुर्लभः स पुनस्तस्य कालः कर्म चिकीर्षतः ।। ०५.६.३१च्द् ।।

प्रकृति-कोपकं अधर्मिष्ठं अनैकान्तिकं चएतदिति कौटिल्यः ।। ०५.६.३२ ।।

राज-पुत्रं आत्म-संपन्नं राज्ये स्थापयेत् ।। ०५.६.३३ ।।

संपन्न-अभावेअव्यसनिनं कुमारं राज-कन्यां गर्भिणीं देवीं वा पुरस्-कृत्य महा-मात्रान्संनिपात्य ब्रूयात्"अयं वो निक्षेपः । पितरं अस्यावेक्षध्वं सत्त्व-अभिजनं आत्मनश्च । ध्वज-मात्रोअयं भवन्त एव स्वामिनः । कथं वा क्रियताम्" इति ।। ०५.६.३४ ।।

तथा ब्रुवाणं योग-पुरुषा ब्रूयुः "कोअन्यो भवत्-पुरोगादस्माद्राज्ञश्चातुर्वर्ण्यं अर्हति पालयितुम्" इति ।। ०५.६.३५ ।।

"तथा" इत्यमात्यः कुमारं राज-कन्यां गर्भिणीं देवीं वाअधिकुर्वीत । बन्धु-संबन्धिनां मित्र-अमित्र-दूतानां च दर्शयेत् ।। ०५.६.३६ ।।

भक्त-वेतन-विशेषं अमात्यानां आयुधीयानां च कारयेत् । "भूयश्चायं वृद्धः करिष्यति" इति ब्रूयात् ।। ०५.६.३७ ।।

एवं दुर्ग-राष्ट्र-मुख्यानाभाषेत । यथा-अर्हं च मित्र-अमित्र-पक्षं ।। ०५.६.३८ ।।

विनय-कर्मणि च कुमारस्य प्रयतेत ।। ०५.६.३९ ।।

कन्यायां समान-जातीयादपत्यं उत्पाद्य वाअभिषिञ्चेत् ।। ०५.६.४० ।।

मातुश्चित्त-क्षोभ-भयात्कुल्यं अल्प-सत्त्वं छात्रं च लक्षण्यं उपनिदध्यात् ।। ०५.६.४१ ।।

ऋतौ चएनां रक्षेत् ।। ०५.६.४२ ।।

न चऽत्म-अर्थं कंचिदुत्कृष्टं उपभोगं कारयेत् ।। ०५.६.४३ ।।

राज-अर्थं तु यान-वाहन-आभरण-वस्त्र-स्त्री-वेश्म-परिवापान्कारयेत् ।। ०५.६.४४ ।।

यौवनस्थं च याचेत विश्रमं चित्त-कारणात् । ।। ०५.६.४५अ ब ।।

परित्यजेदतुष्यन्तं तुष्यन्तं चानुपालयेत् ।। ०५.६.४५च्द् ।।

निवेद्य पुत्र-रक्षा-अर्थं गूढ-सार-परिग्रहान् । ।। ०५.६.४६अ ब ।।

अरण्यं दीर्घ-सत्त्रं वा सेवेतऽरुच्यतां गतः ।। ०५.६.४६च्द् ।।

मुख्यैरवगृहीतं वा राजानं तत्-प्रिय-आश्रितः । ।। ०५.६.४७अ ब ।।

इतिहास-पुराणाभ्यां बोधयेदर्थ-शास्त्रवित् ।। ०५.६.४७च्द् ।।

सिद्ध-व्यञ्जन-रूपो वा योगं आस्थाय पार्थिवं । ।। ०५.६.४८अ ब ।।

लभेत लब्ध्वा दूष्येषु दाण्डकर्मिकं आचरेत् ।। ०५.६.४८च्द् ।।

स्वाम्य्-अमात्य-जन-पद-दुर्ग-कोश-दण्ड-मित्राणि प्रकृतयः ।। ०६.१.०१ ।।

तत्र स्वामि-सम्पत् ।। ०६.१.०२ ।।

महा-कुलीनो दैव-बुद्धि-सत्त्व-सम्पन्नो वृद्ध-दर्शी धार्मिकः सत्य-वागविसंवादकः कृतज्ञः स्थूल-लक्षो महा-उत्साहोअदीर्घ-सूत्रः शक्य-सामन्तो दृढ-बुद्धिरक्षुद्र-परिषत्को विनय-काम इत्याभिगामिका गुणाः ।। ०६.१.०३ ।।

शुश्रूषा-श्रवण-ग्रहण-धारण-विज्ञान-ऊह-अपोह-तत्त्व-अभिनिवेशाः प्रज्ञा-गुणाः ।। ०६.१.०४ ।।

शौर्यं अमर्षः शीघ्रता दाक्ष्यं चौत्साह-गुणाः ।। ०६.१.०५ ।।

वाग्मी प्रगल्भः स्मृति-मति-बलवानुदग्रः स्व्-अवग्रहः कृत-शिल्पोअव्यसनो दण्ड-नाय्युपकार-अपकारयोर्दृष्ट-प्रतीकारी ह्रीमानापत्-प्रकृत्योर्विनियोक्ता दीर्घ-दूर-दर्शी देश-काल-पुरुष-कार-कार्य-प्रधानः संधि-विक्रम-त्याग-सम्यम-पण-परच्-छिद्र-विभागी संवृतोअदीन-अभिहास्य-जिह्म-भ्रुकुटी-क्षणः काम-क्रोध-लोभ-स्तम्भ-चापल-उपताप-पैशुन्य-हीनः शक्लः स्मित-उदग्र-अभिभाषी वृद्ध-उपदेश-आचार इत्यात्म-सम्पत् ।। ०६.१.०६ ।।

अमात्य-सम्पदुक्ता पुरस्तात् ।। ०६.१.०७ ।।

मध्ये चान्ते च स्थानवानात्म-धारणः पर-धारणश्चऽपदि स्व-आरक्षः स्व-आजीवः शत्रु-द्वेषी शक्य-सामन्तः पङ्क-पाषाण-उषर-विषम-कण्टक-श्रेणी-व्याल-मृग-अटवी-हीनः कान्तः सीता-खनि-द्रव्य-हस्ति-वनवान्गव्यः पौरुषेयो गुप्त-गोचरः पशुमानदेव-मातृको वारि-स्थल-पथाभ्यां उपेतः सार-चित्र-बहु-पण्यो दण्ड-कर-सहः कर्म-शील-कर्षकोअबालिश-स्वाम्य्-अवर-वर्ण-प्रायो भक्त-शुचि-मनुष्य इति जन-पद-सम्पत् ।। ०६.१.०८ ।।

दुर्ग-सम्पदुक्ता पुरस्तात् ।। ०६.१.०९ ।।

धर्म-अधिगतः पूर्वैः स्वयं वा हेम-रूप्य-प्रायश्चित्र-स्थूल-रत्न-हिरण्यो दीर्घां अप्यापदं अनायतिं सहेतैति कोश-सम्पत् ।। ०६.१.१० ।।

पितृ-पैतामहो नित्यो वश्यस्तुष्ट-भृत-पुत्र-दारः प्रवासेष्वविसंवादितः सर्वत्राप्रतिहतो दुःख-सहो बहु-युद्धः सर्व-युद्ध-प्रहरण-विद्या-विशारदः सह-वृद्धि-क्षयिकत्वादद्वैध्यः क्षत्र-प्राय इति दण्ड-सम्पत् ।। ०६.१.११ ।।

पितृ-पैतामहं नित्यं वश्यं अद्वैध्यं महल्-लघु-समुत्थं इति मित्र-सम्पत् ।। ०६.१.१२ ।।

अराज-बीजी लुब्धः क्षुद्र-परिषत्को विरक्त-प्रकृतिरन्याय-वृत्तिरयुक्तो व्यसनी निरुत्साहो दैव-प्रमाणो यत्-किंचन-कार्य-गतिरननुबन्धः क्लीबो नित्य-अपकारी चैत्यमित्र-सम्पत् ।। ०६.१.१३ ।।

एवं-भूतो हि शत्रुः सुखः समुच्छेत्तुं भवति ।। ०६.१.१४ ।।

अरि-वर्जाः प्रकृतयः सप्तएताः स्व-गुण-उदयाः । ।। ०६.१.१५अ ब ।।

उक्ताः प्रत्यङ्ग-भूतास्ताः प्रकृता राज-सम्पदः ।। ०६.१.१५च्द् ।।

सम्पादयत्यसम्पन्नाः प्रकृतीरात्मवान्नृपः । ।। ०६.१.१६अ ब ।।

विवृद्धाश्चानुरक्ताश्च प्रकृतीर्हन्त्यनात्मवान् ।। ०६.१.१६च्द् ।।

ततः स दुष्ट-प्रकृतिश्चातुरन्तोअप्यनात्मवान् । ।। ०६.१.१७अ ब ।।

हन्यते वा प्रकृतिभिर्याति वा द्विषतां वशं ।। ०६.१.१७च्द् ।।

आत्मवांस्त्वल्प-देशोअपि युक्तः प्रकृति-सम्पदा । ।। ०६.१.१८अ ब ।।

नयज्ञः पृथिवीं कृत्स्नां जयत्येव न हीयते ।। ०६.१.१८च्द् ।।

शम-व्यायामौ योग-क्षेमयोर्योनिः ।। ०६.२.०१ ।।

कर्म-आरम्भाणां योग-आराधनो व्यायामः ।। ०६.२.०२ ।।

कर्म-फल-उपभोगानां क्षेम-आराधनः शमः ।। ०६.२.०३ ।।

शम-व्यायामयोर्योनिः षाड्गुण्यं ।। ०६.२.०४ ।।

क्षयः स्थानं वृद्धिरित्युदयास्तस्य ।। ०६.२.०५ ।।

मानुषं नय-अपनयौ । दैवं अय-अनयौ ।। ०६.२.०६ ।।

दैव-मानुषं हि कर्म लोकं यापयति ।। ०६.२.०७ ।।

अदृष्ट-कारितं दैवं ।। ०६.२.०८ ।।

तस्मिन्निष्टेन फलेन योगोअयः । अनिष्टेनानयः ।। ०६.२.०९ ।।

दृष्ट-कारितं मानुषं ।। ०६.२.१० ।।

तस्मिन्योग-क्षेम-निष्पत्तिर्नयः । विपत्तिरपनयः ।। ०६.२.११ ।।

तच्चिन्त्यम् । अचिन्त्यं दैवं ।। ०६.२.१२ ।।

राजा आत्म-द्रव्य-प्रकृति-सम्पन्नो नयस्याधिष्ठानं विजिगीषुः ।। ०६.२.१३ ।।

तस्य समन्ततो मण्डली-भूता भूम्य्-अनन्तरा अरि-प्रकृतिः ।। ०६.२.१४ ।।

तथाएव भूम्य्-एक-अन्तरा मित्र-प्रकृतिः ।। ०६.२.१५ ।।

अरि-सम्पद्-युक्तः सामन्तः शत्रुः । व्यसनी यातव्यः । अनपाश्रयो दुर्बल-आश्रयो वाउच्छेदनीयः । विपर्यये पीडनीयः कर्शनीयो वा ।। ०६.२.१६ ।।

इत्यरि-विशेषाः ।। ०६.२.१७ ।।

तस्मान्मित्रं अरि-मित्रं मित्र-मित्रं अरि-मित्र-मित्रं चऽनन्तर्येण भूमीनां प्रसज्यन्ते पुरस्तात् । पश्चात्पार्ष्णि-ग्राह आक्रन्दः पार्ष्णि-ग्राह-आसार आक्रन्द-आसारः ।। ०६.२.१८ ।।

भूम्य्-अनन्तरः प्रकृति-मित्रः । तुल्य-अभिजनः सहजः । विरुद्धो विरोधयिता वा कृत्रिमः ।। ०६.२.१९ ।।

भूम्य्-एक-अन्तरं प्रकृति-मित्रम् । माता-पितृ-सम्बद्धं सहजम् । धन-जीवित-हेतोराश्रितं कृत्रिमं ।। ०६.२.२० ।।

अरि-विजिगीष्वोर्भूम्य्-अनन्तरः संहत-असंहतयोरनुग्रह-समर्थो निग्रहे चासंहतयोर्मध्यमः ।। ०६.२.२१ ।।

अरि-विजिगीषु-मध्यानां बहिः प्रकृतिभ्यो बलवत्तरः संहत-असंहतानां अरि-विजिगीषु-मध्यमानां अनुग्रह-समर्थो निग्रहे चासंहतानां उदासीनः ।। ०६.२.२२ ।।

इति प्रकृतयः ।। ०६.२.२३ ।।

विजिगीषुर्मित्रं मित्र-मित्रं वाअस्य प्रकृतयस्तिस्रः ।। ०६.२.२४ ।।

ताः पञ्चभिरमात्य-जन-पद-दुर्ग-कोश-दण्ड-प्रकृतिभिरेक-एकशः सम्युक्ता मण्डलं अष्टादशकं भवति ।। ०६.२.२५ ।।

अनेन मण्डल-पृथक्त्वं व्याख्यातं अरि-मध्यम-उदासीनानां ।। ०६.२.२६ ।।

एवं चतुर्-मण्डल-संक्षेपः ।। ०६.२.२७ ।।

द्वादश राज-प्रकृतयः षष्टिर्द्रव्य-प्रकृतयः । संक्षेपेण द्वि-सप्ततिः ।। ०६.२.२८ ।।

तासां यथा-स्वं सम्पदः ।। ०६.२.२९ ।।

शक्तिः सिद्धिश्च ।। ०६.२.३० ।।

बलं शक्तिः ।। ०६.२.३१ ।।

सुखं सिद्धिः ।। ०६.२.३२ ।।

शक्तिस्त्रिविधा ज्ञान-बलं मन्त्र-शक्तिः । कोश-दण्ड-बलं प्रभु-शक्तिः । विक्रम-बलं उत्साह-शक्तिः ।। ०६.२.३३ ।।

एवं सिद्धिस्त्रिविधाएव मन्त्र-शक्ति-साध्या मन्त्र-सिद्धिः । प्रभु-शक्ति-साध्या प्रभु-सिद्धिः । उत्साह-शक्ति-साध्या उत्साह-सिद्धिः ।। ०६.२.३४ ।।

ताभिरभ्युच्चितो ज्यायान्भवति । अपचितो हीनः । तुल्य-शक्तिः समः ।। ०६.२.३५ ।।

तस्मात्शक्तिं सिद्धिं च घटेतऽत्मन्यावेशयितुम् । साधारणो वा द्रव्य-प्रकृतिष्वानन्तर्येण शौच-वशेन वा ।। ०६.२.३६ ।।

दूष्य-अमित्राभ्यां वाअपक्रष्टुं यतेत ।। ०६.२.३७ ।।

यदि वा पश्येत्"अमित्रो मे शक्ति-युक्तो वाग्-दण्ड-पारुष्य-अर्थ-दूषणैः प्रकृतीरुपहनिष्यति । सिद्धि-युक्तो वा मृगया-द्यूत-मद्य-स्त्रीभिः प्रमादं गमिष्यति । स विरक्त-प्रकृतिरुपक्षीणः प्रमत्तो वा साध्यो मे भविष्यति । विग्रह-अभियुक्तो वा सर्व-संदोहेनएकस्थोअदुर्गस्थो वा स्थास्यति । स संहत-सैन्यो मित्र-दुर्ग-वियुक्तः साध्यो मे भविष्यति । बलवान्वा राजा परतः शत्रुं उच्छेत्तु-कामः तं उच्छिद्य मां उच्छिन्द्याद् इति बलवता प्रार्थितस्य मे विपन्न-कर्म-आरम्भस्य वा साहाय्यं दास्यति" । मध्यम-लिप्सायां च । इत्येवं-आदिषु कारणेष्वमित्रस्यापि शक्तिं सिद्धिं चैच्छेत् ।। ०६.२.३८ ।।

नेमिं एक-अन्तरान्राज्ञः कृत्वा चानन्तरानरान् । ।। ०६.२.३९अ ब ।।

नाभिं आत्मानं आयच्छेन्नेता प्रकृति-मण्डले ।। ०६.२.३९च्द् ।।

मध्ये ह्युपहितः शत्रुर्नेतुर्मित्रस्य चौभयोः । ।। ०६.२.४०अ ब ।।

उच्छेद्यः पीडनीयो वा बलवानपि जायते ।। ०६.२.४०च्द् ।।

षाड्गुण्यस्य प्रकृति-मण्डलं योनिः ।। ०७.१.०१ ।।

"संधि-विग्रह-आसन-यान-संश्रय-द्वैधी-भावाः षाड्गुण्यम्" इत्याचार्याः ।। ०७.१.०२ ।।

"द्वैगुण्यम्" इति वात-व्याधिः ।। ०७.१.०३ ।।

"संधि-विग्रहाभ्यां हि षाड्गुण्यं सम्पद्यते" इति ।। ०७.१.०४ ।।

षाड्गुण्यं एवएतदवस्था-भेदादिति कौटिल्यः ।। ०७.१.०५ ।।

तत्र पण-बन्धः संधिः ।। ०७.१.०६ ।।

अपकारो विग्रहः ।। ०७.१.०७ ।।

उपेक्षणं आसनं ।। ०७.१.०८ ।।

अभ्युच्चयो यानं ।। ०७.१.०९ ।।

पर-अर्पणं संश्रयः ।। ०७.१.१० ।।

संधि-विग्रह-उपादानं द्वैधी-भावः ।। ०७.१.११ ।।

इति षड्-गुणाः ।। ०७.१.१२ ।।

परस्माद्धीयमानः संदधीत ।। ०७.१.१३ ।।

अभ्युच्चीयमानो विगृह्णीयात् ।। ०७.१.१४ ।।

"न मां परो नाहं परं उपहन्तुं शक्तः" इत्यासीत ।। ०७.१.१५ ।।

गुण-अतिशय-युक्तो यायात् ।। ०७.१.१६ ।।

शक्ति-हीनः संश्रयेत ।। ०७.१.१७ ।।

सहाय-साध्ये कार्ये द्वैधीभावं गच्छेत् ।। ०७.१.१८ ।।

इति गुण-अवस्थापनं ।। ०७.१.१९ ।।

तेषां यस्मिन्वा गुणे स्थितः पश्येत्"इह-स्थः शक्ष्यामि दुर्ग-सेतु-कर्म-वणिक्-पथ-शून्य-निवेश-खनि-द्रव्य-हस्ति-वन-कर्माण्यात्मनः प्रवर्तयितुम् । परस्य चएतानि कर्माण्युपहन्तुम्" इति तं आतिष्ठेत् ।। ०७.१.२० ।।

सा वृद्धिः ।। ०७.१.२१ ।।

"आशुतरा मे वृद्धिर्भूयस्तरा वृद्ध्य्-उदयतरा वा भविष्यति । विपरीता परस्य" इति ज्ञात्वा पर-वृद्धिं उपेक्षेत ।। ०७.१.२२ ।।

तुल्य-काल-फल-उदयायां वा वृद्धौ संधिं उपेयात् ।। ०७.१.२३ ।।

यस्मिन्वा गुणे स्थितः स्व-कर्मणां उपघातं पश्येन्नैतरस्य तस्मिन्न तिष्ठेत् ।। ०७.१.२४ ।।

एष क्षयः ।। ०७.१.२५ ।।

"चिरतरेणाल्पतरं वृद्ध्य्-उदयतरं वा क्षेष्ये । विपरीतं परः" इति ज्ञात्वा क्षयं उपेक्षेत ।। ०७.१.२६ ।।

तुल्य-काल-फल-उदये वा क्षये संधिं उपेयात् ।। ०७.१.२७ ।।

यस्मिन्वा गुणे स्थितः स्व-कर्म-वृद्धिं क्षयं वा नाभिपश्येदेतत्-स्थानं ।। ०७.१.२८ ।।

"ह्रस्वतरं वृद्ध्य्-उदयतरं वा स्थास्यामि । विपरीतं परः" इति ज्ञात्वा स्थानं उपेक्षेत ।। ०७.१.२९ ।।

"तुल्य-काल-फल-उदये वा स्थाने संधिं उपेयाद्" इत्याचार्याः ।। ०७.१.३० ।।

नएतद्विभाषितं इति कौटिल्यः ।। ०७.१.३१ ।।

यदि वा पश्येत्"सन्धौ स्थितो महा-फलैः स्व-कर्मभिः पर-कर्माण्युपहनिष्यामि । महा-फलानि वा स्व-कर्माण्युपभोक्ष्ये । पर-कर्माणि वा । संधि-विश्वासेन वा योग-उपनिषत्-प्रणिधिभिः पर-कर्माण्युपहनिष्यामि । सुखं वा स-अनुग्रह-परिहार-सौकर्यं फल-लाभ-भूयस्त्वेन स्व-कर्मणां पर-कर्म-योग-आवहं जनं आस्रावयिष्यामि ।। ०७.१.३२अ ।।

बलिनाअतिमात्रेण वा संहितः परः स्व-कर्म-उपघातं प्राप्स्यति । येन वा विगृहीतो मया-संधत्ते तेनास्य विग्रहं दीर्घं करिष्यामि । मया वा संहितस्य मद्-द्वेषिणो जन-पदं पीडयिष्यति ।। ०७.१.३२ब ।।

पर-उपहतो वाअस्य जन-पदो मां आगमिष्यति । ततः कर्मसु वृद्धिं प्राप्स्यामि । विपन्न-कर्म-आरम्भो वा विषमस्थः परः कर्मसु न मे विक्रमेत ।। ०७.१.३२क ।।

परतः प्रवृत्त-कर्म-आरम्भो वा ताभ्यां संहितः कर्मसु वृद्धिं प्राप्स्यामि । शत्रु-प्रतिबद्धं वा शत्रुणा संधिं कृत्वा मण्डलं भेत्स्यामि ।। ०७.१.३२ड ।।

भिन्नं अवाप्स्यामि । दण्ड-अनुग्रहेण वा शत्रुं उपगृह्य मण्डल-लिप्सायां विद्वेषं ग्राहयिष्यामि । विद्विष्टं तेनएव घातयिष्यामि" इति संधिना वृद्धिं आतिष्ठेत् ।। ०७.१.३२ए ।।

यदि वा पश्येत्"आयुधीय-प्रायः श्रेणी-प्रायो वा मे जन-पदः शैल-वन-नदी-दुर्ग-एक-द्वार-आरक्षो वा शक्ष्यति पर-अभियोगं प्रतिहन्तुम् । विषय-अन्ते दुर्गं अविषह्यं अपाश्रितो वा शक्ष्यामि पर-कर्माण्युपहन्तुं ।। ०७.१.३३अ ।।

व्यसन-पीड-उपहत-उत्साहो वा परः सम्प्राप्त-कर्म-उपघात-कालः । विगृहीतस्यान्यतो वा शक्ष्यामि जन-पदं अपवाहयितुम्" इति विग्रहे स्थितो वृद्धिं आतिष्ठेत् ।। ०७.१.३३ब ।।

यदि वा मन्येत "न मे शक्तः परः कर्माण्युपहन्तुं नाहं तस्य कर्म-उपघाती वा । व्यसनं अस्य । श्व-वराहयोरिव कलहे वा । स्व-कर्म-अनुष्ठान-परो वा वर्धिष्ये" इत्यासनेन वृद्धिं आतिष्ठेत् ।। ०७.१.३४ ।।

यदि वा मन्येत "यान-साध्यः कर्म-उपघातः शत्रोः । प्रतिविहित-स्व-कर्म-आरक्षश्चास्मि" इति यानेन वृद्धिं आतिष्ठेत् ।। ०७.१.३५ ।।

यदि वा मन्येत "नास्मि शक्तः पर-कर्माण्युपहन्तुम् । स्व-कर्म-उपघातं वा त्रातुम्" इति । बलवन्तं आश्रितः स्व-कर्म-अनुष्ठानेन क्षयात्स्थानं स्थानाद्वृद्धिं चऽकाङ्क्षेत ।। ०७.१.३६ ।।

यदि वा मन्येत "संधिनाएकतः स्व-कर्माणि प्रवर्तयिष्यामि । विग्रहेणएकतः पर-कर्माण्युपहनिष्यामि" इति द्वैधी-भावेन वृद्धिं आतिष्ठेत् ।। ०७.१.३७ ।।

एवं षड्भिर्गुणैरेतैः स्थितः प्रकृति-मण्डले । ।। ०७.१.३८अ ब ।।

पर्येषेत क्षयात्स्थानं स्थानाद्वृद्धिं च कर्मसु ।। ०७.१.३८च्द् ।।

संधि-विग्रहयोस्तुल्यायां वृद्धौ संधिं उपेयात् ।। ०७.२.०१ ।।

विग्रहे हि क्षय-व्यय-प्रवास-प्रत्यवाया भवन्ति ।। ०७.२.०२ ।।

तेनऽसन-यानयोरासनं व्याख्यातं ।। ०७.२.०३ ।।

द्वैधी-भाव-संश्रययोर्द्वैधी-भावं गच्छेत् ।। ०७.२.०४ ।।

द्वैधी-भूतो हि स्व-कर्म-प्रधान आत्मन एवौपकरोति । संश्रितस्तु परस्यौपकरोति । नऽत्मनः ।। ०७.२.०५ ।।

यद्-बलः सामन्तस्तद्-विशिष्ट-बलं आश्रयेत् ।। ०७.२.०६ ।।

तद्-विशिष्ट-बल-अभावे तं एवऽश्रितः कोश-दण्ड-भूमीनां अन्यतमेनास्यौपकर्तुं अदृष्टः प्रयतेत ।। ०७.२.०७ ।।

महा-दोषो हि विशिष्ट-बल-समागमो राज्ञाम् । अन्यत्रारि-विगृहीतात् ।। ०७.२.०८ ।।

अशक्ये दण्ड-उपनतवद्वर्तेत ।। ०७.२.०९ ।।

यदा चास्य प्राण-हरं व्याधिं अन्तः-कोपं शत्रु-वृद्धिं मित्र-व्यसनं उपस्थितं वा तन्-निमित्तां आत्मनश्च वृद्धिं पश्येत्तदा सम्भाव्य-व्याधि-धर्म-कार्य-अपदेशेनापयायात् ।। ०७.२.१० ।।

स्व-विषयस्थो वा नौपगच्छेत् ।। ०७.२.११ ।।

आसन्नो वाअस्य च्छिद्रेषु प्रहरेत् ।। ०७.२.१२ ।।

बलीयसोर्वा मध्य-गतस्त्राण-समर्थं आश्रयेत । यस्य वाअन्तर्धिः स्यात् । उभौ वा ।। ०७.२.१३ ।।

कपाल-संश्रयस्तिष्ठेत् । मूल-हरं इतरस्यैतरं अपदिशन् ।। ०७.२.१४ ।।

भेदं उभयोर्वा परस्पर-अपदेशं प्रयुञ्जीत । भिन्नयोरुपांशु-दण्डं ।। ०७.२.१५ ।।

पार्श्वस्थो वा बलस्थयोरासन्न-भयात्प्रतिकुर्वीत ।। ०७.२.१६ ।।

दुर्ग-अपाश्रयो वा द्वैधी-भूतस्तिष्ठेत् ।। ०७.२.१७ ।।

संधि-विग्रह-क्रम-हेतुभिर्वा चेष्टेत ।। ०७.२.१८ ।।

दूष्य-अमित्र-आटविकानुभयोरुपगृह्णीयात् ।। ०७.२.१९ ।।

एतयोरन्यतरं गच्छंस्तैरेवान्यतरस्य व्यसने प्रहरेत् ।। ०७.२.२० ।।

द्वाभ्यां उपहतो वा मण्डल-अपाश्रयस्तिष्ठेत् । मध्यमं उदासीनं वा संश्रयेत ।। ०७.२.२१ ।।

तेन सहएकं उपगृह्यैतरं उच्छिन्द्याद् । उभौ वा ।। ०७.२.२२ ।।

द्वाभ्यां उच्छिन्नो वा मध्यम-उदासीनयोस्तत्-पक्षीयाणां वा राज्ञां न्याय-वृत्तिं आश्रयेत ।। ०७.२.२३ ।।

तुल्यानां वा यस्य प्रकृतयः सुख्येयुरेनम् । यत्रस्थो वा शक्नुयादात्मानं उद्धर्तुम् । यत्र वा पूर्व-पुरुष-उचिता गतिरासन्नः सम्बन्धो वा । मित्राणि भूयांस्यतिशक्तिमन्ति वा भवेयुः ।। ०७.२.२४ ।।

प्रियो यस्य भवेद्यो वा प्रियोअस्य कतरस्तयोः । ।। ०७.२.२५अ ब ।।

प्रियो यस्य स तं गच्छेदित्याश्रय-गतिः परा ।। ०७.२.२५च्द् ।।

विजिगीषुः शक्त्य्-अपेक्षः षाड्गुण्यं उपयुञ्जीत ।। ०७.३.०१ ।।

सम-ज्यायोभ्यां संधीयेत । हीनेन विगृह्णीयात् ।। ०७.३.०२ ।।

विगृहीतो हि ज्यायसा हस्तिना पाद-युद्धं इवाभ्युपैति ।। ०७.३.०३ ।।

समेन चऽमं पात्रं आमेनाहतं इवौभयतः क्षयं करोति ।। ०७.३.०४ ।।

कुम्भेनैवाश्मा हीनेनएक-अन्त-सिद्धिं अवाप्नोति ।। ०७.३.०५ ।।

ज्यायांश्चेन्न संधिं इच्छेद्दण्ड-उपनत-वृत्तं आबलीयसं वा योगं आतिष्ठेत् ।। ०७.३.०६ ।।

समश्चेन्न संधिं इच्छेद्यावन्-मात्रं अपकुर्यात्तावन्-मात्रं अस्य प्रत्यपकुर्यात् ।। ०७.३.०७ ।।

तेजो हि संधान-कारणं ।। ०७.३.०८ ।।

नातप्तं लोहं लोहेन संधत्त इति ।। ०७.३.०९ ।।

हीनश्चेत्सर्वत्रानुप्रणतस्तिष्ठेत्संधिं उपेयात् ।। ०७.३.१० ।।

आरण्योअग्निरिव हि दुःख-अमर्षजं तेजो विक्रमयति ।। ०७.३.११ ।।

मण्डलस्य चानुग्राह्यो भवति ।। ०७.३.१२ ।।

संहितश्चेत्"पर-प्रकृतयो लुब्ध-क्षीण-अपचरिताः प्रत्यादान-भयाद्वा नौपगच्छन्ति" इति पश्येद्धीनोअपि विगृह्णीयात् ।। ०७.३.१३ ।।

विगृहीतश्चेत्"पर-प्रकृतयो लुब्ध-क्षीण-अपचरिता विग्रह-उद्विग्ना वा मां नौपगच्छन्ति" इति पश्येज्ज्यायानपि संधीयेत । विग्रह-उद्वेगं वा शमयेत् ।। ०७.३.१४ ।।

व्यसन-यौगपद्येअपि "गुरु-व्यसनोअस्मि । लघु-व्यसनः परः सुखेन प्रतिकृत्य व्यसनं आत्मनोअभियुञ्ज्याद्" इति पश्येज्ज्यायानपि संधीयेत ।। ०७.३.१५ ।।

संधि-विग्रहयोश्चेत्पर-कर्शनं आत्म-उपचयं वा नाभिपश्येज्ज्यायानप्यासीत ।। ०७.३.१६ ।।

पर-व्यसनं अप्रतिकार्यं चेत्पश्येद्धीनोअप्यभियायात् ।। ०७.३.१७ ।।

अप्रतिकार्य-आसन्न-व्यसनो वा ज्यायानपि संश्रयेत ।। ०७.३.१८ ।।

संधिनाएकतो विग्रहेणएकतश्चेत्कार्य-सिद्धिं पश्येज्ज्यायानपि द्वैधी-भूतस्तिष्ठेत् ।। ०७.३.१९ ।।

एवं समस्य षाड्गुण्य-उपयोगः ।। ०७.३.२० ।।

तत्र तु प्रतिविशेषः ।। ०७.३.२१ ।।

प्रवृत्त-चक्रेणऽक्रान्तो राज्ञा बलवताअबलः । ।। ०७.३.२२अ ब ।।

संधिनाउपनमेत्तूर्णं कोश-दण्ड-आत्म-भूमिभिः ।। ०७.३.२२च्द् ।।

स्वयं संख्यात-दण्डेन दण्डस्य विभवेन वा । ।। ०७.३.२३अ ब ।।

उपस्थातव्यं इत्येष संधिरात्म-आमिषो मतः ।। ०७.३.२३च्द् ।।

सेना-पति-कुमाराभ्यां उपस्थातव्यं इत्ययं । ।। ०७.३.२४अ ब ।।

पुरुष-अन्तर-संधिः स्यान्नऽत्मनाइत्यात्म-रक्षणः ।। ०७.३.२४च्द् ।।

एकेनान्यत्र यातव्यं स्वयं दण्डेन वाइत्ययं । ।। ०७.३.२५अ ब ।।

अदृष्ट-पुरुषः संधिर्दण्ड-मुख्य-आत्म-रक्षणः ।। ०७.३.२५च्द् ।।

मुख्य-स्त्री-बन्धनं कुर्यात्पूर्वयोः पश्चिमे त्वरिं । ।। ०७.३.२६अ ब ।।

साधयेद्गूढं इत्येते दण्ड-उपनत-संधयः ।। ०७.३.२६च्द् ।।

कोश-दानेन शेषाणां प्रकृतीनां विमोक्षणं । ।। ०७.३.२७अ ब ।।

परिक्रयो भवेत्संधिः स एव च यथा-सुखं ।। ०७.३.२७च्द् ।।

स्कन्ध-उपनेयो बहुधा ज्ञेयः संधिरुपग्रहः । ।। ०७.३.२८अ ब ।।

निरुद्धो देश-कालाभ्यां अत्ययः स्यादुपग्रहः ।। ०७.३.२८च्द् ।।

विषह्य-दानादायत्यां क्षमः स्त्री-बन्धनादपि । ।। ०७.३.२९अ ब ।।

सुवर्ण-संधिर्विश्वासादेकी-भाव-गतो भवेत् ।। ०७.३.२९च्द् ।।

विपरीतः कपालः स्यादत्यादान-अभिभाषितः । ।। ०७.३.३०अ ब ।।

पूर्वयोः प्रणयेत्कुप्यं हस्त्य्-अश्वं वा गर-अन्वितं ।। ०७.३.३०च्द् ।।

तृतीये प्रणयेदर्थं कथयन्कर्मणां क्षयं । ।। ०७.३.३१अ ब ।।

तिष्ठेच्चतुर्थ इत्येते कोश-उपनत-संधयः ।। ०७.३.३१च्द् ।।

भूम्य्-एक-देश-त्यागेन शेष-प्रकृति-रक्षणं । ।। ०७.३.३२अ ब ।।

आदिष्ट-संधिस्तत्रैष्टो गूढ-स्तेन-उपघातिनः ।। ०७.३.३२च्द् ।।

भूमीनां आत्त-साराणां मूल-वर्जं प्रणामनं । ।। ०७.३.३३अ ब ।।

उच्छिन्न-संधिस्तत्रैष्टः पर-व्यसन-काङ्क्षिणः ।। ०७.३.३३च्द् ।।

फल-दानेन भूमीनां मोक्षणं स्यादवक्रयः । ।। ०७.३.३४अ ब ।।

फल-अतिमुक्तो भूमिभ्यः संधिः स परिदूषणः ।। ०७.३.३४च्द् ।।

कुर्यादवेक्षणं पूर्वौ पश्चिमौ त्वाबलीयसं । ।। ०७.३.३५अ ब ।।

आदाय फलं इत्येते देश-उपनत-संधयः ।। ०७.३.३५च्द् ।।

स्व-कार्याणां वशेनएते देशे काले च भाषिताः । ।। ०७.३.३६अ ब ।।

आबलीयसिकाः कार्यास्त्रिविधा हीन-संधयः ।। ०७.३.३६च्द् ।।

संधि-विग्रहयोरासनं यानं च व्याख्यातं ।। ०७.४.०१ ।।

स्थानं आसनं उपेक्षणं चैत्यासन-पर्यायाः ।। ०७.४.०२ ।।

विशेषस्तु गुण-एकदेशे स्थानम् । स्व-वृद्धि-प्राप्त्य्-अर्थं आसनम् । उपायानां अप्रयोग उपेक्षणं ।। ०७.४.०३ ।।

अतिसंधान-कामयोररि-विजिगीष्वोरुपहन्तुं अशक्तयोर्विगृह्यऽसनं संधाय वा ।। ०७.४.०४ ।।

यदा वा पश्येत्"स्व-दण्डैर्मित्र-अटवी-दण्डैर्वा समं ज्यायांसं वा कर्शयितुं उत्सहे" इति तदा कृत-बाह्य-अभ्यन्तर-कृत्यो विगृह्यऽसीत ।। ०७.४.०५ ।।

यदा वा पश्येत्"उत्साह-युक्ता मे प्रकृतयः संहता विवृद्धाः स्व-कर्माण्यव्याहताश्चरिष्यन्ति परस्य वा कर्माण्युपहनिष्यन्ति" इति तदा विगृह्यऽसीत ।। ०७.४.०६ ।।

यदा वा पश्येत्"परस्यापचरिताः क्षीणा लुब्धाः स्व-चक्र-स्तेन-अटवी-व्यथिता वा प्रकृतयः स्वयं उपजापेन वा मां एष्यन्ति । सम्पन्ना मे वार्त्ता । विपन्ना परस्य । तस्य प्रकृतयो दुर्भिक्ष-उपहता मां एष्यन्ति; विपन्ना मे वार्त्ता । सम्पन्ना परस्य । ।। ०७.४.०७अ ।।

तं मे प्रकृतयो न गमिष्यन्ति । विगृह्य चास्य धान्य-पशु-हिरण्यान्याहरिष्यामि । स्व-पण्य-उपघातीनि वा पर-पण्यानि निवर्तयिष्यामि । ।। ०७.४.०७ब ।।

पर-वणिक्-पथाद्वा सरवन्ति मां एष्यन्ति विगृहीते । नैतरम् । दूष्य-अमित्र-अटवी-निग्रहं वा विगृहीतो न करिष्यति । तैरेव वा विग्रहं प्राप्स्यति । ।। ०७.४.०७क ।।

मित्रं मे मित्र-भाव्यभिप्रयातो बह्व्-अल्प-कालं तनु-क्षय-व्ययं अर्थं प्राप्स्यति । गुणवतीं आदेयां वा भूमिम् । ।। ०७.४.०७ड ।।

सर्व-संदोहेन वा मां अनादृत्य प्रयातु-कामः कथं न यायाद्" इति पर-वृद्धि-प्रतिघात-अर्थं प्रताप-अर्थं च विगृह्यऽसीत ।। ०७.४.०७ए ।।

"तं एव हि प्रत्यावृत्तो ग्रसते" इत्याचार्याः ।। ०७.४.०८ ।।

नैति कौटिल्यः ।। ०७.४.०९ ।।

कर्शन-मात्रं अस्य कुर्यादव्यसनिनः । पर-वृद्ध्या तु वृद्धः समुच्छेदनं ।। ०७.४.१० ।।

एवं परस्य यातव्योअस्मै साहाय्यं अविनष्टः प्रयच्छेत् ।। ०७.४.११ ।।

तस्मात्सर्व-संदोह-प्रकृतं विगृह्यऽसीत ।। ०७.४.१२ ।।

विगृह्य-आसन-हेतु-प्रातिलोम्ये संधायऽसीत ।। ०७.४.१३ ।।

विगृह्य-आसन-हेतुभिरभ्युच्चितः सर्व-संदोह-वर्जं विगृह्य यायात् ।। ०७.४.१४ ।।

यदा वा पश्येत्"व्यसनी परः । प्रकृति-व्यसनं वाअस्य शीष-प्रकृतिभिरप्रतिकार्यम् । स्व-चक्र-पीडिता विरक्ता वाअस्य प्रकृतयः कर्शिता निरुत्साहाः परस्परादृवा भिन्नाः शक्या लोभयितुम् । अग्न्य्-उदक-व्याधि-मरक-दुर्भिक्ष-निमित्तं क्षीण-युग्य-पुरुष-निचय-रक्षा-विधानः परः" इति तदा विगृह्य यायात् ।। ०७.४.१५ ।।

यदा वा पश्येत्"मित्रं आक्रन्दश्च मे शूर-वृद्ध-अनुरक्त-प्रकृतिः । विपरीत-प्रकृतिः परः पार्ष्णि-ग्राहश्चऽसारश्च । शक्ष्यामि मित्रेणऽसारं आक्रन्देन पार्ष्णि-ग्राहं वा विगृह्य यातुम्" इति तदा विगृह्य यायात् ।। ०७.४.१६ ।।

यदा वा फलं एक-हार्यं अल्प-कालं पश्येत्तदा पार्ष्णि-ग्राह-आसाराभ्यां विगृह्य यायात् ।। ०७.४.१७ ।।

विपर्यये संधाय यायात् ।। ०७.४.१८ ।।

यदा वा पश्येत्"न शक्यं एकेन यातुं अवश्यं च यातव्यम्" इति तदा सम-हीन-ज्यायोभिः सामवायिकैः सम्भूय यायाद् । एकत्र निर्दिष्टेनांशेन । अनेकत्रानिर्दिष्टेनांशेन ।। ०७.४.१९ ।।

तेषां असमवाये दण्डं अन्यतमस्मान्निविष्ट-अंशेन याचेत ।। ०७.४.२० ।।

सम्भूय-अभिगमनेन वा निर्विश्येत । ध्रुवे लाभे निर्दिष्टेनांशेन । अध्रुवे लाभ-अंशेन ।। ०७.४.२१ ।।

अंशो दण्ड-समः पूर्वः प्रयास-सम उत्तमः । ।। ०७.४.२२अ ब ।।

विलोपो वा यथा-लाभं प्रक्षेप-सम एव वा ।। ०७.४.२२च्द् ।।

तुल्य-सामन्त-व्यसने यातव्यं अमित्रं वाइत्यमित्रं अभियायात् । तत्-सिद्धौ यातव्यं ।। ०७.५.०१ ।।

अमित्र-सिद्धौ हि यातव्यः साहाय्यं दद्यान्नामित्रो यातव्य-सिद्धौ ।। ०७.५.०२ ।।

गुरु-व्यसनं यातव्यं लघु-व्यसनं अमित्रं वाइति "गुरु-व्यसनं सौकर्यतो यायाद्" इत्याचार्याः ।। ०७.५.०३ ।।

नैति कौटिल्यः ।। ०७.५.०४ ।।

लघु-व्यसनं अमित्रं यायात् ।। ०७.५.०५ ।।

लघ्वपि हि व्यसनं अभियुक्तस्य कृच्छ्रं भवति ।। ०७.५.०६ ।।

सत्यं गुर्वपि गुरुतरं भवति ।। ०७.५.०७ ।।

अनभियुक्तस्तु लघु-व्यसनः सुखेन व्यसनं प्रतिकृत्यामित्रो यातव्यं अभिसरेत् । पार्ष्णिं वा गृह्णीयात् ।। ०७.५.०८ ।।

यातव्य-यौगपद्ये गुरु-व्यसनं न्याय-वृत्तिं लघु-व्यसनं अन्याय-वृत्तिं विरक्त-प्रकृतिं वाइति विरक्त-प्रकृतिं यायात् ।। ०७.५.०९ ।।

गुरु-व्यसनं न्याय-वृत्तिं अभियुक्तं प्रकृतयोअनुगृह्णन्ति । लघु-व्यसनं अन्याय-वृत्तिं उपेक्षन्ते । विरक्ता बलवन्तं अप्युच्छिन्दन्ति ।। ०७.५.१० ।।

तस्माद्विरक्त-प्रकृतिं एव यायात् ।। ०७.५.११ ।।

क्षीण-लुब्ध-प्रकृतिं अपचरित-प्रकृतिं वाइति क्षीण-लुब्ध-प्रकृतिं यायात् । क्षीण-लुब्धा हि प्रकृतयः सुखेनौपजापं पीडां वाउपगच्छन्ति । नापचरिताः प्रधान-अवग्रह-साध्याः" इत्याचार्याः ।। ०७.५.१२ ।।

नैति कौटिल्यः ।। ०७.५.१३ ।।

क्षीण-लुब्धा हि प्रकृतयो भर्तरि स्निग्धा भर्तृ-हिते तिष्ठन्ति । उपजापं वा विसंवादयन्ति । अनुरागे सार्वगुण्यं इति ।। ०७.५.१४ ।।

तस्मादपचरित-प्रकृतिं एव यायात् ।। ०७.५.१५ ।।

बलवन्तं अन्याय-वृत्तिं दुर्बलं वा न्याय-वृत्तिं इति बलवन्तं अन्याय-वृत्तिं यायात् ।। ०७.५.१६ ।।

बलवन्तं अन्याय-वृत्तिं अभियुक्तं प्रकृतयो नानुगृह्णन्ति । निष्पातयन्ति । अमित्रं वाअस्य भजन्ते ।। ०७.५.१७ ।।

दुर्बलं तु न्याय-वृत्तिं अभियुक्तं प्रकृतयः परिगृह्णन्ति । अनुनिष्पतन्ति वा ।। ०७.५.१८ ।।

अवक्षेपेण हि सतां असतां प्रग्रहेण च । ।। ०७.५.१९अ ब ।।

अभूतानां च हिंसानां अधर्म्याणां प्रवर्तनैः ।। ०७.५.१९च्द् ।।

उचितानां चरित्राणां धर्मिष्ठानां निवर्तनैः । ।। ०७.५.२०अ ब ।।

अधर्मस्य प्रसङ्गेन धर्मस्यावग्रहेण च ।। ०७.५.२०च्द् ।।

अकार्याणां च करणैः कार्याणां च प्रणाशनैः । ।। ०७.५.२१अ ब ।।

अप्रदानैश्च देयानां अदेयानां च साधनैः ।। ०७.५.२१च्द् ।।

अदण्डनैश्च दण्ड्यानां अदण्ड्यानां च दण्डनैः । || ०७.५.२२अ ब ||

अग्राह्याणां उपग्राहैर्ग्राह्याणां चानभिग्रहैः || ०७.५.२२च्द् ||

अनर्थ्यानां च करणैरर्थ्यानां च विघातनैः । || ०७.५.२३अ ब ||

अरक्षणैश्च चोरेभ्यः स्वयं च परिमोषणैः || ०७.५.२३च्द् ||

पातैः पुरुष-काराणां कर्मणां गुण-दूषणैः । || ०७.५.२४अ ब ||

उपघातैः प्रधानानां मान्यानां चावमाननैः || ०७.५.२४च्द् ||

विरोधनैश्च वृद्धानां वैषम्येणानृतेन च । || ०७.५.२५अ ब ||

कृतस्याप्रतिकारेण स्थितस्याकरणेन च || ०७.५.२५च्द् ||

राज्ञः प्रमाद-आलस्याभ्यां योग-क्षेम-वधेन वा । || ०७.५.२६अ ब ||

प्रकृतीनां क्षयो लोभो वैराग्यं चौपजायते || ०७.५.२६च्द् ||

क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागतां । || ०७.५.२७अ ब ||

विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयं || ०७.५.२७च्द् ||

तस्मात्प्रकृतीनां क्षय-लोभ-विराग-कारणानि नौत्पादयेत् । उत्पन्नानि वा सद्यः प्रतिकुर्वीत || ०७.५.२८ ||

क्षीणा लुब्धा विरक्ता वा प्रकृतय इति || ०७.५.२९ ||

क्षीणाः पीडन-उच्छेदन-भयात्सद्यः संधिं युद्धं निष्पतनं वा रोचयन्ते || ०७.५.३० ||

लुब्धा लोभेनासंतुष्टाः पर-उपजापं लिप्सन्ते || ०७.५.३१ ||

विरक्ताः पर-अभियोगं अभ्युत्तिष्ठन्ते || ०७.५.३२ ||

तासां हिरण्य-धान्य-क्षयः सर्व-उपघाती कृच्छ्र-प्रतीकारश्च । युग्य-पुरुष-क्षयो हिरण्य-धान्य-साध्यः || ०७.५.३३ ||

लोभ ऐकदेशिको मुख्य-आयत्तः पर-अर्थेषु शक्यः प्रतिहन्तुं आदातुं वा || ०७.५.३४ ||

विरागः प्रधान-अवग्रह-साध्यः || ०७.५.३५ ||

निष्प्रधाना हि प्रकृतयो भोग्या भवन्त्यनुपजाप्याश्चान्येषाम् । अनापत्-सहास्तु || ०७.५.३६ ||

प्रकृति-मुख्य-प्रग्रहैस्तु बहुधा भिन्ना गुप्ता भवन्त्यापत्-सहाश्च || ०७.५.३७ ||

सामवायिकानां अपि संधि-विग्रह-कारणान्यवेक्ष्य शक्ति-शौच-युक्तैः सम्भूय यायात् || ०७.५.३८ ||

शक्तिमान्हि पार्ष्णि-ग्रहणे यात्रा-साहाय्य-दाने वा शक्तः । शुचिः सिद्धौ चासिद्धौ च यथा-स्थित-कारीइति || ०७.५.३९ ||

तेषां ज्यायसाएकेन द्वाभ्यां समाभ्यां वा सम्भूय यातव्यं इति द्वाभ्यां समाभ्यां श्रेयः || ०७.५.४० ||

ज्यायसा ह्यवगृहीतश्चरति । समाभ्यां अतिसंधान-आधिक्ये वा ।। ०७.५.४१ ।।

तौ हि सुखौ भेदयितुम् । दुष्टश्चएको द्वाभ्यां नियन्तुं भेद-उपग्रहं चौपगन्तुं इति ।। ०७.५.४२ ।।

समेनएकेन द्वाभ्यां हीनाभ्यां वाइति द्वाभ्यां हीनाभ्यां श्रेयः ।। ०७.५.४३ ।।

तौ हि द्वि-कार्य-साधकौ वश्यौ च भवतः ।। ०७.५.४४ ।।

कार्य-सिद्धौ तु कृत-अर्थाज्ज्यायसो गूढः स-अपदेशं अपस्रवेत् । ।। ०७.५.४५अ ब ।।

अशुचेः शुचि-वृत्तात्तु प्रतीक्षेतऽ विसर्जनात् ।। ०७.५.४५च्द् ।।

सत्त्रादपसरेद्यत्तः कलत्रं अपनीय वा । ।। ०७.५.४६अ ब ।।

समादपि हि लब्ध-अर्थाद्विश्वस्तस्य भयं भवेत् ।। ०७.५.४६च्द् ।।

ज्यायस्त्वे चापि लब्ध-अर्थः समोअपि परिकल्पते । ।। ०७.५.४७अ ब ।।

अभ्युच्चितश्चाविश्वास्यो वृद्धिश्चित्त-विकारिणी ।। ०७.५.४७च्द् ।।

विशिष्टादल्पं अप्यंशं लब्ध्वा तुष्ट-मुखो व्रजेत् । ।। ०७.५.४८अ ब ।।

अनंशो वा ततोअस्याङ्के प्रहृत्य द्वि-गुणं हरेत् ।। ०७.५.४८च्द् ।।

कृत-अर्थस्तु स्वयं नेता विसृजेत्सामवायिकान् । ।। ०७.५.४९अ ब ।।

अपि जीयेत न जयेन्मण्डल-इष्टस्तथा भवेत् ।। ०७.५.४९च्द् ।।

विजिगीषुर्द्वितीयां प्रकृतिं एवं अतिसंदध्यात् ।। ०७.६.०१ ।।

सामन्तं संहित-प्रयाणे योजयेत्"त्वं इतो याहि । अहं इतो यास्यामि । समानो लाभः" इति ।। ०७.६.०२ ।।

लाभ-साम्ये संधिः । वैषम्ये विक्रमः ।। ०७.६.०३ ।।

संधिः परिपणितश्चापरिपणितश्च ।। ०७.६.०४ ।।

"त्वं एतं देशं याहि । अहं इमं देशं यास्यामि" इति परिपणित-देशः ।। ०७.६.०५ ।।

"त्वं एतावन्तं कालं चेष्टस्व । अहं एतावन्तं कालं चेष्टिष्ये" इति परिपणित-कालः ।। ०७.६.०६ ।।

"त्वं एतावत्-कार्यं साधय । अहं इदं कार्यं साधयिष्यामि" इति परिपणित-अर्थः ।। ०७.६.०७ ।।

यदि वा मन्येत "शैल-वन-नदी-दुर्गं अटवी-व्यवहितं छिन्न-धान्य-पुरुष-वीवध-आसारं अयवस-इन्धन-उदकं अविज्ञातं प्रकृष्टं अन्य-भाव-देशीयं वा सैन्य-व्यायामानां अलब्ध-भौमं वा देशं परो यास्यति । विपरीतं अहम्" इत्येतस्मिन्विशेषे परिपणित-देशं संधिं उपेयात् ।। ०७.६.०८ ।।

यदि वा मन्येत "प्रवर्ष-उष्ण-शीतं अतिव्याधि-प्रायं उपक्षीण-आहार-उपभोगं सैन्य-व्यायामानां चाउपरोधिकं कार्य-साधनानां ऊनं अतिरिक्तं वा कालं परश्चेष्टिष्यते । विपरीतं अहम्" इत्येतस्मिन्विशेषे परिपणित-कालं संधिं उपेयात् ।। ०७.६.०९ ।।

यदि वा मन्येत "प्रत्यादेयं प्रकृति-कोपकं दीर्घ-कालं महा-क्षय-व्ययं अल्पं अनर्थ-अनुबन्धं अकल्यं अधर्म्यं मध्यम-उदासीन-विरुद्धं मित्र-उपघातकं वा कार्यं परः साधयिष्यति । विपरीतं अहम्" इत्येतस्मिन्विशेषे परिपणित-अर्थं संधिं उपेयात् ।। ०७.६.१० ।।

एवं देश-कालयोः काल-कार्ययोर्देश-कार्ययोर्देश-काल-कार्याणां चावस्थापनात्सप्त-विधः परिपणितः ।। ०७.६.११ ।।

तस्मिन्प्रागेवऽरभ्य प्रतिष्ठाप्य च स्व-कर्माणि पर-कर्मसु विक्रमेत ।। ०७.६.१२ ।।

व्यसन-त्वर-अवमान-आलस्य-युक्तं अज्ञं वा शत्रुं अतिसंधातु-कामो देश-काल-कार्याणां अनवस्थापनात्"संहितौ स्वः" इति संधि-विश्वासेन परच्-छिद्रं आसाद्य प्रहरेदित्यपरिपणितः ।। ०७.६.१३ ।।

तत्रएतद्भवति ।। ०७.६.१४ ।।

सामन्तेनएव सामन्तं विद्वानायोज्य विग्रहे । ।। ०७.६.१५अ ब ।।

ततोअन्यस्य हरेद्भूमिं छित्त्वा पक्षं समन्ततः ।। ०७.६.१५च्द् ।।

संधेरकृत-चिकीर्षा कृत-श्लेषणं कृत-विदूषणं अवशीर्ण-क्रिया च ।। ०७.६.१६ ।।

विक्रमस्य प्रकाश-युद्धं कूट-युद्धं तूष्णीं-युद्धं ।। ०७.६.१७ ।।

इति संधि-विक्रमौ ।। ०७.६.१८ ।।

अपूर्वस्य संधेः स-अनुबन्धैः साम-आदिभिः पर्येषणं सम-हीन-ज्यायसां च यथा-बलं अवस्थापनं अकृत-चिकीर्षा ।। ०७.६.१९ ।।

कृतस्य प्रिय-हिताभ्यां उभयतः परिपालनं यथा-सम्भाषितस्य च निबन्धनस्यानुवर्तनं रक्षणं च "कथं परस्मान्न भिद्येत" इति कृत-श्लेषणं ।। ०७.६.२० ।।

परस्यापसंधेयतां दूष्य-अतिसंधानेन स्थापयित्वा व्यतिक्रमः कृत-विदूषणं ।। ०७.६.२१ ।।

भृत्येन मित्रेण वा दोष-अपसृतेन प्रतिसंधानं अवशीर्ण-क्रिया ।। ०७.६.२२ ।।

तस्यां गत-आगतश्चतुर्-विधः कारणाद्गत-आगतो । विपरीतः । कारणाद्गतोअकारणादागतो । विपरीतश्चैति ।। ०७.६.२३ ।।

स्वामिनो दोषेण गतो गुणेनऽगतः परस्य गुणेन गतो दोषेणऽगत इति कारणाद्गत-आगतः संधेयः ।। ०७.६.२४ ।।

स्व-दोषेण गत-आगतो गुणं उभयोः परित्यज्य अकारणाद्गत-आगतः चल-बुद्धिरसंधेयः ।। ०७.६.२५ ।।

स्वामिनो दोषेण गतः परस्मात्स्व-दोषेणऽगत इति कारणाद्गतोअकारणादागतः तर्कयितव्यः "पर-प्रयुक्तः स्वेन वा दोषेणापकर्तु-कामः । परस्यौच्छेत्तारं अमित्रं मे ज्ञात्वा प्रतिघात-भयादागतः । परं वा मां उच्छेत्तु-कामं परित्यज्यऽनृशंस्यादागतः" इति ।। ०७.६.२६ ।।

ज्ञात्वा कल्याण-बुद्धिं पूजयेद् । अन्यथा-बुद्धिं अपकृष्टं वासयेत् ।। ०७.६.२७ ।।

स्व-दोषेण गतः पर-दोषेणऽगत इत्यकारणाद्गतः कारणादागतः तर्कयितव्यः " छिद्रं मे पूरयिष्यति । उचितोअयं अस्य वासः । परत्रास्य जनो न रमते । मित्रैर्मे संहितः । शत्रुभिर्विगृहीतः । लुब्ध-क्रूरादाविग्नः शत्रु-संहिताद्वा परस्मात्" इति ।। ०७.६.२८ ।।

ज्ञात्वा यथा-बुद्ध्यवस्थापयितव्यः ।। ०७.६.२९ ।।

"कृत-प्रणाशः शक्ति-हानिर्विद्या-पण्यत्वं आशा-निर्वेदो देश-लौल्यं अविश्वासो बलवद्-विग्रहो वा परित्याग-स्थानम्" इत्याचार्याः ।। ०७.६.३० ।।

भयं अवृत्तिरमर्ष इति कौटिल्यः ।। ०७.६.३१ ।।

इहापकारी त्याज्यः । पर-अपकारी संधेयः । उभय-अपकारी तर्कयितव्य इति समानं ।। ०७.६.३२ ।।

असंधेयेन त्ववश्यं संधातव्ये यतः प्रभावस्ततः प्रतिविदध्यात् ।। ०७.६.३३ ।।

स-उपकारं व्यवहितं गुप्तं आयुः-क्षयादिति । ।। ०७.६.३४अ ब ।।

वासयेदरि-पक्षीयं अवशीर्ण-क्रिया-विधौ ।। ०७.६.३४च्द् ।।

विक्रमयेद्भर्तरि वा सिद्धं वा दण्ड-चारिणं ।। ०७.६.३५अ ब ।।

कुर्यादमित्र-अटवीषु प्रत्यन्ते वाअन्यतः क्षिपेत् ।। ०७.६.३५च्द् ।।

पण्यं कुर्यादसिद्धं वा सिद्धं वा तेन संवृतं ।। ०७.६.३६अ ब ।।

तस्यएव दोषेण-अदूष्य पर-संधेय-कारणात् ।। ०७.६.३६च्द् ।।

अथ वा शमयेदेनं आयत्य्-अर्थं उपांशुना ।। ०७.६.३७अ ब ।।

आयत्यां च वध-प्रेप्सुं दृष्ट्वा हन्याद्गत-आगतं ।। ०७.६.३७च्द् ।।

अरितोअभ्यागतो दोषः शत्रु-संवास-कारितः ।। ०७.६.३८अ ब ।।

सर्प-संवास-धर्मित्वान्नित्य-उद्वेगेन दूषितः ।। ०७.६.३८च्द् ।।

जायते प्लक्ष-बीज-आशात्कपोतादिव शाल्मलेः ।। ०७.६.३९अ ब ।।

उद्वेग-जननो नित्यं पश्चादपि भय-आवहः ।। ०७.६.३९च्द् ।।

प्रकाश-युद्धं निर्दिष्टे देशे काले च विक्रमः ।। ०७.६.४०अ ब ।।

विभीषणं अवस्कन्दः प्रमाद-व्यसन-अर्दनं ।। ०७.६.४०च्द् ।।

एकत्र त्याग-घातौ च कूट-युद्धस्य मातृका ।। ०७.६.४१अ ब ।।

योग-गूढ-उपजाप-अर्थं तूष्णीं-युद्धस्य लक्षणं ।। ०७.६.४१च्द् ।।

विजिगीषुर्द्वितीयां प्रकृतिं एवं उपगृह्णीयात् ।। ०७.७.०१ ।।

सामन्तं सामन्तेन सम्भूय यायात् । यदि वा मन्येत "पार्ष्णिं मे न ग्रहीष्यति । पार्ष्णि-ग्राहं वारयिष्यति । यातव्यं नाभिसरिष्यति । बल-द्वैगुण्यं मे भविष्यति । वीवध-आसारौ मे प्रवर्तयिष्यति । परस्य वारयिष्यति । बह्व्-आबाधे मे पथि कण्टकान्मर्दयिष्यति । दुर्ग-अटव्य्-अपसारेषु दण्डेन चरिष्यति । यातव्यं अविषह्ये दोषे संधौ वा स्थापयिष्यति । लब्ध-लाभ-अंशो वा शत्रूनन्यान्मे विश्वासयिष्यति" इति ।। ०७.७.०२ ।।

द्वैधी-भूतो वा कोशेन दण्डं दण्डेन कोशं सामन्तानां अन्यतमाल्लिप्सेत ।। ०७.७.०३ ।।

तेषां ज्यायसोअधिकेनांशेन समात्समेन हीनाद्धीनेनैति सम-संधिः ।। ०७.७.०४ ।।

विपर्यये विषम-संधिः ।। ०७.७.०५ ।।

तयोर्विशेष-लाभादतिसंधिः ।। ०७.७.०६ ।।

व्यसनिनं अपाय-स्थाने सक्तं अनर्थिनं वा ज्यायांसं हीनो बल-समेन लाभेन पणेत ।। ०७.७.०७ ।।

पणितस्तस्यापकार-समर्थो विक्रमेत । अन्यथा संदध्यात् ।। ०७.७.०८ ।।

एवं-भूतो वा हीन-शक्ति-प्रताप-पूरण-अर्थं सम्भाव्य-अर्थ-अभिसारी मूल-पार्ष्णि-त्राण-अर्थं वा ज्यायांसं हीनो बल-समाद्विशिष्टेन लाभेन पणेत ।। ०७.७.०९ ।।

पणितः कल्याण-बुद्धिं अनुगृह्णीयात् । अन्यथा विक्रमेत ।। ०७.७.१० ।।

जात-व्यसन-प्रकृति-रन्ध्रं उपस्थित-अनर्थं वा ज्यायांसं हीनो दुर्ग-मित्र-प्रतिष्टब्धो वा ह्रस्वं अध्वानं यातु-कामः शत्रुं अयुद्धं एक-अन्त-सिद्धिं वा लाभं आदातु-कामो बल-समाद्धीनेन लाभेन पणेत ।। ०७.७.११ ।।

पणितस्तस्यापकार-समर्थो विक्रमेत । अन्यथा संदध्यात् ।। ०७.७.१२ ।।

अरन्ध्र-व्यसनो वा ज्यायान्दुर्-आरब्ध-कर्माणं भूयः क्षय-व्ययाभ्यां योक्तु-कामो दूष्य-दण्डं प्रवासयितु-कामो दूष्य-दण्डं आवाहयितु-कामो वा पीडनीयं उच्छेदनीयं वा हीनेन व्यथयितु-कामः संधि-प्रधानो वा कल्याण-बुद्धिर्हीनं लाभं प्रतिगृह्णीयात् ।। ०७.७.१३ ।।

कल्याण-बुद्धिना सम्भूयार्थं लिप्सेत । अन्यथा विक्रमेत ।। ०७.७.१४ ।।

एवं समः समं अतिसंदध्यादनुगृह्णीयाद्वा ।। ०७.७.१५ ।।

पर-अनीकस्य प्रत्यनीकं मित्र-अटवीनां वा । शत्रोर्विभूमीनां देशिकं मूल-पार्ष्णि-त्राण-अर्थं वा समो बल-समेन लाभेन पणेत ।। ०७.७.१६ ।।

पणितः कल्याण-बुद्धिं अनुगृह्णीयात् । अन्यथा विक्रमेत ।। ०७.७.१७ ।।

जात-व्यसन-प्रकृति-रन्ध्रं अनेक-विरुद्धं अन्यतो लभमानो वा समो बल-समाद्धीनेन लाभेन पणेत ।। ०७.७.१८ ।।

पणितस्तस्यापकार-समर्थो विक्रमेत । अन्यथा संदध्यात् ।। ०७.७.१९ ।।

एवं-भूतो वा समः सामन्त-आयत्त-कार्यः कर्तव्य-बलो वा बल-समाद्विशिष्टेन लाभेन पणेत ।। ०७.७.२० ।।

पणितः कल्याण-बुद्धिं अनुगृह्णीयातन्यथा विक्रमेत ।। ०७.७.२१ ।।

जात-व्यसन-प्रकृति-रन्ध्रं अभिहन्तु-कामः स्व्-आरब्धं एक-अन्त-सिद्धिं वाअस्य कर्म-उपहन्तु-कामो मूले यात्रायां वा प्रहर्तु-कामो यातव्याद्-

भूयो लभमानो वा ज्यायांसं हीनं समं वा भूयो याचेत ।। ०७.७.२२ ।।

भूयो वा याचितः स्व-बल-रक्षा-अर्थं दुर्धर्षं अन्य-दुर्गं आसारं अटवीं वा पर-दण्डेन मर्दितु-कामः प्रकृष्टेअध्वनि काले वा पर-दण्डं क्षय-व्ययाभ्यां योक्तु-कामः पर-दण्डेन वा विवृद्धस्तं एवौच्छेत्तु-कामः पर-दण्डं आदातु-कामो वा भूयो दद्यात् ।। ०७.७.२३ ।।

ज्यायान्वा हीनं यातव्य-अपदेशेन हस्ते कर्तु-कामः परं उच्छिद्य वा तं एवौच्छेत्तु-कामः । त्यागं वा कृत्वा प्रत्यादातु-कामो बल-समाद्विशिष्टेन लाभेन पणेत ।। ०७.७.२४ ।।

पणितस्तस्यापकार-समर्थो विक्रमेत । अन्यथा संदध्यात् ।। ०७.७.२५ ।।

यातव्य-संहितो वा तिष्ठेत् । दूष्य-अमित्र-अटवी-दण्डं वाअस्मै दद्यात् ।। ०७.७.२६ ।।

जात-व्यसन-प्रकृति-रन्ध्रो वा ज्यायान्हीनं बल-समेन लाभेन पणेत ।। ०७.७.२७ ।।

पणितस्तस्यापकार-समर्थो विक्रमेत । अन्यथा संदध्यात् ।। ०७.७.२८ ।।

एवं-भूतं हीनं ज्यायान्बल-समाद्धीनेन लाभेन पणेत ।। ०७.७.२९ ।।

पणितस्तस्यापकार-समर्थो विक्रमेत । अन्यथा संदध्यात् ।। ०७.७.३० ।।

आदौ बुध्येत पणितः पणमानश्च कारणं ।। ०७.७.३१अ ब ।।

ततो वितर्क्य-उभयतो यतः श्रेयस्ततो व्रजेत् ।। ०७.७.३१च्द् ।।

यातव्योअभियास्यमानः संधि-कारणं आदातु-कामो विहन्तु-कामो वा सामवायिकानां अन्यतमं लाभ-द्वैगुण्येन पणेत ।। ०७.८.०१ ।।

पणमानः क्षय-व्यय-प्रवास-प्रत्यवाय-पर-उपकार-शरीर-आबाधांश्चास्य वर्णयेत् ।। ०७.८.०२ ।।

प्रतिपन्नं अर्थेन योजयेत् ।। ०७.८.०३ ।।

वैरं वा परैर्ग्राहयित्वा विसंवादयेत् ।। ०७.८.०४ ।।

दुरारब्ध-कर्माणं भूयः क्षय-व्ययाभ्यां योक्तु-कामः स्व्-आरब्धां वा यात्रा-सिद्धिं विघातयितु-कामो मूले यात्रायां वा प्रहर्तु-कामो यातव्य-संहितः पुनर्याचितु-कामः प्रत्युत्पन्न-अर्थ-कृच्छ्रस्तस्मिन्नविश्वस्तो वा तदात्वे लाभं अल्पं इच्छेत् । आयत्यां प्रभूतं ।। ०७.८.०५ ।।

मित्र-उपकारं अमित्र-उपघातं अर्थ-अनुबन्धं अवेक्षमाणः पूर्व-उपकारकं कारयितु-कामो भूयस्तदात्वे महान्तं लाभं उत्सृज्यऽयत्यां अल्पं इच्छेत् ।। ०७.८.०६ ।।

दूष्य-अमित्राभ्यां मूल-हरेण वा ज्यायसा विगृहीतं त्रातु-कामस्तथा-विधं उपकारं कारयितु-कामः सम्बन्ध-अवेक्षी वा तदात्वे चऽयत्यां च लाभं न प्रतिगृह्णीयात् ।। ०७.८.०७ ।।

कृत-संधिरतिक्रमितु-कामः परस्य प्रकृति-कर्शनं मित्र-अमित्र-संधि-विश्लेषणं वा कर्तु-कामः पर-अभियोगात्शङ्कमानो लाभं अप्राप्तं अधिकं वा याचेत ।। ०७.८.०८ ।।

तं इतरस्तदात्वे चऽयत्यां च क्रमं अवेक्षेत ।। ०७.८.०९ ।।

तेन पूर्वे व्याख्याताः ।। ०७.८.१० ।।

अरि-विजिगीष्वोस्तु स्वं स्वं मित्रं अनुगृह्णतोः शक्य-कल्य-भव्य-आरम्भि-स्थिर-कर्म-अनुरक्त-प्रकृतिभ्यो विशेषः ।। ०७.८.११ ।।

शक्य-आरम्भी विषह्यं कर्मऽरभते । कल्य-आरम्भी निर्दोषम् । भव्य-आरम्भी कल्याण-उदयं ।। ०७.८.१२ ।।

स्थिर-कर्मा नासमाप्य कर्मौपरमते ।। ०७.८.१३ ।।

अनुरक्त-प्रकृतिः सुसहायत्वादल्पेनाप्यनुग्रहेण कार्यं साधयति ।। ०७.८.१४ ।।

त एते कृत-अर्थाः सुखेन प्रभूतं चौपकुर्वन्ति ।। ०७.८.१५ ।।

अतः प्रतिलोमा नानुग्राह्याः ।। ०७.८.१६ ।।

तयोरेक-पुरुष-अनुग्रहे यो मित्रं मित्र-तरं वाअनुगृह्णाति सोअतिसंधत्ते ।। ०७.८.१७ ।।

मित्रादात्म-वृद्धिं हि प्राप्नोति । क्षय-व्यय-प्रवास-पर-उपकारानितरः ।। ०७.८.१८ ।।

कृत-अर्थश्च शत्रुर्वैगुण्यं एति ।। ०७.८.१९ ।।

मध्यमं त्वनुगृह्णतोर्यो मध्यमं मित्रं मित्रतरं वाअनुगृह्णाति सोअतिसंधत्ते ।। ०७.८.२० ।।

मित्रादात्म-वृद्धिं हि प्राप्नोति । क्षय-व्यय-प्रवास-पर-उपकारानितरः ।। ०७.८.२१ ।।

मध्यमश्चेदनुगृहीतो विगुणः स्यादमित्रोअतिसंधत्ते ।। ०७.८.२२ ।।

कृत-प्रयासं हि मध्यम-अमित्रं अपसृतं एक-अर्थ-उपगतं प्राप्नोति ।। ०७.८.२३ ।।

तेनौदासीन-अनुग्रहो व्याख्यातः ।। ०७.८.२४ ।।

मध्यम-उदासीनयोर्बल-अंश-दाने यः शूरं कृत-अस्त्रं दुःख-सहं अनुरक्तं वा दण्डं ददाति सोअतिसंधीयते ।। ०७.८.२५ ।।

विपरीतोअतिसंधत्ते ।। ०७.८.२६ ।।

यत्र तु दण्डः प्रहितस्तं वा चार्थं अन्यांश्च साधयति तत्र मौल-भृत-श्रेणी-मित्र-अटवी-बलानां अन्यतमं उपलब्ध-देश-कालं दण्डं दद्यात् । अमित्र-अटवी-बलं वा व्यवहित-देश-कालं ।। ०७.८.२७ ।।

यं तु मन्येत "कृत-अर्थो मे दण्डं गृह्णीयाद् । अमित्र-अटव्य्-अभूम्य्-अनृतुषु वा वासयेद् । अफलं वा कुर्याद्" इति । दण्ड-व्यासङ्ग-अपदेशेन नएनं अनुगृह्णीयात् ।। ०७.८.२८ ।।

एवं अवश्यं त्वनुग्रहीतव्ये तत्-काल-सहं अस्मै दण्डं दद्यात् ।। ०७.८.२९ ।।

आ-समाप्तेश्चएनं वासयेद्योधयेच्च बल-व्यसनेभ्यश्च रक्षेत् ।। ०७.८.३० ।।

कृत-अर्थाच्च स-अपदेशं अपस्रावयेत् ।। ०७.८.३१ ।।

दूष्य-अमित्र-अटवी-दण्डं वाअस्मै दद्यात् ।। ०७.८.३२ ।।

यातव्येन वा संधायएनं अतिसंदध्यात् ।। ०७.८.३३ ।।

समे हि लाभे संधिः स्याद्विषमे विक्रमो मतः ।। ०७.८.३४अ ब ।।

सम-हीन-विशिष्टानां इत्युक्ताः संधि-विक्रमाः ।। ०७.८.३४च्द् ।।

संहित-प्रयाणे मित्र-हिरण्य-भूमि-लाभानां उत्तर-उत्तरो लाभः श्रेयान् ।। ०७.९.०१ ।।

मित्र-हिरण्ये हि भूमि-लाभाद्भवतः । मित्रं हिरण्य-लाभात् ।। ०७.९.०२ ।।

यो वा लाभः सिद्धः शेषयोरन्यतरं साधयति ।। ०७.९.०३ ।।

"त्वं चाहं च मित्रं लभावहे" इत्येवं-आदिध्सम-संधिः ।। ०७.९.०४ ।।

"त्वं मित्रम्" इत्येवं-आदिर्विषम-संधिः ।। ०७.९.०५ ।।

तयोर्विशेष-लाभादतिसंधिः ।। ०७.९.०६ ।।

सम-संधौ तु यः सम्पन्नं मित्रं मित्र-कृच्छ्रे वा मित्रं अवाप्नोति सोअतिसंधत्ते ।। ०७.९.०७ ।।

आपद्द्हि सौहृद-स्थैर्यं उत्पादयति ।। ०७.९.०८ ।।

मित्र-कृच्छ्रेअपि नित्यं अवश्यं अनित्यं वश्यं वाइति "नित्यं अवश्यं श्रेयः । तद्द्हि अनुपकुर्वदपि नापकरोति" इत्याचार्याः ।। ०७.९.०९ ।।

नैति कौटिल्यः ।। ०७.९.१० ।।

वश्यं अनित्यं श्रेयः ।। ०७.९.११ ।।

यावदुपकरोति तावन्मित्रं भवति । उपकार-लक्षणं मित्रं इति ।। ०७.९.१२ ।।

वश्ययोरपि महा-भोगं अनित्यं अल्प-भोगं वा नित्यं इति महा-भोगं अनित्यं श्रेयः । महा-भोगं अनित्यं अल्प-कालेन महद्-उपकुर्वन्महान्ति व्यय-स्थानानि प्रतिकरोति" इत्याचार्याः ।। ०७.९.१३ ।।

नैति कौटिल्यः ।। ०७.९.१४ ।।

नित्यं अल्प-भोगं श्रेयः ।। ०७.९.१५ ।।

महा-भोगं अनित्यं उपकार-भयादपक्रामति । उपकृत्य वा प्रत्यादातुं ईहते ।। ०७.९.१६ ।।

नित्यं अल्प-भोगं सातत्यादल्पं उपकुर्वन्महता कालेन महदुपकरोति ।। ०७.९.१७ ।।

गुरु-समुत्थं महन्मित्रं लघु-समुत्थं अल्पं वाइति "गुरु-समुत्थं महन्मित्रं प्रताप-करं भवति । यदा चौत्तिष्ठते तदा कार्यं साधयति" इत्याचार्याः ।। ०७.९.१८ ।।

नैति कौटिल्यः ।। ०७.९.१९ ।।

लघु-समुत्थं अल्पं श्रेयः ।। ०७.९.२० ।।

लगु-समुत्थं अल्पं मित्रं कार्य-कालं नातिपातयति दौर्बल्याच्च यथा-इष्ट-भोग्यं भवति । नैतरत्प्रकृष्ट-भौमं ।। ०७.९.२१ ।।

विक्षिप्त-सैन्यं अवश्य-सैन्यं वाइति "विक्षिप्तं सैन्यं शक्यं प्रतिसंहर्तुं वश्यत्वाद्" इत्याचार्याः ।। ०७.९.२२ ।।

नैति कौटिल्यः ।। ०७.९.२३ ।।

अवश्य-सैन्यं श्रेयः ।। ०७.९.२४ ।।

अवश्यं हि शक्यं साम-आदिभिर्वश्यं कर्तुम् । नैतरत्कार्य-व्यासक्तं प्रतिसंहर्तुं ।। ०७.९.२५ ।।

पुरुष-भोगं हिरण्य-भोगं वा मित्रं इति "पुरुष-भोगं मित्रं श्रेयः । प्रुष-भोगं मित्रं प्रताप-करं भवति । यदा चौत्तिष्ठते तदा कार्यं साधयति" इत्याचार्याः ।। ०७.९.२६ ।।

नैति कौटिल्यः ।। ०७.९.२७ ।।

हिरण्य-भोगं मित्रं श्रेयः ।। ०७.९.२८ ।।

नित्यो हि हिरण्येन योगः कदाचिद्दण्डेन ।। ०७.९.२९ ।।

दण्डश्च हिरण्येनान्ये च कामाः प्राप्यन्त इति ।। ०७.९.३० ।।

हिरण्य-भोगं भूमि-भोगं वा मित्रं इति "हिरण्य-भोगं गतिमत्त्वात्सर्व-व्यय-प्रतीकार-करम्" इत्याचार्याः ।। ०७.९.३१ ।।

नैति कौटिल्यः ।। ०७.९.३२ ।।

मित्र-हिरण्ये हि भूमि-लाभाद्भवत इत्युक्तं पुरस्ताड ।। ०७.९.३३ ।।

तस्माद्भूमि-भोगं मित्रं श्रेय इति ।। ०७.९.३४ ।।

तुल्ये पुरुष-भोगे विक्रमः क्लेश-सहत्वं अनुरागः सर्व-बल-लाभो वा मित्र-कुलाद्विशेषः ।। ०७.९.३५ ।।

तुल्ये हिरण्य-भोगे प्रार्थित-अर्थता प्राभूत्यं अल्प-प्रयसता सातत्यं च विशेषः ।। ०७.९.३६ ।।

तत्रएतद्भवति ।। ०७.९.३७ ।।

नित्यं वश्यं लघु-उत्थानं पितृ-पैतामहं महत् । ।। ०७.९.३८अ ब ।।

अद्वैध्यं चैति सम्पन्नं मित्रं षड्-गुणं उच्यते ।। ०७.९.३८च्द् ।।

ऋते यदर्थं प्रणयाद्रक्ष्यते यच्च रक्षति । ।। ०७.९.३९अ ब ।।

पूर्व-उपचित-सम्बन्धं तन्मित्रं नित्यं उच्यते ।। ०७.९.३९च्द् ।।

सर्व-चित्र-महा-भोगं त्रिविधं वश्यं उच्यते । ।। ०७.९.४०अ ब ।।

एकतो-भोग्युभयतः सर्वतो-भोगि चापरं ।। ०७.९.४०च्द् ।।

आदातृ वा दात्र्-अपि वा जीवत्यरिषु हिंसया । ।। ०७.९.४१अ ब ।।

मित्रं नित्यं अवश्यं तद्-दुर्ग-अटव्य्-अपसारि च ।। ०७.९.४१च्द् ।।

अन्यतो विगृहीतं यल्लघु-व्यसनं एव वा । ।। ०७.९.४२अ ब ।।

संधत्ते चौपकाराय तन्मित्रं वश्यं अध्रुवं ।। ०७.९.४२च्द् ।।

एक-अर्थेनाथ सम्बद्धं उपकार्य-विकारि च । ।। ०७.९.४३अ ब ।।

मित्र-भावि भवत्येतन्मित्रं अद्वैध्यं आपदि ।। ०७.९.४३च्द् ।।

मित्र-भावाद्ध्रुवं मित्रं शत्रु-साधारणाच्चलं । ।। ०७.९.४४अ ब ।।

न कस्यचिदुदासीनं द्वयोरुभय-भावि तत् ।। ०७.९.४४च्द् ।।

विजिगीषोरमित्रं यन्मित्रं अन्तर्धितां गतं । ।। ०७.९.४५अ ब ।।

उपकारेअनिविष्टं वाअशक्तं वाअनुपकारि तत् ।। ०७.९.४५च्द् ।।

प्रियं परस्य वा रक्ष्यं पूज्यं सम्बद्धं एव वा । ।। ०७.९.४६अ ब ।।

अनुगृह्णाति यन्मित्रं शत्रु-साधारणं हि तत् ।। ०७.९.४६च्द् ।।

प्रकृष्ट-भौमं संतुष्टं बलवच्चऽलसं च यत् । ।। ०७.९.४७अ ब ।।

उदासीनं भवत्येतद्व्यसनादवमानितं ।। ०७.९.४७च्द् ।।

अरेर्नेतुश्च यद्वृद्धिं दौर्बल्यादनुवर्तते । ।। ०७.९.४८अ ब ।।

उभयस्याप्यविद्विष्टं विद्यादुभय-भावि तत् ।। ०७.९.४८च्द् ।।

कारण-अकारण-ध्वस्तं कारण-अकारण-आगतं । ।। ०७.९.४९अ ब ।।

यो मित्रं समुपेक्षेत स मृत्युं उपगूहति ।। ०७.९.४९च्द् ।।

क्षिप्रं अल्पो लाभश्चिरान्महानिति वा "क्षिप्रं अल्पो लाभः कार्य-देश-काल-संवादकः श्रेयान्" इत्याचार्याः ।। ०७.९.५० ।।

नैति कौटिल्यः ।। ०७.९.५१ ।।

चिरादविनिपाती बीज-सधर्मा महाम्ल्लाभः श्रेयान् । विपर्यये पूर्वः ।। ०७.९.५२ ।।

एवं दृष्ट्वा ध्रुवे लाभे लाभ-अंशे च गुण-उदयं । ।। ०७.९.५३अ ब ।।

स्व-अर्थ-सिद्धि-परो यायात्संहितः सामवायिकैः ।। ०७.९.५३च्द् ।।

"त्वं चाहं च भूमिं लभावहे" इति भूमि-संधिः ।। ०७.१०.०१ ।।

तयोर्यः प्रत्युपस्थित-अर्थः सम्पन्नां भूमिं अवाप्नोति सोअतिसंधत्ते ।। ०७.१०.०२ ।।

तुल्ये सम्पन्न-अलाभे यो बलवन्तं आक्रम्य भूमिं अवाप्नोति सोअतिसंधत्ते ।। ०७.१०.०३ ।।

भूमि-लाभं शत्रु-कर्शनं प्रतापं च हि प्राप्नोति ।। ०७.१०.०४ ।।

दुर्बलाद्-भूमि-लाभे सत्यं सौकर्यं भवति ।। ०७.१०.०५ ।।

दुर्बल एव च भूमि-लाभः । तत्-सामन्तश्च मित्रं अमित्र-भावं गच्छति ।। ०७.१०.०६ ।।

तुल्ये बलीयस्त्वे यः स्थित-शत्रुं उत्पाट्य भूमिं अवाप्नोति सोअतिसंधत्ते ।। ०७.१०.०७ ।।

दुर्ग-अवाप्तिर्हि स्व-भूमि-रक्षणं अमित्र-अटवी-प्रतिषेधं च करोति ।। ०७.१०.०८ ।।

चल-अमित्राद्-भूमि-लाभे शक्य-सामन्ततो विशेषः ।। ०७.१०.०९ ।।

दुर्बल-सामन्ता हि क्षिप्र-आप्यायन-योग-क्षेमा भवति ।। ०७.१०.१० ।।

विपरीता बलवत्सामन्ता कोश-दण्ड-अवच्छेदनी च भूमिर्भवति ।। ०७.१०.११ ।।

सम्पन्ना नित्य-अमित्रा मन्द-गुणा वा भूमिरनित्य-अमित्राइति "सम्पन्ना नित्य-अमित्रा श्रेयसी भूमिः सम्पन्ना हि कोश-दण्डौ सम्पादयति । तौ चामित्र-प्रतिघातकौ इत्याचार्याः ।। ०७.१०.१२ ।।

नैति कौटिल्यः ।। ०७.१०.१३ ।।

नित्य-अमित्र-अलाभे भूयान्शत्रु-लाभो भवति ।। ०७.१०.१४ ।।

नित्यश्च शत्रुरुपकृते चापकृते च शत्रुरेव भवति । अनित्यस्तु शत्रुरुपकारादनपकाराद्वा शाम्यति ।। ०७.१०.१५ ।।

यस्या हि भूमेर्बहु-दुर्गाश्चोर-गणैर्म्लेच्छ-अटवीभिर्वा नित्य-अविरहिताः प्रत्यन्ताः सा नित्य-अमित्रा । विपर्यये त्वनित्य-अमित्रा ।। ०७.१०.१६ ।।

अल्पा प्रत्यासन्ना महती व्यवहिता वा भूमिरिति अल्पा प्रत्यासन्ना श्रेयसी ।। ०७.१०.१७ ।।

सुखा हि प्राप्तुं पालयितुं अभिसारयितुं च भवति ।। ०७.१०.१८ ।।

विपरीता व्यवहिता ।। ०७.१०.१९ ।।

व्यवहितयोरपि दण्ड-धारणाआत्म-धारणा वा भूमिरिति आत्म-धारणा श्रेयसी ।। ०७.१०.२० ।।

सा हि स्व-समुत्थाभ्यां कोश-दण्डाभ्यां धार्यते ।। ०७.१०.२१ ।।

विपरीता दण्ड-धारणा दण्ड-स्थानं ।। ०७.१०.२२ ।।

बालिशात्प्राज्ञाद्वा भूमि-लाभ इति बालिशाद्-भूमि-लाभः श्रेयान् ।। ०७.१०.२३ ।।

सुप्राप्याअनुपाल्या हि भवति । अप्रत्यादेया च ।। ०७.१०.२४ ।।

विपरीता प्राज्ञादनुरक्ता ।। ०७.१०.२५ ।।

पीडनीय-उच्छेदनीययोरुच्छेदनीयाद्भूमि-लाभः श्रेयान् ।। ०७.१०.२६ ।।

उच्छेदनीयो ह्यनपाश्रयो दुर्बल-अपाश्रयो वाअभियुक्तः कोश-दण्डावादायापसर्तु-कामः प्रकृतिभिस्त्यज्यते । न पीडनीयो दुर्ग-मित्र-प्रतिष्टब्धः ।। ०७.१०.२७ ।।

दुर्ग-प्रतिष्टब्धयोरपि स्थल-नदी-दुर्गीयाभ्यां स्थल-दुर्गीयाद्भूमि-लाभः श्रेयान् ।। ०७.१०.२८ ।।

स्थालेयं हि सुरोध-अवमर्द-अवस्कन्दं अनिह्श्रावि-शत्रु च ।। ०७.१०.२९ ।।

नदी-दुर्गं तु द्वि-गुण-क्लेश-करम् । उदकं च पातव्यं वृत्ति-करं चामित्रस्य ।। ०७.१०.३० ।।

नदी-पर्वत-दुर्गीयाभ्यां नदी-दुर्गीयाद्भूमि-लाभः श्रेयान् ।। ०७.१०.३१ ।।

नदी-दुर्गं हि हस्ति-स्तम्भ-संक्रम-सेतु-बन्ध-नौभिः साध्यं अनित्य-गाम्भीर्यं अवस्राव्युदकं च ।। ०७.१०.३२ ।।

पार्वतं तु स्व्-आरक्षं दुरुपरोधि कृच्छ्र-आरोहणम् । भग्ने चएकस्मिन्न सर्व-वधः । शिला-वृक्ष-प्रमोक्षश्च महा-अपकारिणां ।। ०७.१०.३३ ।।

निम्न-स्थल-योधिभ्यो निम्न-योधिभ्यो भूमि-लाभः श्रेयान् ।। ०७.१०.३४ ।।

निम्न-योधिनो ह्युपरुद्ध-देश-कालाः । स्थल-योधिनस्तु सर्व-देश-काल-योधिनः ।। ०७.१०.३५ ।।

खनक-आकाश-योधिभ्यः खनकेभ्यो भूमि-लाभः श्रेयान् ।। ०७.१०.३६ ।।

खनका हि खातेन शस्त्रेण चौभयथा युध्यन्ते । शस्त्रेणएवऽकाश-योधिनः ।। ०७.१०.३७ ।।

एवं-विध्येभ्यः पृथिवीं लभमानोअर्थ-शास्त्रवित् । ।। ०७.१०.३८अ ब ।।

संहितेभ्यः परेभ्यश्च विशेषं अधिगच्छति ।। ०७.१०.३८च्द् ।।

"त्वं चाहं च शून्यं निवेशयावहे" इत्यनवसित-संधिः ।। ०७.११.०१ ।।

तयोर्यः प्रत्युपस्थित-अर्थो यथा-उक्त-गुणां भूमिं निवेशयति सोऽतिसंधत्ते ।। ०७.११.०२ ।।

तत्रापि स्थलं औदकं वाइति महतः स्थलादल्पं औदकं श्रेयः । सातत्यादवस्थितत्वाच्च फलानां ।। ०७.११.०३ ।।

स्थलयोरपि प्रभूत-पूर्व-अपर-सस्यं अल्प-वर्ष-पाकं असक्त-आरम्भं श्रेयः ।। ०७.११.०४ ।।

औदकयोरपि धान्य-वापं अधान्य-वापात्श्रेयः ।। ०७.११.०५ ।।

तयोरल्प-बहुत्वे धान्य-कान्तादल्पान्महदधान्य-कान्तं श्रेयः ।। ०७.११.०६ ।।

महत्यवकाशे हि स्थाल्याश्चानूप्याश्चओषधयो भवन्ति ।। ०७.११.०७ ।।

दुर्ग-आदीनि च कर्माणि प्रभूत्येन क्रियन्ते ।। ०७.११.०८ ।।

कृत्रिमा हि भूमि-गुणाः ।। ०७.११.०९ ।।

खनि-धान्य-भोगयोः खनि-भोगः कोश-करः । धान्य-भोगः कोश-कोष्ठ-अगार-करः ।। ०७.११.१० ।।

धान्य-मूला हि दुर्ग-आदीनां कर्मणां आरम्भाः ।। ०७.११.११ ।।

महा-विषय-विक्रयो वा खनि-भोगः श्रेयान् ।। ०७.११.१२ ।।

"द्रव्य-हस्ति-वन-भोगयोर्द्रव्य-वन-भोगः सर्व-कर्मणां योनिः प्रभूत-निधान-क्षमश्च । विपरीतो हस्ति-वन-भोगः" इत्याचार्याः ।। ०७.११.१३ ।।

नैति कौटिल्यः ।। ०७.११.१४ ।।

शक्यं द्रव्य-वनं अनेकं अनेकस्यां भूमौ वापयितुम् । न हस्ति-वनं ।। ०७.११.१५ ।।

हस्ति-प्रधानो हि पर-अनीक-वध इति ।। ०७.११.१६ ।।

वारि-स्थल-पथ-भोगयोरनित्यो वारि-पथ-भोगः । नित्यः स्थल-पथ-भोगः ।। ०७.११.१७ ।।

भिन्न-मनुष्या श्रेणी-मनुष्या वा भूमिरिति भिन्न-मनुष्या श्रेयसी ।। ०७.११.१८ ।।

भिन्न-मनुष्या भोग्या भवति । अनुपजाप्या चान्येषाम् । अनापत्-सहा तु ।। ०७.११.१९ ।।

विपरीता श्रेणी-मनुष्या । कोपे महा-दोषा ।। ०७.११.२० ।।

तस्यां चातुर्वर्ण्य-निवेशे सर्व-भोग-सहत्वादवर-वर्ण-प्राया श्रेयसी । बाहुल्याद्ध्रुवत्वाच्च कृष्याः कर्षकवती । कृष्याश्चान्येषां चऽरम्भाणां प्रयोजकत्वात्गो-रक्षकवती । पण्य-निचय-ऋण-अनुग्रहादाढ्य-वणिग्वती ।। ०७.११.२१ ।।

भूमि-गुणानां अपाश्रयः श्रेयान् ।। ०७.११.२२ ।।

दुर्ग-अपाश्रया पुरुष-अपाश्रया वा भूमिरिति पुरुष-अपाश्रया श्रेयसी ।। ०७.११.२३ ।।

पुरुषवद्धि राज्यं ।। ०७.११.२४ ।।

अपुरुषा गौर्वन्ध्येव किं दुहीत ।। ०७.११.२५ ।।

महा-क्षय-व्यय-निवेशां तु भूमिं अवाप्तु-कामः पूर्वं एव क्रेतारं पणेत दुर्बलं अराज-बीजिनं निरुत्साहं अपक्षं अन्याय-वृत्तिं व्यसनिनं दैव-प्रमाणं यत्-किंचन-कारिणं वा ।। ०७.११.२६ ।।

महा-क्षय-व्यय-निवेशायां हि भूमौ दुर्बलो राज-बीजी निविष्टः सगन्धाभिः प्रकृतिभिः सह क्षय-व्ययेनावसीदति ।। ०७.११.२७ ।।

बलवानराज-बीजी क्षय-व्यय-भयादसगन्धाभिः प्रकृतिभिस्त्यज्यते ।। ०७.११.२८ ।।

निरुत्साहस्तु दण्डवानपि दण्डस्याप्रणेता सदण्डः क्षय-व्ययेनावभज्यते ।। ०७.११.२९ ।।

कोशवानप्यपक्षः क्षय-व्यय-अनुग्रह-हीनत्वान्न कुतश्चित्प्राप्नोति ।। ०७.११.३० ।।

अन्याय-वृत्तिर्निविष्टं अप्युत्थापयेत् ।। ०७.११.३१ ।।

स कथं अनिविष्टं निवेशयेत् ।। ०७.११.३२ ।।

तेन व्यसनी व्याख्यातः ।। ०७.११.३३ ।।

दैव-प्रमाणो मानुष-हीनो निरारम्भो विपन्न-कर्म-आरम्भो वाअवसीदति ।। ०७.११.३४ ।।

यत्-किंचन-कारी न किंचिदासादयति ।। ०७.११.३५ ।।

स चएषां पापिष्ठतमो भवति ।। ०७.११.३६ ।।

"यत्-किंचिद्-आरभमाणो हि विजिगीषोः कदाचिच्छिद्रं आसादयेद्" इत्याचार्याः ।। ०७.११.३७ ।।

यथा छिद्रं तथा विनाशं अप्यासादयेदिति कौटिल्यः ।। ०७.११.३८ ।।

तेषां अलाभे यथा पार्ष्णि-ग्राह-उपग्रहे वक्ष्यामस्तथा भूमिं अवस्थापयेत् ।। ०७.११.३९ ।।

इत्यभिहित-संधिः ।। ०७.११.४० ।।

गुणवतीं आदेयां वा भूमिं बलवता क्रयेण याचितः संधिं अवस्थाप्य दद्यात् ।। ०७.११.४१ ।।

इत्यनिभृत-संधिः ।। ०७.११.४२ ।।

समेन वा याचितः कारणं अवेक्ष्य दद्यात्"प्रत्यादेया मे भूमिर्वश्या वा । अनया प्रतिबद्धः परो मे वश्यो भविष्यति भूमि-विक्रयाद्वा मित्र-हिरण्य-लाभः कार्य-सामर्थ्य-करो मे भविष्यति" इति ।। ०७.११.४३ ।।

तेन हीनः क्रेता व्याख्यातः ।। ०७.११.४४ ।।

एवं मित्रं हिरण्यं च सजनां अजनां च गां । ।। ०७.११.४५अ ब ।।

लभमानोअतिसंधत्ते शास्त्रवित्सामवायिकान् ।। ०७.११.४५च्द् ।।

"त्वं चाहं च दुर्गं कारयावहे" इति कर्म-संधिः ।। ०७.१२.०१ ।।

तयोर्यो दैव-कृतं अविषह्यं अल्प-व्यय-आरम्भं दुर्गं कारयति सोअतिसंधत्ते ।। ०७.१२.०२ ।।

तत्रापि स्थल-नदी-पर्वत-दुर्गाणां उत्तर-उत्तरं श्रेयः ।। ०७.१२.०३ ।।

सेतु-बन्धयोरप्याहार्य-उदकात्सह-उदकः श्रेयान् ।। ०७.१२.०४ ।।

सह-उदकयोरपि प्रभूत-वाप-स्थानः श्रेयान् ।। ०७.१२.०५ ।।

द्रव्य-वनयोरपि यो महत्-सारवद्-द्रव्य-अटवीकं विषय-अन्ते नदी-मातृकं द्रव्य-वनं छेदयति सोअतिसंधत्ते ।। ०७.१२.०६ ।।

नदी-मातृकं हि स्व्-आजीवं अपाश्रयश्चऽपदि भवति ।। ०७.१२.०७ ।।

हस्ति-वनयोरपि यो बहु-शूर-मृगं दुर्बल-प्रतिवेशं-अनन्त-अवक्लेशि विषय-अन्ते हस्ति-वनं बध्नाति सोअतिसंधत्ते ।। ०७.१२.०८ ।।

तत्रापि "बहु-कुण्ठ-अल्प-शूरयोः अल्प-शूरं श्रेयः । शूरेषु हि युद्धम् । अल्पाः शूरा बहूनशूरान्भञ्जन्ति । ते भग्नाः स्व-सैन्य-अवघातिनो भवन्ति" इत्याचार्याः ।। ०७.१२.०९ ।।

नैति कौटिल्यः ।। ०७.१२.१० ।।

कुण्ठा बहवः श्रेयांसः । स्कन्ध-विनियोगादनेकं कर्म कुर्वाणाः स्वेषां अपाश्रयो युद्धे । परेषां दुर्धर्षा विभीषणाश्च ।। ०७.१२.११ ।।

बहुषु हि कुण्ठेषु विनय-कर्मणा शक्यं शौर्यं आधातुम् । न त्वेवाल्पेषु शूरेषु बहुत्वं इति ।। ०७.१२.१२ ।।

खन्योरपि यः प्रभूत-सारां अदुर्ग-मार्गां अल्प-व्यय-आरम्भां खनिं खानयति । सोअतिसंधत्ते ।। ०७.१२.१३ ।।

तत्रापि महा-सारं अल्पं अल्प-सारं वा प्रभूतं इति "महा-सारं अल्पं श्रेयः । वज्र-मणि-मुक्ता-प्रवाल-हेम-रूप्य-धातुर्हि प्रभूतं अल्प-सारं अत्यर्घेण ग्रसते" इत्याचार्याः ।। ०७.१२.१४ ।।

नैति कौटिल्यः ।। ०७.१२.१५ ।।

चिरादल्पो महा-सारस्य क्रेता विद्यते । प्रभूतः सातत्यादल्प-सारस्य ।। ०७.१२.१६ ।।

एतेन वणिक्-पथो व्याख्यातः ।। ०७.१२.१७ ।।

तत्रापि "वारि-स्थल-पथयोर्वारि-पथः श्रेयान् । अल्प-व्यय-व्यायामः प्रभूत-पण्य-उदयश्च" इत्याचार्याः ।। ०७.१२.१८ ।।

नैति कौटिल्यः ।। ०७.१२.१९ ।।

सम्रुद्ध-गतिरसार्वकालिकः प्रकृष्ट-भय-योनिर्निष्प्रतीकारश्च वारि-पथः । विपरीतः स्थल-पथः ।। ०७.१२.२० ।।

वारि-पथे तु कूल-सम्यान-पथयोः कूल-पथः पण्य-पत्तन-बाहुल्यात्श्रेयान् । नदी-पथो वा । सातत्याद्विषह्य-आबाधत्वाच्च ।। ०७.१२.२१ ।।

स्थल-पथेअपि "हैमवतो दक्षिणा-पथात्श्रेयान् । हस्त्य्-अश्व-गन्ध-दन्त-अजिन-रूप्य-सुवर्ण-पण्याः सारवत्तराः" इत्याचार्याः" ।। ०७.१२.२२ ।।

नैति कौटिल्यः ।। ०७.१२.२३ ।।

कम्बल-अजिन-अश्व-पण्य-वर्जाः शङ्ख-वज्र-मणि-मुक्ता-सुवर्ण-पण्याश्च प्रभूततरा दक्षिणा-पथे ।। ०७.१२.२४ ।।

दक्षिणा-पथेअपि बहु-खनिः सार-पण्यः प्रसिद्ध-गतिरल्प-व्यय-व्यायामो वा वणिक्-पथः श्रेयान् | प्रभूत-विषयो वा फल्गु-पुण्यः || ०७.१२.२५ ||

तेन पूर्वः पश्चिमश्च वणिक्-पथो व्याख्यातः || ०७.१२.२६ ||

तत्रापि चक्र-पाद-पथयोश्चक्र-पथो विपुल-आरम्भत्वात्श्रेयान् | देश-काल-सम्भावनो वा खर-उष्ट्र-पथः || ०७.१२.२७ ||

आभ्यां अंस-पथो व्याख्यातः || ०७.१२.२८ ||

पर-कर्म-उदयो नेतुः क्षयो वृद्धिर्विपर्यये || ०७.१२.२९ ||

तुल्ये कर्म-पथे स्थानं ज्ञेयं स्वं विजिगीषुणा || ०७.१२.३० ||

अल्प-आगम-अतिव्ययता क्षयो वृद्धिर्विपर्यये || ०७.१२.३१ ||

समाय-व्ययता स्थानं कर्मसु ज्ञेयं आत्मनः || ०७.१२.३२ ||

तस्मादल्प-व्यय-आरम्भं दुर्ग-आदिषु महा-उदयं || ०७.१२.३३ ||

कर्म लब्ध्वा विशिष्टः स्यादित्युक्ताः कर्म-संधयः || ०७.१२.३४ ||

संहत्यारि-विजिगीष्वोरमित्रयोः पर-अभियोगिनोः पार्ष्णिं गृह्णतोर्यः शक्ति-सम्पन्नस्य पार्ष्णिं गृह्णाति सोअतिसंधत्ते ।। ०७.१३.०१ ।।

शक्ति-सम्पन्नो ह्यमित्रं उच्छिद्य पार्ष्णि-ग्राहं उच्छिन्द्यात् । न हीन-शक्तिरलब्ध-लाभः ।। ०७.१३.०२ ।।

शक्ति-साम्ये यो विपुल-आरम्भस्य पार्ष्णिं गृह्णाति सोअतिसंधत्ते ।। ०७.१३.०३ ।।

विपुल-आरम्भो ह्यमित्रं उच्छिद्य पार्ष्णि-ग्राहं उच्छिन्द्यात् । नाल्प-आरम्भः सक्त-चक्रः ।। ०७.१३.०४ ।।

आरम्भ-साम्ये यः सर्व-संदोहेन प्रयातस्य पार्ष्णिं गृह्णाति सोअतिसंधत्ते ।। ०७.१३.०५ ।।

शून्य-मूलो ह्यस्य सुकरो भवति । नैक-देश-बल-प्रयातः कृत-पार्ष्णि-प्रतिविधानः ।। ०७.१३.०६ ।।

बल-उपादान-साम्ये यश्चल-अमित्रं प्रयातस्य पार्ष्णिं गृह्णाति सोअतिसंधत्ते ।। ०७.१३.०७ ।।

चल-अमित्रं प्रयातो हि सुखेनावाप्त-सिद्धिः पार्ष्णि-ग्राहं उच्छिन्द्यात् । न स्थित-अमित्रं प्रयातः ।। ०७.१३.०८ ।।

असौ हि दुर्ग-प्रतिहतः पार्ष्णि-ग्राहे च प्रतिनिवृत्तः स्थितेनामित्रेणावगृह्यते ।। ०७.१३.०९ ।।

तेन पूर्वे व्याख्याताः ।। ०७.१३.१० ।।

शत्रु-साम्ये यो धार्मिक-अभियोगिनः पार्ष्णिं गृह्णाति सोअतिसंधत्ते ।। ०७.१३.११ ।।

धार्मिक-अभियोगी हि स्वेषां परेषां च द्वेष्यो भवति । अधार्मिक-अभियोगी सम्प्रियः ।। ०७.१३.१२ ।।

तेन मूल-हर-तादात्विक-कदर्य-अभियोगिनां पार्ष्णि-ग्रहणं व्याख्यातं ।। ०७.१३.१३ ।।

मित्र-अभियोगिनोः पार्ष्णि-ग्रहणे त एव हेतवः ।। ०७.१३.१४ ।।

मित्रं अमित्रं चाभियुञ्जानयोर्यो मित्र-अभियोगिनः पार्ष्णिं गृह्णाति सोअतिसंधत्ते ।। ०७.१३.१५ ।।

मित्र-अभियोगी हि सुखेनावाप्त-सिद्धिः पार्ष्णि-ग्राहं उच्छिन्द्यात् ।। ०७.१३.१६ ।।

सुकरो हि मित्रेण संधिर्नामित्रेण ।। ०७.१३.१७ ।।

मित्रं अमित्रं चौद्धरतोर्योअमित्र-उद्धारिणः पार्ष्णिं गृह्णाति सोअतिसंधत्ते ।। ०७.१३.१८ ।।

वृद्ध-मित्रो ह्यमित्र-उद्धारी पार्ष्णि-ग्राहं उच्छिन्द्यात् । नैतरः स्व-पक्ष-उपघाती ।। ०७.१३.१९ ।।

तयोरलब्ध-लाभ-अपगमने यस्य-अमित्रो महतो लाभाद्वियुक्तः क्षय-व्यय-अधिको वा स पार्ष्णि-ग्राहोअतिसंधत्ते ।। ०७.१३.२० ।।

लब्ध-लाभ-अपगमने यस्यामित्रो लाभेन शक्त्या हीनः स पार्ष्णि-ग्राहोअतिसंधत्ते । यस्य वा यातव्यः शत्रोर्विग्रह-अपकार-समर्थः स्यात् ।। ०७.१३.२१ ।।

पार्ष्णि-ग्राहयोरपि यः शक्य-आरम्भ-बल-उपादान-अधिकः स्थित-शत्रुः पार्श्व-स्थायी वा सोअतिसंधत्ते ।। ०७.१३.२२ ।।

पार्श्व-स्थायी हि यातव्य-अभिसारो मूल-आबाधकश्च भवति । मूल-आबाधक एव पश्चात्-स्थायी ।। ०७.१३.२३ ।।

पार्ष्णि-ग्राहास्त्रयो ज्ञेयाः शत्रोश्चेष्टा-निरोधकाः । ।। ०७.१३.२४अ ब ।।

सामन्तः पृष्ठतो वर्गः प्रतिवेशौ च पार्श्वयोः ।। ०७.१३.२४च्द् ।।

अरेर्नेतुश्च मध्यस्थो दुर्बलोअन्तर्धिरुच्यते । ।। ०७.१३.२५अ ब ।।

प्रतिघातो बलवतो दुर्ग-अटव्य्-अपसारवान् ।। ०७.१३.२५च्द् ।।

मध्यमं त्वरि-विजिगीष्वोर्लिप्समानयोर्मध्यमस्य पार्ष्णिं गृह्णतोर्लब्ध-लाभ-अपगमने यो मध्यमं मित्राद्वियोजयत्यमित्रं च मित्रं आप्नोति सोअतिसंधत्ते ।। ०७.१३.२६ ।।

संधेयश्च शत्रुरुपकुर्वाणो । न मित्रं मित्र-भावादुत्क्रान्तं ।। ०७.१३.२७ ।।

तेनौदासीन-लिप्सा व्याख्याता ।। ०७.१३.२८ ।।

"पार्ष्णि-ग्रहण-अभियानयोस्तु मन्त्र-युद्धादभ्युच्चयः ।। ०७.१३.२९ ।।

व्यायाम-युद्धे हि क्षय-व्ययाभ्यां उभयोरवृद्धिः ।। कश्०७.१३.३० ।।

जित्वाअपि हि क्षिण-दण्ड-कोशः पराजितो भवति" इत्याचार्याः ।। ०७.१३.३१ ।।

नैति कौटिल्यः ।। ०७.१३.३२ ।।

सुमहताअपि क्षय-व्ययेन शत्रु-विनाशोअभ्युपगन्तव्यः ।। ०७.१३.३३ ।।

तुल्ये क्षय-व्यये यः पुरस्ताद्दूष्य-बलं घातयित्वा निह्शल्यः पश्चाद्वश्य-बलो युध्येत सोअतिसंधत्ते ।। ०७.१३.३४ ।।

द्वयोरपि पुरस्ताद्दूष्य-बल-घातिनोर्यो बहुलतरं शक्तिमत्तरं अत्यन्त-दूष्यं च घातयेत्सोअतिसंधत्ते ।। ०७.१३.३५ ।।

तेनामित्र-अटवी-बल-घातो व्याख्यातः ।। ०७.१३.३६ ।।

पार्ष्णि-ग्राहोअभियोक्ता वा यातव्यो वा यदा भवेत् । ।। ०७.१३.३७अ ब ।।

विजिगीषुस्तदा तत्र नेत्रं एतत्समाचरेत् ।। ०७.१३.३७च्द् ।।

पार्ष्णि-ग्राहो भवेन्नेता शत्रोर्मित्र-अभियोगिनः । ।। ०७.१३.३८अ ब ।।

विग्राह्य पूर्वं आक्रन्दं पार्ष्णि-ग्राह-अभिसारिणा ।। ०७.१३.३८च्द् ।।

आक्रन्देनाभियुञ्जानः पार्ष्णि-ग्राहं निवारयेत् । ।। ०७.१३.३९अ ब ।।

तथाआक्रन्द-अभिसारेण पार्ष्णि-ग्राह-अभिसारिणं ।। ०७.१३.३९च्द् ।।

अरि-मित्रेण मित्रं च पुरस्तादवघट्टयेत् । ।। ०७.१३.४०अ ब ।।

मित्र-मित्रं अरेश्चापि मित्र-मित्रेण वारयेत् ।। ०७.१३.४०च्द् ।।

मित्रेण ग्राहयेत्पार्ष्णिं अभियुक्तोअभियोगिनः । ।। ०७.१३.४१अ ब ।।

मित्र-मित्रेण चऽक्रन्दं पार्ष्णि-ग्राहान्निवारयेत् ।। ०७.१३.४१च्द् ।।

एवं मण्डलं आत्म-अर्थं विजिगीषुर्निवेशयेत् । ।। ०७.१३.४२अ ब ।।

पृष्ठतश्च पुरस्ताच्च मित्र-प्रकृति-सम्पदा ।। ०७.१३.४२च्द् ।।

कृत्स्ने च मण्डले नित्यं दूतान्गूढांश्च वासयेत् । ।। ०७.१३.४३अ ब ।।

मित्र-भूतः सपत्नानां हत्वा हत्वा च संवृतः ।। ०७.१३.४३च्द् ।।

असंवृतस्य कार्याणि प्राप्तान्यपि विशेषतः । ।। ०७.१३.४४अ ब ।।

निहसंशयं विपद्यन्ते भिन्न-प्लव इवौदधौ ।। ०७.१३.४४च्द् ।।

सामवायिकैरेवं अभियुक्तो विजिगीषुर्यस्तेषां प्रधानस्तं ब्रूयात्"त्वया मे संधिः । इदं हिरण्यम् । अहं च मित्रम् । द्वि-गुणा ते वृद्धिः । नार्हस्यात्म-क्षयेण मित्र-मुखानमित्रान्वर्धयितुम् । एते हि वृद्धास्त्वां एव परिभविष्यन्ति" इति ।। ०७.१४.०१ ।।

भेदं वा ब्रूयात्"अनपकारो यथाअहं एतैः सम्भूयाभियुक्तस्तथा त्वां अप्येते संहित-बलाः स्वस्था व्यसने वाअभियोक्ष्यन्ते । बलं हि चित्तं विकरोति । तदेषां विघातय" इति ।। ०७.१४.०२ ।।

भिन्नेषु प्रधानं उपगृह्य हीनेषु विक्रमयेत् । हीनाननुग्राह्य वा प्रधाने । यथा वा श्रेयोअभिमन्येत तथा ।। ०७.१४.०३ ।।

वैरं वा परैर्ग्राहयित्वा विसंवादयेत् ।। ०७.१४.०४ ।।

फल-भूयस्त्वेन वा प्रधानं उपजाप्य संधिं कारयेत् ।। ०७.१४.०५ ।।

अथौभय-वेतनाः फल-भूयस्त्वं दर्शयन्तः सामवायिकान्"अतिसंहिताः स्थ" इत्युद्दूषयेयुः ।। ०७.१४.०६ ।।

दुष्टेषु संधिं दूषयेत् ।। ०७.१४.०७ ।।

अथौभय-वेतना भूयो भेदं एषां कुर्युः "एवं तद्यदस्माभिर्दर्शितम्" इति ।। ०७.१४.०८ ।।

भिन्नेष्वन्यतम-उपग्रहेण चेष्टेत ।। ०७.१४.०९ ।।

प्रधान-अभावे सामवायिकानां उत्साहयितारं स्थिर-कर्माणं अनुरक्त-प्रकृक्तिं लोभाद्भयाद्वा संघातं उपागतं विजिगीषोर्भीतं राज्य-प्रतिसम्बद्धं मित्रं चल-अमित्रं वा पूर्वानुत्तर-अभावे साधयेत् उत्साहयितारं आत्म-निसर्गेण । स्थिर-कर्माणं सान्त्व-प्रणिपातेन । अनुरक्त-प्रकृतिं कन्या-दान-यापनाभ्याम् । लुब्धं अंश-द्वैगुण्येन । भीतं एभ्यः कोश-दण्ड-अनुग्रहेण । स्वतो भीतं विश्वास्य प्रतिभू-प्रदानेन । राज्य-प्रतिसम्बद्धं एकी-भाव-उपगमनेन । मित्रं उभयतः प्रिय-हिताभ्याम् । उपकार-त्यागेन वा । चल-अमित्रं अवधृतं अनपकार-उपकाराभ्याम् ।। ०७.१४.१० ।।

यो वा यथाअयोगं भजेत तं तथा साधयेत् । साम-दान-भेद-दण्डैर्वा यथाआपत्सु व्याख्यास्यामः ।। ०७.१४.११ ।।

व्यसन-उपघात-त्वरितो वा कोश-दण्डाभ्यां देशे काले कार्ये वाअवधृतं संधिं उपेयात् ।। ०७.१४.१२ ।।

कृत-संधिर्हीनं आत्मानं प्रतिकुर्वीत ।। ०७.१४.१३ ।।

पक्षे हीनो बन्धु-मित्र-पक्षं कुर्वीत । दुर्गं अविषह्यं वा ।। ०७.१४.१४ ।।

दुर्ग-मित्र-प्रतिष्टब्धो हि स्वेषां परेषां च पूज्यो भवति ।। ०७.१४.१५ ।।

मन्त्र-शक्ति-हीनः प्राज्ञ-पुरुष-उपचयं विद्या-वृद्ध-सम्योगं वा कुर्वीत ।। ०७.१४.१६ ।।

तथा हि सद्यः श्रेयः प्राप्नोति ।। ०७.१४.१७ ।।

प्रभाव-हीनः प्रकृति-योग-क्षेम-सिद्धौ यतेत ।। ०७.१४.१८ ।।

जन-पदः सर्व-कर्मणां योनिः । ततः प्रभावः ।। ०७.१४.१९ ।।

तस्य स्थानं आत्मनश्चऽपदि दुर्गं ।। ०७.१४.२० ।।

सेतु-बन्धः सस्यानां योनिः ।। ०७.१४.२१ ।।

नित्य-अनुषक्तो हि वर्ष-गुण-लाभः सेतु-वापेषु ।। ०७.१४.२२ ।।

वणिक्-पथः पर-अतिसंधानस्य योनिः ।। ०७.१४.२३ ।।

वणिक्-पथेन हि दण्ड-गूढ-पुरुष-अतिनयनं शस्त्र-आवरण-यान-वाहन-क्रयश्च क्रियते । प्रवेशो निर्णयनं च ।। ०७.१४.२४ ।।

खनिः संग्राम-उपकरणानां योनिः । द्रव्य-वनं दुर्ग-कर्मणां यान-रथयोश्च । हस्ति-वनं हस्तिनाम् । गव-अश्व-खर-उष्ट्राणां च व्रजः ।। ०७.१४.२५ ।।

तेषां अलाभे बन्धु-मित्र-कुलेभ्यः समार्जनं ।। ०७.१४.२६ ।।

उत्साह-हीनः श्रेणी-प्रवीर-पुरुषाणां चोर-गण-आटविक-म्लेच्छ-जातीनां पर-अपकारिणां गूढ-पुरुषाणां च यथा-लाभ्भं उपचयं कुर्वीत ।। ०७.१४.२७ ।।

पर-मिश्र-अप्रतीकारं आबलीयसं वा परेषु प्रयुञ्जीत ।। ०७.१४.२८ ।।

एवं पक्षेण मन्त्रेण द्रव्येण च बलेन च । ।। ०७.१४.२९अ ब ।।

सम्पन्नः प्रतिनिर्गच्छेत्पर-अवग्रहं आत्मनः ।। ०७.१४.२९च्द् ।।

दुर्बलो राजा बलवताअभियुक्तस्तद्-विशिष्ट-बलं आश्रयेत यं इतरो मन्त्र-शक्त्या नातिसंदध्यात् ।। ०७.१५.०१ ।।

तुल्य-मन्त्र-शक्तीनां आयत्त-सम्पदो वृद्ध-सम्योगाद्वा विशेषः ।। ०७.१५.०२ ।।

विशिष्ट-बल-अभावे सम-बलैस्तुल्य-बल-संघैर्वा बलवतः सम्भूय तिष्ठेद्यान्न मन्त्र-प्रभाव-शक्तिभ्यां अतिसंदध्यात् ।। ०७.१५.०३ ।।

तुल्य-मन्त्र-प्रभाव-शक्तीनां विपुल-आरम्भतो विशेषः ।। ०७.१५.०४ ।।

सम-बल-अभावे हीन-बलैः शुचिभिरुत्साहिभिः प्रत्यनीक-भूतैर्बलवतः सम्भूय तिष्ठेद्यान्न मन्त्र-प्रभाव-उत्साह-शक्तिभिरतिसंदध्यात् ।। ०७.१५.०५ ।।

तुल्य-उत्साह-शक्तीनां स्व-युद्ध-भूमि-लाभाद्विशेषः ।। ०७.१५.०६ ।।

तुल्य-भूमीनां स्व-युद्ध-काल-लाभाद्विशेषः ।। ०७.१५.०७ ।।

तुल्य-देश-कालानां युग्य-शस्त्र-आवरणतो विशेषः ।। ०७.१५.०८ ।।

सहाय-अभावे दुर्गं आश्रयेत यत्रामित्रः प्रभूत-सैन्योअपि भक्त-यवस-इन्धन-उदक-उपरोधं न कुर्यात्स्वयं च क्षय-व्ययाभ्यां युज्येत ।। ०७.१५.०९ ।।

तुल्य-दुर्गाणां निचय-अपसारतो विशेषः ।। ०७.१५.१० ।।

निचय-अपसार-सम्पन्नं हि मनुष्य-दुर्गं इच्छेदिति कौटिल्यः ०७.१५.१२अ ।तदेभिः कार्णैराश्रयेत "पार्ष्णि-ग्राहं आसारं मध्यमं उदासीनं वा प्रतिपादयिष्यामि । सामन्त-आटविक-तत्-कुलीन-अपरुद्धानां अन्यतमेनास्य राज्यं हारयिष्यामि घातयिष्यामि वा ।। ०७.१५.११ ।।

कृत्य-पक्ष-उपग्रहेण वाअस्य दुर्गे राष्ट्रे स्कन्ध-आवारे वा कोपं समुत्थापयिष्यामि । शस्त्र-अग्नि-रस-प्रणिधानैरौपनिषदिकैर्वा यथा-इष्टं आसन्नं हनिष्यामि ।। ०७.१५.१२ब ।।

स्वयं-अधिष्ठितेन वा योग-प्रणिधानेन क्षय-व्ययं एनं उपनेष्यामि । क्षय-व्यय-प्रवास-उपतप्ते वाअस्य मित्र-वर्गे सैन्ये वा क्रमेणौपजापं प्राप्स्यामि ।। ०७.१५.१२क ।।

वीवध-आसार-प्रसार-वधेन वाअस्य स्कन्ध-आवार-अवग्रहं करिष्यामि । दण्ड-उपनयेन वाअस्य रन्ध्रं उत्थाप्य सर्व-संदोहेन प्रहरिष्यामि । प्रतिहत-उत्साहेन वा यथा-इष्टं संधिं अवाप्स्यामि । मयि प्रतिबद्धस्य वा सर्वतः कोपाः समुत्थास्यन्ति ।। ०७.१५.१२ड ।।

निरासारं वाअस्य मूलं मित्र-अटवी-दण्डैरुद्घातयिष्यामि । महतो वा देशस्य योग-क्षेमं इहस्थः पालयिष्यामि । स्व-विक्षिप्तं मित्र-विक्षिप्तं वा मे सैन्यं इहस्थस्यएकस्थं अविषह्यं भविष्यति । निम्न-खात-रात्रि-युद्ध-विशारदं वा मे सैन्यं पथ्य-आबाध-मुक्तं आसन्ने कर्म करिष्यति ।। ०७.१५.१२ए ।।

विरुद्ध-देश-कालं इह-आगतो वा स्वयं एव क्षय-व्ययाभ्यां न भविष्यति । महा-क्षय-व्यय-अभिगम्योअयं देशो दुर्ग-अटव्य्-अपसार-बाहुल्यात् ।। ०७.१५.१२फ़् ।।

परेषां व्याधि-प्रायः सैन्य-व्यायामानां अलब्ध-भौमश्च । तं आपद्-गतः प्रवेक्ष्यति । प्रविष्टो वा न निर्गमिष्यति" इति ।। ०७.१५.१२ग् ।।

"कारण-अभावे बल-समुच्छ्रये वा परस्य दुर्गं उन्मुच्यापगच्छेत् ।। ०७.१५.१३ ।।

अग्नि-पतङ्गवदमित्रे वा प्रविशेत् ।। ०७.१५.१४ ।।

अन्यतर-सिद्धिर्हि त्यक्त-आत्मनो भवति" इत्याचार्याः ।। ०७.१५.१५ ।।

नैति कौटिल्यः ।। ०७.१५.१६ ।।

संधेयतां आत्मनः परस्य चौपलभ्य संदधीत ।। ०७.१५.१७ ।।

विपर्यये विक्रमेण संधिं अपसारं वा लिप्सेत ।। ०७.१५.१८ ।।

संधेयस्य वा दूतं प्रेषयेत् ।। ०७.१५.१९ ।।

तेन वा प्रेषितं अर्थ-मानाभ्यां सत्कृत्य ब्रूयात्"इदं राज्ञः पण्य-अगारम् । इदं देवी-कुमाराणाम् । देवी-कुमार-वचनात् । इदं राज्यं अहं च त्वद्-अर्पणः" इति ।। ०७.१५.२० ।।

लब्ध-संश्रयः समय-आचारिकवद्भर्तरि वर्तेत ।। ०७.१५.२१ ।।

दुर्ग-आदीनि च कर्माणि आवाह-विवाह-पुत्र-अभिषेक-अश्व-पण्य-हस्ति-ग्रहण-सत्त्र-यात्रा-विहार-गमनानि चानुज्ञातः कुर्वीत ।। ०७.१५.२२ ।।

स्व-भूम्य्-अवस्थित-प्रकृति-संधिं उपघातं अपसृतेषु वा सर्वं अनुज्ञातः कुर्वीत ।। ०७.१५.२३ ।।

दुष्ट-पौर-जानपदो वा न्याय-वृत्तिरन्यां भूमिं याचेत ।। ०७.१५.२४ ।।

दुष्यवदुपांशु-दण्डेन वा प्रतिकुर्वीत ।। ०७.१५.२५ ।।

उचितां वा मित्राद्भूमिं दीयमानां न प्रतिगृह्णीयात् ।। ०७.१५.२६ ।।

मन्त्रि-पुरोहित-सेना-पति-युव-राजानां अन्यतमं अदृश्यमाने भर्तरि पश्येत् । यथा-शक्ति चौपकुर्यात् ।। ०७.१५.२७ ।।

दैवत-स्वस्ति-वाचनेषु तत्-परा आशिषो वाचयेत् ।। ०७.१५.२८ ।।

सर्वत्रऽत्म-निसर्गं गुणं ब्रूयात् ।। ०७.१५.२९ ।।

सम्युक्त-बलवत्-सेवी विरुद्धः शङ्कित-आदिभिः । ।। ०७.१५.३०अ ब ।।

वर्तेत दण्ड-उपनतो भर्तर्येवं अवस्थितः ।। ०७.१५.३०च्द् ।।

अनुज्ञात-संधि-पण-उद्वेग-करं बलवान्विजिगीषमाणो यतः स्व-भूमिः स्व-ऋतु-वृत्तिश्च स्व-सैन्यानाम् । अदुर्ग-अपसारः शत्रुर्-अपार्ष्णिरनासारश्च । ततो यायात् ।। ०७.१६.०१ ।।

विपर्यये कृत-प्रतीकारो यायात् ।। ०७.१६.०२ ।।

साम-दानाभ्यां दुर्बलानुपनमयेत् । भेद-दण्डाभ्यां बलवतः ।। ०७.१६.०३ ।।

नियोग-विकल्प-समुच्चयैश्चौपायानां अनन्तर-एक-अन्तराः प्रकृतीः साधयेत् ।। ०७.१६.०४ ।।

ग्राम-अरण्य-उपजीवि-व्रज-वणिक्-पथ-अनुपालनं उज्झित-अपसृत-अपकारिणां चार्पणं इति सान्त्वं आचरेत् ।। ०७.१६.०५ ।।

भूमि-द्रव्य-कन्या-दानं अभयस्य चैति दानं आचरेत् ।। ०७.१६.०६ ।।

सामन्त-आटविक-तत्-कुलीन-अपरुद्धानां अन्यतम-उपग्रहेण कोश-दण्ड-भूमि-दाय-याचनं इति भेदं आचरेत् ।। ०७.१६.०७ ।।

प्रकाश-कूट-तूष्णीं-युद्ध-दुर्ग-लम्भ-उपायैरमित्र-प्रग्रहणं इति दण्डं आचरेत् ।। ०७.१६.०८ ।।

एवं उत्साहवतो दण्ड-उपकारिणः स्थापयेत् । स्व-प्रभाववतः कोश-उपकारिणः । प्रज्ञावतो भूम्य्-उपकारिणः ।। ०७.१६.०९ ।।

तेषां पण्य-पत्तन-ग्राम-खनि-संजातेन रत्न-सार-फल्गु-कुप्येन द्रव्य-हस्ति-वन-व्रज-समुत्थेन यान-वाहनेन वा यद्बहुश उपकरोति तच्चित्र-भोगं ।। ०७.१६.१० ।।

यद्दण्डेन कोशेन वा महदुपकरोति तन्महा-भोगं ।। ०७.१६.११ ।।

यद्दण्ड-कोश-भूमीभिरुपकरोति तत्सर्व-भोगं ।। ०७.१६.१२ ।।

यदमित्रं एकतः प्रतिकरोति तदेकतो-भोगि ।। ०७.१६.१३ ।।

यदमित्रं आसारं चौभयतः प्रतिकरोति तदुभयतो-भोगि ।। ०७.१६.१४ ।।

यदमित्र-आसार-प्रतिवेश-आटविकान्सर्वतः प्रतिकरोति तत्सर्वतो-भोगि ।। ०७.१६.१५ ।।

पार्ष्णि-ग्राहश्चऽटविकः शत्रु-मुख्यः शत्रुर्वा भूमि-दान-साध्यः कश्चिदासाद्येत । निर्गुणया भूम्याएनं उपग्राहयेत् । अप्रतिसम्बद्धया दुर्गस्थम् । निरुपजीव्ययाआटविकं ।। ०७.१६.१६अ ।।

प्रत्यादेयया तत्-कुलीनं शत्रोः । अपच्छिन्नया शत्रोरपरुद्धं नित्य-अमित्रया श्रेणी-बलम् । बलवत्-सामन्तया संहत-बलम् । उभाभ्यां युद्धे प्रतिलोमम् । ।। ०७.१६.१६ब ।।

अलब्ध-व्यायामयाउत्साहिनम् । शून्ययाअरि-पक्षीयम् । कर्शितयाअपवाहितम् । महा-क्षय-व्यय-निवेशया गत-प्रत्यागतम् । अनपाश्रयया प्रत्यपसृतम् । परेणानधिवास्यया स्वयं एव भर्तारं उपग्राहयेत् ।। ०७.१६.१६क ।।

तेषां महा-उपकारं निर्विकारं चानुवर्तयेत् ।। ०७.१६.१७ ।।

प्रतिलोमं उपांशुना साधयेत् ।। ०७.१६.१८ ।।

उपकारिणं उपकार-शक्त्या तोषयेत् ।। ०७.१६.१९ ।।

प्रयासतश्चार्थ-मानौ कुर्याद् । व्यसनेषु चानुग्रहं ।। ०७.१६.२० ।।

स्वयं-आगतानां यथा-इष्ट-दर्शनं प्रतिविधानं च कुर्यात् ।। ०७.१६.२१ ।।

परिभव-उपघात-कुत्स-अतिवादांश्चएषु न प्रयुञ्जीत ।। ०७.१६.२२ ।।

दत्त्वा चाभयं पिताइवानुगृह्णीयात् ।। ०७.१६.२३ ।।

यश्चास्यापकुर्यात्तद्दोषं अभिविख्याप्य प्रकाशं एनं घातयेत् ।। ०७.१६.२४ ।।

पर-उद्वेग-कारणाद्वा दाण्डकर्मिकवच्चेष्टेत ।। ०७.१६.२५ ।।

न च हतस्य भूमि-द्रव्य-पुत्र-दारानभिमन्येत ।। ०७.१६.२६ ।।

कुल्यानप्यस्य स्वेषु पात्रेषु स्थापयेत् ।। ०७.१६.२७ ।।

कर्मणि मृतस्य पुत्रं राज्ये स्थापयेत् ।। ०७.१६.२८ ।।

एवं अस्य दण्ड-उपनताः पुत्र-पौत्राननुवर्तन्ते ।। ०७.१६.२९ ।।

यस्तुउपनतान्हत्वा बद्ध्वा वा भूमि-द्रव्य-पुत्र-दारानभिमन्येत तस्यौद्विग्नं मण्डलं अभावायौत्तिष्ठते ।। ०७.१६.३० ।।

ये चास्यामात्याः स्व-भूमिष्वायत्तास्ते चास्यौद्विग्ना मण्डलं आश्रयन्ते ।। ०७.१६.३१ ।।

स्वयं वा राज्यं प्राणान्वाअस्याभिमन्यन्ते ।। ०७.१६.३२ ।।

स्व-भूमिषु च राजानस्तस्मात्साम्नाअनुपालिताः । ।। ०७.१६.३३अ ब ।।

भवन्त्यनुगुणा राज्ञः पुत्र-पौत्र-अनुवर्तिनः ।। ०७.१६.३३च्द् ।।

शमः संधिः समाधिरित्येकोअर्थः ।। ०७.१७.०१ ।।

राज्ञां विश्वास-उपगमः शमः संधिः समाधिरिति ।। ०७.१७.०२ ।।

"सत्यं शपथो वा चलः संधिः । प्रतिभूः प्रतिग्रहो वा स्थावरः" इत्याचार्याः ।। ०७.१७.०३ ।।

नैति कौटिल्यः ।। ०७.१७.०४ ।।

सत्यं शपथो वा परत्रैह च स्थावरः संधिः । इह-अर्थ एव प्रतिभूः प्रतिग्रहो वा बल-अपेक्षः ।। ०७.१७.०५ ।।

"संहिताः स्मः" इति सत्य-संधाः पूर्वे राजानः सत्येन संदधिरे ।। ०७.१७.०६ ।।

तस्यातिक्रमे शपथेन अग्न्य्-उदक-सीता-प्राकार-लोष्ट-हस्ति-स्कन्ध-अश्व-पृष्ट-रथ-उपस्थ-शस्त्र-रत्न-बीज-गन्ध-रस-सुवर्ण-हिरण्यान्यालेभिरे "हन्युरेतानि त्यजेयुश्चएनं यः शपथं अतिक्रामेत्" इति ।। ०७.१७.०७ ।।

शपथ-अतिक्रमे महतां तपस्विनां मुख्यानां वा प्रातिभाव्य-बन्धः प्रतिभूः ।। ०७.१७.०८ ।।

तस्मिन्यः पर-अवग्रह-समर्थान्प्रतिभुवो गृह्णाति । सोअतिसंधत्ते ।। ०७.१७.०९ ।।

विपरीतोअतिसंधीयते ।। ०७.१७.१० ।।

बन्धु-मुख्य-प्रग्रहः प्रतिग्रहः ।। ०७.१७.११ ।।

तस्मिन्यो दूष्य-अमात्यं दूष्य-अपत्यं वा ददाति । सोअतिसंधत्ते ।। ०७.१७.१२ ।।

विपरीतोअतिसंधीयते ।। ०७.१७.१३ ।।

प्रतिग्रह-ग्रहण-विश्वस्तस्य हि परश्छिद्रेषु निरपेक्षः प्रहरति ।। ०७.१७.१४ ।।

अपत्य-समाधौ तु कन्या-पुत्र-दाने ददत्तु कन्यां अतिसंधत्ते ।। ०७.१७.१५ ।।

कन्या ह्यदायादा परेषां एवार्थायऽक्लेश्या(?) च ।। ०७.१७.१६ ।।

विपरीतः पुत्रः ।। ०७.१७.१७ ।।

पुत्रयोरपि यो जात्यं प्राज्ञं शूरं कृत-अस्त्रं एक-पुत्रं वा ददाति सोअतिसंधीयते ।। ०७.१७.१८ ।।

विपरीतोअतिसंधत्ते ।। ०७.१७.१९ ।।

जात्यादजात्यो हि लुप्त-दायाद-संतानत्वादाधातुं श्रेयान् । प्राज्ञादप्राज्ञो मन्त्र-शक्ति-लोपात् । शूरादशूर उत्साह-शक्ति-लोपात् । कृत-अस्त्रादकृत-अस्त्रः प्रहर्तव्य-सम्पल्-लोपात् । एक-पुत्रादनेक-पुत्रो निरपेक्षत्वात् ।। ०७.१७.२० ।।

जात्य-प्राज्ञयोर्जात्यं अप्राज्ञं ऐश्वर्य-प्रकृतिरनुवर्तते । प्राज्ञं अजात्यं मन्त्र-अधिकारः ।। ०७.१७.२१ ।।

मन्त्र-अधिकारेअपि वृद्ध-सम्योगाज्जात्यः प्राज्ञं अतिसंधत्ते ।। ०७.१७.२२ ।।

प्राज्ञ-शूरयोः प्राज्ञं अशूरं मति-कर्मणां योगोअनुवर्तते । शूरं अप्राज्ञं विक्रम-अधिकारः ।। ०७.१७.२३ ।।

विक्रम-अधिकारेअपि हस्तिनं इव लुब्धकः प्राज्ञः शूरं अतिसंधत्तेश् ।। ०७.१७.२४ ।।

शूर-कृत-अस्त्रयोः शूरं अकृत-अस्त्रं विक्रम-व्यवसायोअनुवर्तते । कृत-अस्त्रं अशूरं लक्ष्य-लम्भ-अधिकारः ।। ०७.१७.२५ ।।

लक्ष्य-लम्भ-अधिकारेअपि स्थैर्य-प्रतिपत्त्य्-असम्मोषैः शूरः कृत-अस्त्रं अतिसंधत्ते ।। ०७.१७.२६ ।।

बह्व्-एक-पुत्रयोर्बहु-पुत्र एकं दत्त्वा शेष-प्रतिष्टब्धः संधिं अतिक्रामति । नैतरः ।। ०७.१७.२७ ।।

पुत्र-सर्व-स्व-दाने संधिश्चेत्पुत्र-फलतो विशेषः ।। ०७.१७.२८ ।।

सम-फलयोः शक्त-प्रजननतो विशेषः ।। ०७.१७.२९ ।।

शक्त-प्रजननयोरप्युपस्थित-प्रजननतो विशेषः ।। ०७.१७.३० ।।

शक्तिमत्येक-पुत्रे तु लुप्त-पुत्र-उत्पत्तिरात्मानं आदध्यात् । न चएक-पुत्रं इति ।। ०७.१७.३१ ।।

अभ्युच्चीयमानः समाधि-मोक्षं कारयेत् ।। ०७.१७.३२ ।।

कुमार-आसन्नाः सत्त्रिणः कारु-शिल्पि-व्यञ्जनाः कर्माणि कुर्वाणाः सुरुङ्गया रात्रावुपखानयित्वा कुमारं अपहरेयुः ।। ०७.१७.३३ ।।

नटनर्तक-गायन-वादक-वाग्-जीवन-कुशीलव-प्लवक-सौभिका वा पूर्व-प्रणिहिताः परं उपतिष्ठेरन् ।। ०७.१७.३४ ।।

ते कुमारं परं-परयाउपतिष्ठेरन् ।। ०७.१७.३५ ।।

तेषां अनियत-काल-प्रवेश-स्थान-निर्गमनानि स्थापयेत् ।। ०७.१७.३६ ।।

ततस्तद्-व्यञ्जनो वा रात्रौ प्रतिष्ठेत ।। ०७.१७.३७ ।।

तेन रूप-आजीवा भार्या-व्यञ्जनाश्च व्याख्याताः ।। ०७.१७.३८ ।।

तेषां वा तूर्य-भाण्ड-फेलां गृहीत्वा निर्गच्छेत् ।। ०७.१७.३९ ।।

सूद-आरालिक-स्नापक-संवाहक-आस्तरक-कल्पक-प्रसाधक-उदक-परिचारकैर्वा द्रव्य-वस्त्र-भाण्ड-फेला-शयन-आसन-सम्भोगैर्निर्ह्रियेत ।। ०७.१७.४० ।।

परिचारकच्-छद्मना वा किंचिदरूप-वेलायां आदाय निर्गच्छेत् । सुरुङ्गा-मुखेन वा निशा-उपहारेण ।। ०७.१७.४१ ।।

तोय-आशये वा वारुणं योगं आतिष्ठेत् ।। ०७.१७.४२ ।।

वैदेहक-व्यञ्जना वा पक्व-अन्न-फल-व्यवहारेणऽरक्षिषु रसं उपचारयेयुः ।। ०७.१७.४३ ।।

दैवत-उपहार-श्राद्ध-प्रहवण-निमित्तं आरक्षिषु मदन-योग-युक्तं अन्न-पानं रसं वा प्रयुज्यापगच्छेत् । आरक्षक-प्रोत्साहनेन वा ।। ०७.१७.४४ ।।

नागरक-कुशीलव-चिकित्सक-आपूपिक-व्यञ्जना वा रात्रौ समृद्ध-गृहाण्यादीपयेयुः आरक्षिणां वा ।। ०७.१७.४५ ।।

वैदेहक-व्यञ्जना वा पण्य-संस्थां आदीपयेयुः ।। ०७.१७.४६ ।।

अन्यद्वा शरीरं निक्षिप्य स्व-गृहं आदीपयेदनुपात-भयात् ।। ०७.१७.४७ ।।

ततः संधिच्-छेद-खात-सुरुङ्गाभिरपगच्छेत् ।। ०७.१७.४८ ।।

काच-कुम्भ-भाण्ड-भार-व्यञ्जनो वा रात्रौ प्रतिष्ठेत ।। ०७.१७.४९ ।।

मुण्ड-जटिलानां प्रवासनान्यनुप्रविष्टो वा रात्रौ तद्-व्यञ्जनः प्रतिष्ठेत । विरूप-व्याधि-करण-अरण्य-चरच्-छद्मनां अन्यतमेन वा ।। ०७.१७.५० ।।

प्रेत-व्यञ्जनो वा गूढैर्निर्ह्रियेत ।। ०७.१७.५१ ।।

प्रेतं वा स्त्री-वेषेणानुगच्छेत् ।। ०७.१७.५२ ।।

वन-चर-व्यञ्जनाश्चएनं अन्यतो यान्तं अन्यतोअपदिशेयुः ।। ०७.१७.५३ ।।

ततोअन्यतो गच्छेत् ।। ०७.१७.५४ ।।

चक्र-चराणां वा शकट-वाटैरपगच्छेत् ।। ०७.१७.५५ ।।

आसन्ने चानुपाते सत्त्रं वा गृह्णीयात् ।। ०७.१७.५६ ।।

सत्त्र-अभावे हिरण्यं रस-विद्धं वा भक्ष्य-जातं उभयतः-पन्थानं उत्सृजेत् ।। ०७.१७.५७ ।।

ततोअन्यतोअपगच्छेत् ।। ०७.१७.५८ ।।

गृहीतो वा साम-आदिभिरनुपातं अतिसंदध्यात् । रस-विद्धेन वा पथ्य्-अदनेन ।। ०७.१७.५९ ।।

वारुण-योग-अग्नि-दाहेषु वा शरीरं अन्यदाधाय शत्रुं अभियुञ्जीत "पुत्रो मे त्वया हतः" इति ।। ०७.१७.६० ।।

उपात्तच्-छन्न-शस्त्रो वा रात्रौ विक्रम्य रक्षिषु ।। ०७.१७.६१अ ।।

शीघ्र-पातैरपसरेद्गूढ-प्रणिहितैः सह ।। ०७.१७.६१ब ।।

मध्यमस्यऽत्मा तृतीया पन्चमी च प्रकृती प्रकृतयः ।। ०७.१८.०१ ।।

द्वितीया चतुर्थी षष्ठी च विकृतयः ।। ०७.१८.०२ ।।

तच्चेदुभयं मध्यमोअनुगृह्णीयात् । विजिगीषुर्मध्यम-अनुलोमः स्यात् ।। ०७.१८.०३ ।।

न चेदनुगृह्णीयात् । प्रकृत्य्-अनुलोमः स्यात् ।। ०७.१८.०४ ।।

मद्यमश्चेद्विजिगीषोर्मित्रं मित्र-भावि लिप्सेत । मित्रस्यऽत्मनश्च मित्राण्युत्थाप्य मध्यमाच्च मित्राणि भेदयित्वा मित्रं त्रायेत ।। ०७.१८.०५ ।।

मण्डलं वा प्रोत्साहयेत्"अतिप्रवृद्धोअयं मध्यमः सर्वेषां नो विनाशायाभ्युत्थितः । सम्भूयास्य यात्रां विहनाम" इति ।। ०७.१८.०६ ।।

तच्चेन्मण्डलं अनुगृह्णीयात् । मध्यम-अवग्रहेणऽत्मानं उपबृंहयेत् ।। ०७.१८.०७ ।।

न चेदनुगृह्णीयात् । कोश-दण्डाभ्यां मित्रं अनुगृह्य ये मध्यम-द्वेषिणो राजानः परस्पर-अनुगृहीता वा बहवस्तिष्ठेयुः । एक-सिद्धौ वा बहवः सिध्येयुः । परस्परादवा शङ्किता नौत्तिष्ठेरन् । तेषां प्रधानं एकं आसन्नं वा साम-दानाभ्यां लभेत ।। ०७.१८.०८ ।।

द्वि-गुणो द्वितीयं त्रि-गुनस्तृतीयं ।। ०७.१८.०९ ।।

एवं अभ्युच्चितो मध्यमं अवगृह्णीयात् ।। ०७.१८.१० ।।

देश-काल-अतिपत्तौ वा संधाय मध्यमेन मित्रस्य साचिव्यं कुर्यात् । दूष्येषु वा कर्म-संधिं ।। ०७.१८.११ ।।

कर्शनीयं वाअस्य मित्रं मध्यमो लिप्सेत । प्रतिस्तम्भयेदेनं "अहं त्वा त्रायेय" इति आ कर्शनात् ।। ०७.१८.१२ ।।

कर्शितं एनं त्रायेत ।। ०७.१८.१३ ।।

उच्छेदनीयं वाअस्य मित्रं मध्यमो लिप्सेत । कर्शितं एनं त्रायेत मध्यम-वृद्धि-भयात् ।। ०७.१८.१४ ।।

उच्छिन्नं वा भूम्य्-अनुग्रहेण हस्ते कुर्यादन्यत्रापसार-भयात् ।। ०७.१८.१५ ।।

कर्शनीय-उच्छेदनीययोश्चेन्मित्राणि मध्यमस्य साचिव्य-कराणि स्युः । पुरुष-अन्तरेण संधीयेत ।। ०७.१८.१६ ।।

विजिगीषोर्वा तयोर्मित्राण्यवग्रह-समर्थानि स्युः । संधिं उपेयात् ।। ०७.१८.१७ ।।

अमित्रं वाअस्य मध्यमो लिप्सेत । संधिं उपेयात् ।। ०७.१८.१८ ।।

एवं स्व-अर्थश्च कृतो भवति मध्यमस्य प्रियं च ।। ०७.१८.१९ ।।

मध्यमश्चेत्स्व-मित्रं मित्र-भावि लिप्सेत । पुरुष-अन्तरेण संदध्यात् ।। ०७.१८.२० ।।

स-अपेक्षं वा "नार्हसि मित्रं उच्छेत्तुम्" इति वारयेत् ।। ०७.१८.२१ ।।

उपेक्षेत वा "मण्डलं अस्य कुप्यतु स्व-पक्ष-वधात्" इति ।। ०७.१८.२२ ।।

अमित्रं आत्मनो वा मध्यमो लिप्सेत । कोश-दण्डाभ्यां एनं अदृश्यमानोअनुगृह्णीयात् ।। ०७.१८.२३ ।।

उदासीनं वा मध्यमो लिप्सेत । अस्मै साहाय्यं दद्याद्"उदासीनाद्भिद्यताम्" इति ।। ०७.१८.२४ ।।

मध्यम-उदासीनयोर्यो मण्डलस्याभिप्रेतस्तं आश्रयेत ।। ०७.१८.२५ ।।

मध्यम-चरितेनौदासीन-चरितं व्याख्यातं ।। ०७.१८.२६ ।।

उदासीनश्चेन्मध्यमं लिप्सेत । यतः शत्रुं अतिसंदध्यान्मित्रस्यौपकारं कुर्यादुदासीनं वा दण्ड-उपकारिणं लभेत ततः परिणमेत ।। ०७.१८.२७ ।।

एवं उपबृह्यऽत्मानं अरि-प्रकृतिं कर्शयेन्मित्र-प्रकृतिं चौपगृह्णीयात् ।। ०७.१८.२८ ।।

सत्यप्यमित्र-भावे तस्यानात्मवान्नित्य-अपकारी शत्रुः शत्रु-संहितः पार्ष्णि-ग्राहो वा व्यसनी यातव्यो व्यसने वा नेतुरभियोक्ता इत्यरि-भाविनः । एक-अर्थ-अभिप्रयातः पृथग्-अर्थ-अभिप्रयातः सम्भूय-यात्रिकः संहित-प्रयाणिकः स्व-अर्थ-अभिप्रयातः सामुत्थायिकः कोश-दण्डयोरन्यतरस्य क्रेता विक्रेता वा द्वैधी-भाविक इति मित्र-भाविनः । ।। ०७.१८.२९अ ।।

सामन्तो बलवतः प्रतिघातोअन्तर्धिः प्रतिवेशो वा बलवतः पार्ष्णि-ग्राहो वा स्वयं उपनतः प्रताप-उपनतो वा दण्ड-उपनत इति भृत्य-भाविनः सामन्ताः ।। ०७.१८.२९ब ।।

तैर्भूम्य्-एक-अन्तरा व्याख्याताः ।। ०७.१८.३० ।।

तेषां शत्रु-विरोधे यन्मित्रं एक-अर्थतां व्रजेत् । ।। ०७.१८.३१अ ब ।।

शक्त्या तद्-अनुगृह्णीयाद्विषहेत यया परं ।। ०७.१८.३१च्द् ।।

प्रसाध्य शत्रुं यन्मित्रं वृद्धं गच्छेदवश्यतां । ।। ०७.१८.३२अ ब ।।

सामन्त-एक-अन्तराभ्यां तत्-प्रकृतिभ्यां विरोधयेत् ।। ०७.१८.३२च्द् ।।

तत्-कुलीन-अपरुद्धाभ्यां भूमिं वा तस्य हारयेत् । ।। ०७.१८.३३अ ब ।।

यथा वाअनुग्रह-अपेक्षं वश्यं तिष्ठेत्तथा चरेत् ।। ०७.१८.३३च्द् ।।

नौपकुर्यादमित्रं वा गच्छेद्यदतिकर्शितं । ।। ०७.१८.३४अ ब ।।

तदहीनं अवृद्धं च स्थापयेन्मित्रं अर्थवित् ।। ०७.१८.३४च्द् ।।

अर्थ-युक्त्या चलं मित्रं संधिं यदुपगच्छति । ।। ०७.१८.३५अ ब ।।

तस्यापगमने हेतुं विहन्यान्न चलेद्यथा ।। ०७.१८.३५च्द् ।।

अरि-साधारणं यद्वा तिष्ठेत्तदरितः शठं । ।। ०७.१८.३६अ ब ।।

भेदयेद्भिन्नं उच्छिन्द्यात्ततः शत्रुं अनन्तरं ।। ०७.१८.३६च्द् ।।

उदासीनं च यत्तिष्ठेत्सामन्तैस्तद्विरोधयेत् । ।। ०७.१८.३७अ ब ।।

ततो विग्रह-संतप्तं उपकारे निवेशयेत् ।। ०७.१८.३७च्द् ।।

अमित्रं विजिगीषुं च यत्संचरति दुर्बलं । ।। ०७.१८.३८अ ब ।।

तद्बलेनानुगृह्णीयाद्यथा स्यान्न परान्-मुखं ।। ०७.१८.३८च्द् ।।

अपनीय ततोअन्यस्यां भूमौ वा सम्निवेशयेत् । ।। ०७.१८.३९अ ब ।।

निवेश्य पूर्वं तत्रान्यद्दण्ड-अनुग्रह-हेतुना || ०७.१८.३९च्द् ||

अपकुर्यात्समर्थं वा नौपकुर्याद्यदापदि | || ०७.१८.४०अ ब ||

उच्छिन्द्यादेव तन्-मित्रं विश्वस्याङ्कं उपस्थितं || ०७.१८.४०च्द् ||

मित्र-व्यसनतो वाअरिरुत्तिष्ठेद्योअनवग्रहः | || ०७.१८.४१अ ब ||

मित्रेणएव भवेत्साध्यश्छादित-व्यसनेन सः || ०७.१८.४१च्द् ||

अमित्र-व्यसनान्मित्रं उत्थितं यद्विरज्यति | || ०७.१८.४१अ ब ||

अरि-व्यसन-सिद्ध्या तत्-शत्रुणाएव प्रसिध्यति || ०७.१८.४१च्द् ||

वृद्धिं क्षयं च स्थानं च कर्शन-उच्छेदनं तथा || ०७.१८.४२अ ब ||

सर्व-उपायान्समादध्यादेतान्यश्चार्थ-शास्त्रवित् | || ०७.१८.४२च्द् ||

एवं अन्योन्य-संचारं षाड्गुण्यं योअनुपश्यति || ०७.१८.४३अ ब ||

स बुद्धि-निगलैर्बद्धैरिष्टं क्रीडति पार्थिवैः || ०७.१८.४३च्द् ||

व्यसन-यौगपद्ये सौकर्यतो यातव्यं रक्षितव्यं वाइति व्यसन-चिन्ता ।। ०८.१.०१ ।।

दैवं मानुषं वा प्रकृति-व्यसनं अनय-अपनयाभ्यां सम्भवति ।। ०८.१.०२ ।।

गुण-प्रातिलोम्यं अभावः प्रदोषः प्रसङ्गः पीडा वा व्यसनं ।। ०८.१.०३ ।।

व्यस्यत्येनं श्रेयस इति व्यसनं ।। ०८.१.०४ ।।

"स्वाम्य्-अमात्य-जन-पद-दुर्ग-कोश-दण्ड-मित्र-व्यसनानां पूर्वं पूर्वं गरीयः" इत्याचार्याः ।। ०८.१.०५ ।।

नैति भरद्वाजः ।। ०८.१.०६ ।।

"स्वाम्य्-अमात्य-व्यसनयोरमात्य-व्यसनं गरीयः ।। ०८.१.०७ ।।

मन्त्रो मन्त्र-फल-अवाप्तिः कर्म-अनुष्ठानं आय-व्यय-कर्म दण्ड-प्रणयनं अमित्र-अटवी-प्रतिषेधो राज्य-रक्षणं व्यसन-प्रतीकारः कुमार-रक्षणं अभिषेकश्च कुमाराणां आयत्तं अमात्येषु ।। ०८.१.०८ ।।

तेषां अभावे तद्-अभावः । छिन्न-पक्षस्यैव राज्ञश्चेष्टा-नाशश्च ।। ०८.१.०९ ।।

व्यसनेषु चऽसन्नः पर-उपजापः ।। ०८.१.१० ।।

वैगुण्ये च प्राण-आबाधः प्राण-अन्तिक-चरत्वाद्राज्ञः" इति ।। ०८.१.११ ।।

नैति कौटिल्यः ।। ०८.१.१२ ।।

मन्त्रि-पुरोहित-आदि-भृत्य-वर्गं अध्यक्ष-प्रचारं पुरुष-द्रव्य-प्रकृति-व्यसन-प्रतीकारं एधनं च राजाएव करोति ।। ०८.१.१३ ।।

व्यसनिषु वाअमात्येष्वन्यानव्यसनिनः करोति ।। ०८.१.१४ ।।

पूज्य-पूजने दूष्य-अवग्रहे च नित्य-युक्तस्तिष्ठति ।। ०८.१.१५ ।।

स्वामी च सम्पन्नः स्व-सम्पद्भिः प्रकृतीः सम्पादयति ।। ०८.१.१६ ।।

स यत्-शीलस्तत्-शीलाः प्रकृतयो भवन्ति । उत्थाने प्रमादे च तद्-आयत्तत्वात् ।। ०८.१.१७ ।।

तत्-कूट-स्थानीयो हि स्वामीइति ।। ०८.१.१८ ।।

"अमात्य-जन-पद-व्यसनयोर्जन-पद-व्यसनं गरीयः" इति विशाल-अक्षः ।। ०८.१.१९ ।।

"कोशो दण्डः कुप्यं विष्टिर्वाहनं निचयाश्च जन-पदादुत्तिष्ठन्ते ।। ०८.१.२० ।।

तेषां अभावो जन-पद-अभावे । स्वाम्य्-अमात्ययोश्चानन्तरः" इति ।। ०८.१.२१ ।।

नैति कौटिल्यः ।। ०८.१.२२ ।।

अमात्य-मूलाः सर्व-आरम्भाः जन-पदस्य कर्म-सिद्धयः स्वतः परतश्च योग-क्षेम-साधनं व्यसन-प्रतीकारः शून्य-निवेश-उपचयौ दण्ड-कर-अनुग्रहश्चैति ।। ०८.१.२३ ।।

"जन-पद-दुर्ग-व्यसनयोर्दुर्ग-व्यसनम्" इति पाराशराः ।। ०८.१.२४ ।।

"दुर्गे हि कोश-दण्ड-उत्पत्तिरापदि स्थानं च जन-पदस्य ।। ०८.१.२५ ।।

शक्तिमत्तराश्च पौरा जानपदेभ्यो नित्याश्चऽपदि सहाया राज्ञः ।। ०८.१.२६ ।।

जानपदास्त्वमित्र-साधारणाः" इति ।। ०८.१.२७ ।।

नैति कौटिल्यः ।। ०८.१.२८ ।।

जन-पद-मूला दुर्ग-कोश-दण्ड-सेतु-वार्त्ता-आरम्भाः ।। ०८.१.२९ ।।

शौर्यं स्थैर्यं दाक्ष्यं बाहुल्यं च जानपदेषु ।। ०८.१.३० ।।

पर्वत-अन्तर्-द्वीपाश्च दुर्गा नाध्युष्यन्ते जन-पद-अभावात् ।। ०८.१.३१ ।।

कर्षक-प्राये तु दुर्ग-व्यसनम् । आयुधीय-प्राये तु जन-पदे जन-पद-व्यसनं इति ।। ०८.१.३२ ।।

"दुर्ग-कोश-व्यसनयोः कोश-व्यसनम्" इति पिशुनः ।। ०८.१.३३ ।।

"कोश-मूलो हि दुर्ग-संस्कारो दुर्ग-रक्षणं जन-पद-मित्र-अमित्र-निग्रहो देश-अन्तरितानां उत्साहनं दण्ड-बल-व्यवहारश्च ।। ०८.१.३४ ।।

दुर्गः कोशादुपजाप्यः परेषां ।। ०८.१.३५ ।।

कोशं आदाय च व्यसने शक्यं अपयातुम् । न दुर्गम्" इति ।। ०८.१.३६ ।।

नैति कौटिल्यः ।। ०८.१.३७ ।।

दुर्ग-अर्पणः कोशो दण्डस्तूष्णीं-युद्धं स्व-पक्ष-निग्रहो दण्ड-बल-व्यवहार आसार-प्रतिग्रहः पर-चक्र-अटवी-प्रतिषेधश्च ।। ०८.१.३८ ।।

दुर्ग-अभावे च कोशः परेषां ।। ०८.१.३९ ।।

दृश्यते हि दुर्गवतां अनुच्छित्तिरिति ।। ०८.१.४० ।।

"कोश-दण्डव्यसनयोर्दण्ड-व्यसनम्" इति कौणपदन्तः ।। ०८.१.४१ ।।

"दण्ड-मूलो हि मित्र-अमित्र-निग्रहः पर-दण्ड-उत्साहनं स्व-दण्ड-प्रतिग्रहश्च ।। ०८.१.४२ ।।

दण्ड-अभावे च ध्रुवः कोश-विनाशः ।। ०८.१.४३ ।।

कोश-अभावे च शक्यः कुप्येन भूम्या पर-भूमि-स्वयं-ग्राहेण वा दण्डः पिण्डयितुम् । दण्डवता च कोशः ।। ०८.१.४४ ।।

स्वामिनश्चऽसन्न-वृत्तित्वादमात्य-सधर्मा दण्डः" इति ।। ०८.१.४५ ।।

नैति कौटिल्यः ।। ०८.१.४६ ।।

कोश-मूलो हि दण्डः ।। ०८.१.४७ ।।

कोश-अभावे दण्डः परं गच्छति । स्वामिनं वा हन्ति ।। ०८.१.४८ ।।

सर्व-अभियोग-करश्च कोशो धर्म-काम-हेतुः ।। ०८.१.४९ ।।

देश-काल-कार्य-वशेन तु कोश-दण्डयोरन्यतरः प्रमाणी-भवति ।। ०८.१.५० ।।

लम्भ-पालनो हि दण्डः कोशस्य । कोशः कोशस्य दण्डस्य च भवति ।। ०८.१.५१ ।।

सर्व-द्रव्य-प्रयोजकत्वात्कोश-व्यसनं गरीय इति ।। ०८.१.५२ ।।

"दण्ड-मित्र-व्यसनयोर्मित्र-व्यसनम्" इति वातव्याधिः ।। ०८.१.५३ ।।

"मित्रं अभृतं व्यवहितं च कर्म करोति । पार्ष्णि-ग्राहं आसारं अमित्रं आटविकं च प्रतिकरोति । कोश-दण्ड-भूमिभिश्चौपकरोति व्यसन-अवस्था-योगम्" इति ।। ०८.१.५४ ।।

नैति कौटिल्यः ।। ०८.१.५५ ।।

दण्डवतो मित्रं मित्र-भावे तिष्ठति । अमित्रो वा मित्र-भावे ।। ०८.१.५६ ।।

दण्ड-मित्रयोस्तु साधारणे कार्ये सारतः स्व-युद्ध-देश-काल-लाभाद्विशेषः ।। ०८.१.५७ ।।

शीघ्र-अभियाने त्वमित्र-आटविक-अनभ्यन्तर-कोपे च न मित्रं विद्यते ।। ०८.१.५८ ।।

व्यसन-यौगपद्ये पर-वृद्धौ च मित्रं अर्थ-युक्तौ तिष्ठति ।। ०८.१.५९ ।।

इति प्रकृति-व्यसन-सम्प्रधारणं उक्तं ।। ०८.१.६० ।।

प्रकृत्य्-अवयवानां तु व्यसनस्य विशेषतः । ।। ०८.१.६१अ ब ।।

बहु-भावोअनुरागो वा सारो वा कार्य-साधकः ।। ०८.१.६१च्द् ।।

द्वयोस्तु व्यसने तुल्ये विशेषो गुणतः क्षयात् । ।। ०८.१.६२अ ब ।।

शेष-प्रकृति-साद्गुण्यं यदि स्यान्नाविधेयकं ।। ०८.१.६२च्द् ।।

शेष-प्रकृति-नाशस्तु यत्रएक-व्यसनाद्भवेत् । ।। ०८.१.६३अ ब ।।

व्यसनं तद्गरीयः स्यात्प्रधानस्यैतरस्य वा ।। ०८.१.६३च्द् ।।

राजा राज्यं इति प्रकृति-संक्षेपः ।। ०८.२.०१ ।।

राज्ञोअभ्यन्तरो बाह्यो वा कोप इति ।। ०८.२.०२ ।।

अहि-भयादभ्यन्तरः कोपो बाह्य-कोपात्पापीयान् । अन्तर्-अमात्य-कोपश्चान्तः-कोपात् ।। ०८.२.०३ ।।

तस्मात्कोश-दण्ड-शक्तिं आत्म-संस्थां कुर्वीत ।। ०८.२.०४ ।।

"द्वैराज्य-वैराज्ययोर्द्वैराज्यं अन्योन्य-पक्ष-द्वेष-अनुरागाभ्यां परस्पर-संघर्षेण वा विनश्यति । वैराज्यं तु प्रकृति-चित्त-ग्रहण-अपेक्षि यथा-स्थितं अन्यैर्भुज्यते" इत्याचार्याः ।। ०८.२.०५ ।।

नैति कौटिल्यः ।। ०८.२.०६ ।।

पिता-पुत्रयोर्भ्रात्रोर्वा द्वैराज्यं तुल्य-योग-क्षेमं अमात्य-अवग्रहं वर्तयति ।। ०८.२.०७ ।।

वैराज्यं तु जीवतः परस्यऽच्छिद्य "नएतन्मम" इति मन्यमानः कर्शयति । अपवाहयति । पण्यं वा करोति । विरक्तं वा परित्यज्यापगच्छतिइति ।। ०८.२.०८ ।।

अन्धश्चलित-शास्त्रो वा राजाइति "अशास्त्र-चक्षुरन्धो यत्-किंचन-कारी दृढ-अभिनिवेशी पर-प्रणेयो वा राज्यं अन्यायेनौपहन्ति । चलित-शास्त्रस्तु यत्र शास्त्राच्चलित-मतिर्भवति शक्य-अनुनयो भवति" इत्याचार्याः ।। ०८.२.०९ ।।

नैति कौटिल्यः ।। ०८.२.१० ।।

अन्धो राजा शक्यते सहाय-सम्पदा यत्र तत्र वा पर्यवस्थापयितुं ।। ०८.२.११ ।।

चलित-शास्त्रस्तु शास्त्रादन्यथा-अभिनिविष्ट-बुद्धिरन्यायेन राज्यं आत्मानं चौपहन्तिइति ।। ०८.२.१२ ।।

व्याधितो नवो वा राजाइति "व्याधितो राजा राज्य-उपघातं अमात्य-मूलं प्राण-आबाधं वा राज्य-मूलं अवाप्नोति । नवस्तु राजा स्व-धर्म-अनुग्रह-परिहार-दान-मान-कर्मभिः प्रकृति-रञ्जन-उपकारैश्चरति" इत्याचार्याः ।। ०८.२.१३ ।।

नैति कौटिल्यः ।। ०८.२.१४ ।।

व्याधितो राजा यथा-प्रवृत्तं राज-प्रणिधिं अनुवर्तयति ।। ०८.२.१५ ।।

नवस्तु राजा बल-आवर्जितं "ममैदं राज्यम्" इति यथा-इष्टं अनवग्रहश्चरति ।। ०८.२.१६ ।।

सामुत्थायिकैरवगृहीतो वा राज्य-उपघातं मर्षयति ।। ०८.२.१७ ।।

प्रकृतिष्वरूढः सुखं उच्छेत्तुं भवतिइति ।। ०८.२.१८ ।।

व्याधिते विशेषः पाप-रोग्य-पाप-रोगी च ।। ०८.२.१९ ।।

नवेअप्यभिजातोअनभिजात इति ।। ०८.२.२० ।।

दुर्बलोअभिजातो बलवाननभिजातो राजाइति "दुर्बलस्याभिजातस्यौपजापं दौर्बल्य-अपेक्षाः प्रकृतयः कृच्छ्रेणौपगच्छन्ति । बलवतश्चानभिजातस्य बल-अपेक्षाः सुखेन" इत्याचार्याः ।। ०८.२.२१ ।।

नैति कौटिल्यः ।। ०८.२.२२ ।।

दुर्बलं अभिजातं प्रकृतयः स्वयं उपनमन्ति । जात्यं ऐश्वर्य-प्रकृतिरनुवर्तत इति ।। ०८.२.२३ ।।

बलवतश्चानभिजातस्यौपजापं विसंवादयन्ति । अनुरागे सार्वगुण्यं इति ।। ०८.२.२४ ।।

प्रयास-वधात्सस्य-वधो मुष्टि-वधात्पापीयान् । निराजीवत्वादवृष्टिरतिवृष्टितः ।। ०८.२.२५ ।।

द्वयोर्द्वयोर्व्यसनयोः प्रकृतीनां बल-अबलं । ।। ०८.२.२६अ ब ।।

पारम्पर्य-क्रमेणौक्तं याने स्थाने च कारणं ।। ०८.२.२६च्द् ।।

अविद्या-विनयः पुरुष-व्यसन-हेतुः ।। ०८.३.०१ ।।

अविनीतो हि व्यसन-दोषान्न पश्यति ।। ०८.३.०२ ।।

तानुपदेक्ष्यामः ।। ०८.३.०३ ।।

कोपजस्त्रि-वर्गः । कामजश्चतुर्-वर्गः ।। ०८.३.०४ ।।

तयोः कोपो गरीयान् ।। ०८.३.०५ ।।

सर्वत्र हि कोपश्चरति ।। ०८.३.०६ ।।

प्रायशश्च कोप-वशा राजानः प्रकृति-कोपैर्हताः श्रूयन्ते । काम-वशाः क्षय-निमित्तं अरि-व्याधिभिरिति ।। ०८.३.०७ ।।

नैति भारद्वाजः ।। ०८.३.०८ ।।

"सत्-पुरुष-आचारः कोपो वैर-यातनं अवज्ञा-वधो भीत-मनुष्यता च ।। ०८.३.०९ ।।

नित्यश्च कोपेन सम्बन्धः पाप-प्रतिषेध-अर्थः ।। ०८.३.१० ।।

कामः सिद्धि-लाभः सान्त्वं त्याग-शीलता सम्प्रिय-भावश्च ।। ०८.३.११ ।।

नित्यश्च कामेन सम्बन्धः कृत-कर्मणः फल-उपभोग-अर्थः" इति ।। ०८.३.१२ ।।

नैति कौटिल्यः ।। ०८.३.१३ ।।

द्वेष्यता शत्रु-वेदनं दुःख-आसङ्गश्च कोपः ।। ०८.३.१४ ।।

परिभवो द्रव्य-नाशः पाटच्चर-द्यूतकार-लुब्धक-गायन-वादकैश्चानर्थ्यैः सम्योगः कामः ।। ०८.३.१५ ।।

तयोः परिभवाद्द्वेष्यता गरीयसी ।। ०८.३.१६ ।।

परिभूतः स्वैः परैश्चावगृह्यते । द्वेष्यः समुच्छिद्यत इति ।। ०८.३.१७ ।।

द्रव्य-नाशात्शत्रु-वेदनं गरीयः ।। ०८.३.१८ ।।

द्रव्य-नाशः कोश-आबाधकः । शत्रु-वेदनं प्राण-आबाधकं इति ।। ०८.३.१९ ।।

अनर्थ्य-सम्योगाद्दुःख-सम्योगो गरीयान् ।। ०८.३.२० ।।

अनर्थ्य-सम्योगो मुहूर्त-प्रतीकारो । दीर्घ-क्लेश-करो दुःखानां आसङ्ग इति ।। ०८.३.२१ ।।

तस्मात्कोपो गरीयान् ।। ०८.३.२२ ।।

वाक्-पारुष्यं अर्थ-दूषणं दण्ड-पारुष्यं इति ।। ०८.३.२३ ।।

"वाक्-पारुष्य-अर्थ-दूषणयोर्वाक्-पारुष्यं गरीयः" इति विशाल-अक्षः ।। ०८.३.२४ ।।

"परुष-मुक्तो हि तेजस्वी तेजसा प्रत्यारोहति ।। ०८.३.२५ ।।

दुरुक्त-शल्यं हृदि निखातं तेजः-संदीपनं इन्द्रिय-उपतापि च" इति ।। ०८.३.२६ ।।

नैति कौटिल्यः ।। ०८.३.२७ ।।

अर्थ-पूजा वाक्-शल्यं अपहन्ति । वृत्ति-विलोपस्त्वर्थ-दूषणं ।। ०८.३.२८ ।।

अदानं आदानं विनाशः परित्यागो वाअर्थस्यैत्यर्थ-दूषणं ।। ०८.३.२९ ।।

"अर्थ-दूषण-दण्ड-पारुष्ययोरर्थ-दूषणं गरीयः" इति पाराशराः ।। ०८.३.३० ।।

"अर्थ-मूलौ धर्म-कामौ ।। ०८.३.३१ ।।

अर्थ-प्रतिबद्धश्च लोको वर्तते ।। ०८.३.३२ ।।

तस्य-उपघातो गरीयान्" इति ।। ०८.३.३३ ।।

नैति कौटिल्यः ।। ०८.३.३४ ।।

सुमहताअप्यर्थेन न कश्चन शरीर-विनाशं इच्छेत् ।। ०८.३.३५ ।।

दण्ड-पारुष्याच्च तं एव दोषं अन्येभ्यः प्राप्नोति ।। ०८.३.३६ ।।

इति कोपजस्त्रि-वर्गः ।। ०८.३.३७ ।।

कामजस्तु मृगया द्यूतं स्त्रियः पानं इति चतुर्-वर्गः ।। ०८.३.३८ ।।

तस्य "मृगया-द्यूतयोर्मृगया गरीयसी" इति पिशुनः ।। ०८.३.३९ ।।

"स्तेन-अमित्र-व्याल-दाव-प्रस्खलन-भय-दिन्-मोहाः क्षुत्-पिपासे च प्राण-आबाधस्तस्यां ।। ०८.३.४० ।।

द्यूते तु जितं एवाक्ष-विदुषा यथा जयत्-सेन-दुर्योधनाभ्याम्" इति ।। ०८.३.४१ ।।

नैत्य्कौटिल्यः ।। ०८.३.४२ ।।

तयोरप्यन्यतर-पराजयोअस्तिइति नल-युधिष्ठिराभ्यां व्याख्यातं ।। ०८.३.४३ ।।

तदेव विजित-द्रव्यं आमिषं वैर-अनुबन्धश्च ।। ०८.३.४४ ।।

सतोअर्थस्य विप्रतिपत्तिरसतश्चार्जनं अप्रतिभुक्त-नाशो मूत्र-पुरीष-धारण-बुभुक्षा-आदिभिश्च व्याधि-लाभ इति द्यूत-दोषाः ।। ०८.३.४५ ।।

मृगयायां तु व्यायामः श्लेष्म-पित्त-मेदः-स्वेद-नाशश्चले स्थिते च काये लक्ष-परिचयः कोप-भय-स्थानेषु च मृगाणां चित्त-ज्ञानं अनित्य-यानं चैति ।। ०८.३.४६ ।।

"द्यूत-स्त्री-व्यसनयोः कैतव-व्यसनम्" इति कौणपदन्तः ।। ०८.३.४७ ।।

"सातत्येन हि निशि प्रदीपे मातरि च मृतायां दीव्यत्येव कितवः ।। ०८.३.४८ ।।

कृच्छ्रे च प्रतिपृष्टः कुप्यति ।। ०८.३.४९ ।।

स्त्री-व्यसने तु स्नान-प्रतिकर्म-भोजन-भूमिषु भवत्येव धर्म-अर्थ-परिप्रश्नः ।। ०८.३.५० ।।

शक्या च स्त्री राजहिते-नियोक्तुम् । उपांशु-दण्डेन व्याधिना वा व्यावर्तयितुं अवस्रावयितुं वा" इति ।। ०८.३.५१ ।।

नैति कौटिल्यः ।। ०८.३.५२ ।।

सप्रत्यादेयं द्यूतं निष्प्रत्यादेयं स्त्री-व्यसनं ।। ०८.३.५३ ।।

अदर्शनं कार्य-निर्वेदः काल-अतिपातनादनर्थो धर्म-लोपश्च तन्त्र-दौर्बल्यं पान-अनुबन्धश्चैति ।। ०८.३.५४ ।।

"स्त्री-पान-व्यसनयोः स्त्री-व्यसनम्" इति वातव्याधिः ।। ०८.३.५५ ।।

"स्त्रीषु हि बालिश्यं अनेक-विधं निशान्त-प्रणिधौ व्याख्यातं ।। ०८.३.५६ ।।

पाने तु शब्द-आदीनां इन्द्रिय-अर्थानां उपभोगः प्रीति-दानं परिजन-पूजनं कर्म-श्रम-वधश्च" इति ।। ०८.३.५७ ।।

नैति कौटिल्यः ।। ०८.३.५८ ।।

स्त्री-व्यसने भवत्यपत्य-उत्पत्तिरात्म-रक्षणं चान्तर्-दारेषु । विपर्ययो वा बाह्येषु । अगम्येषु सर्व-उच्छित्तिः ।। ०८.३.५९ ।।

तदुभयं पान-व्यसने ।। ०८.३.६० ।।

पान-सम्पत् संज्ञा-नाशोअनुन्मत्तस्यौन्मत्तत्वं अप्रेतस्य प्रेतत्वं कौपीन-दर्शनं श्रुत-प्रज्ञा-प्राण-वित्त-मित्र-हानिः सद्भिर्वियोगोअनर्थ्य-सम्योगस्तन्त्री-गीत-नैपुण्येषु चार्थघ्नेषु प्रसङ्ग इति ।। ०८.३.६१ ।।

द्यूत-मद्ययोर्द्यूतं ।। ०८.३.६२ ।।

एकेषां पण-निमित्तो जयः पराजयो वा प्राणिषु निश्चेतनेषु वा पक्ष-द्वैधेन प्रकृति-कोपं करोति ।। ०८.३.६३ ।।

विशेषतश्च संघानां संघ-धर्मिणां च राज-कुलानां द्यूत-निमित्तो भेदस्तन्-निमित्तो विनाश इत्यसत्-प्रग्रहः पापिष्ठतमो व्यसनानां तन्त्र-दौर्बल्यादिति ।। ०८.३.६४ ।।

असतां प्रग्रहः कामः कोपश्चावग्रहः सतां । ।। ०८.३.६५अ ब ।।

व्यसनं दोष-बाहुल्यादत्यन्तं उभयं मतं ।। ०८.३.६५च्द् ।।

तस्मात्कोपं च कामं च व्यसन-आरम्भं आत्मवान् । ।। ०८.३.६६अ ब ।।

परित्यजेन्मूल-हरं वृद्ध-सेवी जित-इन्द्रियः ।। ०८.३.६६च्द् ।।

दैव-पीडनं अग्निरुदकं व्याधिर्दुर्भिक्षं मरक इति ।। ०८.४.०१ ।।

"अग्न्य्-उदकयोरग्नि-पीडनं अप्रतिकार्यं सर्व-दाहि च । शक्य-अपगमनं तार्य-आबाधं उदक-पीडनम्" इत्याचार्याः ।। ०८.४.०२ ।।

नैत्कौटिल्यः ।। ०८.४.०३ ।।

अग्निर्ग्रामं अर्ध-ग्रामं वा दहति । उदक-वेगस्तु ग्राम-शत-प्रवाहीइति ।। ०८.४.०४ ।।

"व्याधि-दुर्भिक्षयोर्व्याधिः प्रेत-व्याधित-उपसृष्ट-परिचारक-व्यायाम-उपरोधेन कर्माण्युपहन्ति । दुर्भिक्षं पुनरकर्म-उपघाति हिरण्य-पशु-कर-दायि च" इत्याचार्याः ।। ०८.४.०५ ।।

नैति कौटिल्यः ।। ०८.४.०६ ।।

एक-देश-पीडनो व्याधिः शक्य-प्रतीकारश्च । सर्व-देश-पीडनं दुर्भिक्षं प्राणिनां अजीवनायैति ।। ०८.४.०७ ।।

तेन मरको व्याख्यातः ।। ०८.४.०८ ।।

"क्षुद्रक-मुख्य-क्षययोः क्षुद्रक-क्षयः कर्मणां अयोग-क्षेमं करोति । मुख्य-क्षयः कर्म-अनुष्ठान-उपरोध-धर्मा" इत्याचार्याः ।। ०८.४.०९ ।।

नैति कौटिल्यः ।। ०८.४.१० ।।

शक्यः क्षुद्रक-क्षयः प्रतिसंधातुं बाहुल्यात्क्षुद्रकाणाम् । न मुख्य-क्षयः ।। ०८.४.११ ।।

सहस्रेषु हि मुख्यो भवत्येको न वा सत्त्व-प्रज्ञा-आधिक्यात्तद्-आश्रयत्वात्क्षुद्रकाणां इति ।। ०८.४.१२ ।।

"स्व-चक्र-पर-चक्रयोः स्व-चक्रं अतिमात्राभ्यां दण्ड-कराभ्यां पीडयत्यशक्यं च वारयितुम् । पर-चक्रं तु शक्यं प्रैयोद्धुं उपसारेण संधिना वा मोक्षयितुम्" इत्याचार्याः ।। ०८.४.१३ ।।

नैति कौटिल्यः ।। ०८.४.१४ ।।

स्व-चक्र-पीडनं प्रकृति-पुरुष-मुख्य-उपग्रह-विघाताभ्यां शक्यते वारयितुं एक-देशं वा पीडयति । सर्व-देश-पीडनं तु पर-चक्रं विलोप-घात-दाह-विध्वंसन-अपवाहनैः पीडयतिइति ।। ०८.४.१५ ।।

"प्रकृति-राज-विवादयोः प्रकृइति-विवादः प्रकृतीनां भेदकः पर-अभियोगानावहति । राज-विवादस्तु प्रकृतीनां द्वि-गुण-भक्त-वेतन-परिहार-करो भवति" इत्याचार्याः ।। ०८.४.१६ ।।

नैति कौटिल्यः ।। ०८.४.१७ ।।

शक्यः प्रकृति-विवादः प्रकृति-मुख्य-उपग्रहेण कलह-स्थान-अपनयनेन वा वारयितुं ।। ०८.४.१८ ।।

विवदमानास्तु प्रकृतयः परस्पर-संघर्षेणौपकुर्वन्ति ।। ०८.४.१९ ।।

राज-विवादस्तु पीडन-उच्छेदनाय प्रकृतीनां द्वि-गुण-व्यायाम-साध्य इति ।। ०८.४.२० ।।

"देश-राज-विहारयोर्देश-विहारस्त्रैकाल्येन कर्म-फल-उपघातं करोति । राज-विहारस्तु कारु-शिल्पि-कुशीलव-वाग्-जीवन-रूप-आजीवा-वैदेहक-उपकारं करोति" इत्याचार्याः ।। ०८.४.२१ ।।

नैति कौटिल्यः ।। ०८.४.२२ ।।

देश-विहारः कर्म-श्रमं अवधा-अर्थं अल्पं भक्षयति भक्षयित्वा च भूयः कर्मसु योगं गच्छति । राज-विहारस्तु स्वयं वल्लभैश्च स्वयं-ग्राह-प्रणय-पण्य-अगार-कार्य-उपग्रहैः पीडयतिइति ।। ०८.४.२३ ।।

"सुभगा-कुमारयोः कुमारः स्वयं वल्लभैश्च स्वयं-ग्राह-प्रणय-पण्य-अगार-कार्य-उपग्रहैः पीडयति । सुभगा विलास-उपभोगेन" इत्याचार्याः ।। ०८.४.२४ ।।

नैति कौटिल्यः ।। ०८.४.२५ ।।

शक्यः कुमारो मन्त्रि-पुरोहिताभ्यां वारयितुम् । न सुभगा बालिश्यादनर्थ्य-जन-सम्योगाच्चैति ।। ०८.४.२६ ।।

"श्रेणी-मुख्ययोः श्रेणी बाहुल्यादनवग्रहा स्तेय-साहसाभ्यां पीडयति । मुख्यः कार्य-अनुग्रह-विघाताभ्याम्" इत्याचार्याः ।। ०८.४.२७ ।।

नैति कौटिल्यः ।। ०८.४.२८ ।।

सुव्यावर्त्या श्रेणी समान-शील-व्यसनत्वात् । श्रेणी-मुख्य-एक-देश-उपग्रहेण वा ।। ०८.४.२९ ।।

स्तम्भ-युक्तो मुख्यः पर-प्राण-द्रव्य-उपघाताभ्यां पीडयतिइति ।। ०८.४.३० ।।

"सम्निधातृ-समाहर्त्रोः सम्निधाता कृत-विदूषण-अत्ययाभ्यां पीडयति । समाहर्ता करण-अधिष्ठितः प्रदिष्ट-फल-उपभोगी भवति" इत्याचार्याः ।। ०८.४.३१ ।।

नैति कौटिल्यः ।। ०८.४.३२ ।।

सम्निधाता कृत-अवस्थं अन्यैः कोश-प्रवेश्यं प्रतिगृह्णाति । समाहर्ता तु पूर्वं अर्थं आत्मनः कृत्वा पश्चाद्राज-अर्थं करोति प्रणाशयति वा । पर-स्व-आदाने च स्व-प्रत्ययश्चरतिइति ।। ०८.४.३३ ।।

"अन्त-पाल-वैदेहकयोरन्त-पालश्चोर-प्रसर्ग-देय-अत्यादानाभ्यां वणिक्-पथं पीडयति । वैदेहकास्तु पण्य--प्रतिपण्य-अनुग्रहैः प्रसाधयन्ति" इत्याचार्याः ।। ०८.४.३४ ।।

नैति कौटिल्यः ।। ०८.४.३५ ।।

अन्त-पालः पण्य-सम्पात-अनुग्रहेण वर्तयति । वैदेहकास्तु सम्भूय पण्यानां उत्कर्ष-अपकर्षं कुर्वाणाः पणे पण-शतं कुम्भे कुम्भ-शतं इत्याजीवन्ति ।। ०८.४.३६ ।।

अभिजात-उपरुद्धा भूमिः पशु-व्रज-उपरुद्धा वाइति "अभिजात-उपरुद्धा भूमिः महा-फलाअप्यायुधीय-उपकारिणी न क्षमा मोक्षयितुं व्यसन-आबाध-भयात् । पशु-व्रज-उपरुद्धा तु कृषि-योग्या क्षमा मोक्षयितुं ।। ०८.४.३७ ।।

विवीतं हि क्षेत्रेण बाध्यते" इत्याचार्याः ।। ०८.४.३८ ।।

नैति कौटिल्यः ।। ०८.४.३९ ।।

अभिजात-उपरुद्धा भूमिरत्यन्त-महा-उपकाराअपि क्षमा मोक्षयितुं व्यसन-आबाध-भयात् । पशु-व्रज-उपरुद्धा तु कोश-वाहन-उपकारिणी न क्षमा मोक्षयितुम् । अन्यत्र सस्य-वाप-उपरोधादिति ।। ०८.४.४० ।।

"प्रतिरोधक-आटविकयोः प्रतिरोधका रात्रि-सत्त्र-चराः शरीर-आक्रमिणो नित्याः शत-सहस्र-अहपारिणः प्रधान-कोपकाश्च व्यवहिताः प्रत्यन्तर-अरण्य-चराश्चऽटविकाः प्रकाशा दृस्याश्चरन्ति । एक-देश-घातकाश्च" इत्याचार्याः ।। ०८.४.४१ ।।

नैति कौटिल्यः ।। ०८.४.४२ ।।

प्रतिरोधकाः प्रमत्तस्यापरहन्ति । अल्पाः कुण्ठाः सुखा ज्ञातुं ग्रहीतुं च । स्व-देशस्थाः प्रभूता विक्रान्ताश्चऽटविकाः प्रकाश-योदिनोअपहर्तारो हन्तारश्च देशानां राज-सधर्माण इति ।। ०८.४.४३ ।।

मृग-हस्ति-वनयोः मृगाः प्रभूताः प्रभूत-मांस-चर्म-उपकारिणो मन्द-ग्रास-अवक्लेशिनः सुनियम्याश्च ।। ०८.४.४४ ।।

विपरीता हस्तिनो गृह्यमाणा दुष्टाश्च देश-विनाशायैति ।। ०८.४.४५ ।।

स्व-पर-स्थानीय-उपकारयोः स्व-स्थानीय-उपकारो धान्य-पशु-हिरण्य-कुप्य-उपकारो जानपदानां आपद्यात्म-धारणः ।। ०८.४.४६ ।।

विपरीतः पर-स्थानीय-उपकारः ।। ०८.४.४७ ।।

इति पीडनानि आभ्यन्तरो मुख्य-स्तम्भो बाह्योअमित्र-अटवी-स्तम्भः [इति स्तम्भ-वर्गह्] ।। ०८.४.४८ ।।

ताभ्यां पीडनैर्यथा-उक्तैश्च पीडितः । सक्तो मुख्येषु । परिहार-उपहतः । प्रकीर्णो । मिथ्या-संहृतः । सामन्त-अटवी-हृत इति कोश-सङ्ग-वर्गः ।। ०८.४.४९ ।।

पीडनानां अनुत्पत्तावुत्पन्नानां च वारणे । ।। ०८.४.५०अ ब ।।

यतेत देश-वृद्ध्य्-अर्थं नाशे च स्तम्भ-सङ्गयोः ।। ०८.४.५०च्द् ।।

बल-व्यसनानि अमानितम् । विमानितम् । अभृतम् । व्याधितम् । नव-आगतम् । दूर-आयातम् । परिश्रान्तम् । परिक्षीणम् । प्रतिहतम् । हत-अग्र-वेगम् । अनृतु-प्राप्तम् । अभूमि-प्राप्तम् । आशा-निर्वेदि । परिसृप्तम् । कलत्र-गर्भि । अन्तः-शल्यम् । कुपित-मूलम् । भिन्न-गर्भम् । अपसृतम् । अतिक्षिप्तम् । उपनिविष्टम् । समाप्तम् । उपरुद्धम् । परिक्षिप्तम् । छिन्न-धान्य-पुरुष-वीवधम् । स्व-विक्षिप्तम् । मित्र-विक्षिप्तम् । दूष्य-युक्तम् । दुष्ट-पार्ष्णि-ग्राहम् । शून्य-मूलम् । अस्वामि-संहतम् । भिन्न-कूटम् । अन्धं इति ।। ०८.५.०१ ।।

तेषां अमानित-विमानित-अनियतयोरमानितं कृत-अर्थ-मानं युध्येत । न विमानितं अन्तः-कोपं ।। ०८.५.०२ ।।

अभृत-व्याधितयोरभृतं तदात्व-कृत-वेतनं युध्येत । न व्याधितं अकर्मण्यं ।। ०८.५.०३ ।।

नव-आगत-दूर-आयातयोर्नव-आगतं अन्यत उपलब्ध-देशं अनव-मिश्रं युध्येत । न दूर-आयतं आयत-गत-परिक्लेशं ।। ०८.५.०४ ।।

परिश्रान्त-परिक्षीणयोः परिश्रान्तं स्नान-भोजन-स्वप्न-लब्ध-विश्रामं युध्येत । न परिक्षीणं अन्यत्रऽहवे क्षीणयुग्य-पुरुषं ।। ०८.५.०५ ।।

प्रतिहत-हत-अग्र-वेगयोः प्रतिहतं अग्र-पात-भग्नं प्रवीर-पुरुष-संहतं युध्येत । न हत-अग्र-वेगं अग्र-पात-हत-वीरं ।। ०८.५.०६ ।।

अनृत्व्-अभूमि-प्राप्तयोरनृतु-प्राप्तं यथ-ऋतु-युग्य-शस्त्र-आवरणं युध्येत । नाभूमि-प्राप्तं अवरुद्ध-प्रसार-व्यायामं ।। ०८.५.०७ ।।

आशा-निर्वेदि-परिसृप्तयोराशा-निर्वेदि लब्ध-अभिप्रायं युध्येत । न परिसृप्तं अपसृत-मुख्यं ।। ०८.५.०८ ।।

कलत्र-गर्भ्य्-अन्तः-शल्ययोः कलत्र-गर्भि उन्मुच्य कलत्रं युध्येत । नान्तः-शल्यं अन्तर-मित्रं ।। ०८.५.०९ ।।

कुपित-मूल-भिन्न-गर्भयोः कुपित-मूलं प्रशमित-कोपं साम-आदिभिर्युध्येत । न भिन्न-गर्भं अन्योन्यस्माद्भिन्नं ।। ०८.५.१० ।।

अपसृत-अतिक्षिप्तयोरपसृतं एक-राज्य-अतिक्रान्तं मन्त्र-व्यायामाभ्यां सत्त्र-मित्र-अपाश्रयं युध्येत । नातिक्षिप्तं अनेक-राज्य-अतिक्रान्तं बह्व्-आबाधत्वात् ।। ०८.५.११ ।।

उपनिविष्ट-समाप्तयोरुपनिविष्टं पृथग्-यान-स्थानं अतिसंधायारिं युध्येत । न समाप्तं अरिणाएक-स्थान-यानं ।। ०८.५.१२ ।।

उपरुद्ध-परिक्षिप्तयोरुपरुद्धं अन्यतो निष्क्रम्यौपरोद्धारं प्रतियुध्येत । न परिक्षिप्तं सर्वतः प्रतिरुद्धं ।। ०८.५.१३ ।।

छिन्न-धान्य-पुरुष-वीवधयोः छिन्न-धान्यं अन्यतो धान्यं आनीय जङ्गम-स्थावर-आहारं वा युध्येत । न छिन्न-पुरुष-वीवधं अनभिसारं ।। ०८.५.१४ ।।

स्व-विक्षिप्त-मित्र-विक्षिप्तयोः स्व-विक्षिप्तं स्व-भूमौ विक्षिप्तं सैन्यं आपदि शक्यं आवाहयितुम् । न मित्र-विक्षिप्तं विप्रकृष्ट-देश-कालत्वात् ।। ०८.५.१५ ।।

दूष्य-युक्त-दुष्ट-पार्ष्णि-ग्राहयोर्दूष्य-युक्तं आप्त-पुरुष-अधिष्ठितं असंहतं युध्येत । न दुष्ट-पार्ष्णि-ग्राहं पृष्ठ-अभिघात-त्रस्तं ।। ०८.५.१६ ।।

शून्य-मूल-अस्वामि-संहतयोः शून्य-मूलं कृत-पौर-जानपद-आरक्षं सर्व-संदोहेन युध्येत । नास्वामि-संहतं राज-सेना-पति-हीनं ।। ०८.५.१७ ।।

भिन्न-कूट-अन्धयोर्भिन्न-कूटं अन्य-अधिष्ठितं युध्येत । नान्धं अदेशिकं इति ।। ०८.५.१८ ।।

दोष-शुद्धिर्बल-आवापः सत्त्र-स्थान-अतिसंहितं । ।। ०८.५.१९अ ब ।।

संधिश्चौत्तर-पक्षस्य बल-व्यसन-साधनं ।। ०८.५.१९च्द् ।।

रक्षेत्स्व-दण्डं व्यसने शत्रुभ्यो नित्यं उत्थितः । ।। ०८.५.२०अ ब ।।

प्रहरेद्दण्ड-रन्ध्रेषु शत्रूणां नित्यं उत्थितः ।। ०८.५.२०च्द् ।।

यतो निमित्तं व्यसनं प्रकृतीनां अवाप्नुयात् । ।। ०८.५.२१अ ब ।।

प्रागेव प्रतिकुर्वीत तन्निमित्तं अतन्द्रितः । ।। ०८.५.२१च्द् ।।

अभियातं स्वयं मित्रं सम्भूयान्य-वशेन वा ।। ०८.५.२२अ ब ।।

परित्यक्तं अशक्त्या वा लोभेन प्रणयेन वा । ।। ०८.५.२२च्द् ।।

विक्रीतं अभियुञ्जाने संग्रामे वाअपवर्तिना ।। ०८.५.२३अ ब ।।

द्वैधी-भावेन वाअमित्रं यास्यता वाअन्यं अन्यतः । ।। ०८.५.२३च्द् ।।

पृथग्वा सह-याने वा विश्वासेनातिसंहितं ।। ०८.५.२४अ ब ।।

भय-अवमान-आलस्यैर्वा व्यसनान्न प्रमोक्षितं । ।। ०८.५.२४च्द् ।।

अवरुद्धं स्व-भूमिभ्यः समीपाद्वा भयाद्गतं ।। ०८.५.२५अ ब ।।

आच्छेदनाददानाद्वा दत्त्वा वाअप्यवमानितं । ।। ०८.५.२५च्द् ।।

अत्याहारितं अर्थं वा स्वयं पर-मुखेन वा ।। ०८.५.२६अ ब ।।

अतिभारे नियुक्तं वा भङ्क्त्वा परं उपस्थितं । ।। ०८.५.२६च्द् ।।

उपेक्षितं अशक्त्या वा प्रार्थयित्वा विरोधितं ।। ०८.५.२७अ ब ।।

कृच्छ्रेण साध्यते मित्रं सिद्धं चऽशु विरज्यति । ।। ०८.५.२७च्द् ।।

कृत-प्रयासं मान्यं वा मोहान्मित्रं अमानितं । ।। ०८.५.२८अ ब ।।

मानितं वा न सद्दशं शक्तितो वा निवारितं ।। ०८.५.२८च्द् ।।

मित्र-उपघात-त्रस्तं वा शङ्कितं वाअरि-संहितात् । ।। ०८.५.२९अ ब ।।

दूष्यैर्वा भेदितुं मित्रं साध्यं सिद्धं च तिष्ठति ।। ०८.५.२९च्द् ।।

तस्मान्नौत्पादयेदेनान्दोषान्मित्र-उपघातकान् । ।। ०८.५.३०अ ब ।।

उत्पन्नान्वा प्रशमयेद्गुणैर्दोष-उपघातिभिः ।। ०८.५.३०च्द् ।।

विजिगीषुरात्मनः परस्य च बल-अबलं शक्ति-देश-काल-यात्रा-काल-बल-समुद्दान-काल-पश्चात्-कोप-क्षय-व्यय-लाभ-आपदां ज्ञात्वा विशिष्ट-बलो यायात् । अन्यथाआसीत ।। ०९.१.०१ ।।

"उत्साह-प्रभावयोरुत्साहः श्रेयान् ।। ०९.१.०२ ।।

स्वयं हि राजा शूरो बलवानरोगः कृत-अस्त्रो दण्ड-द्वितीयोअपि शक्तः प्रभाववन्तं राजानं जेतुं ।। ०९.१.०३ ।।

अल्पोअपि चास्य दण्डस्तेजसा कृत्य-करो भवति ।। ०९.१.०४ ।।

निरुत्साहस्तु प्रभाववान्राजा विक्रम-अभिपन्नो नश्यति" इत्याचार्याः ।। ०९.१.०५ ।।

नैति कौटिल्यः ।। ०९.१.०६ ।।

प्रभाववानुत्साहवन्तं राजानं प्रभावेनातिसंधत्ते तद्-विशिष्टं अन्यं राजानं आवाह्य भृत्वा क्रीत्वा प्रवीर-पुरुषान् ।। ०९.१.०७ ।।

प्रभूत-प्रभाव-हय-हस्ति-रथ-उपकरण-सम्पन्नश्चास्य दण्डः सर्वत्राप्रतिहतश्चरति ।। ०९.१.०८ ।।

उत्साहवतश्च प्रभाववन्तो जित्वा क्रीत्वा च स्त्रियो बालाः पङ्गवोअन्धाश्च पृथिवीं जिग्युरिति ।। ०९.१.०९ ।।

"प्रभाव-मन्त्रयोः प्रभावः श्रेयान् ।। ०९.१.१० ।।

मन्त्र-शक्ति-सम्पन्नो हि वन्ध्य-बुद्धिरप्रभावो भवति ।। ०९.१.११ ।।

मन्त्र-कर्म चास्य निश्चितं अप्रभावो गर्भ-धान्यं अवृष्टिरिवौपहन्ति" इत्याचार्याः ।। ०९.१.१२ ।।

नैति कौटिल्यः ।। ०९.१.१३ ।।

मन्त्र-शक्तिः श्रेयसी ।। ०९.१.१४ ।।

प्रज्ञा-शास्त्र-चक्षुर्हि राजाअल्पेनापि प्रयत्नेन मन्त्रं आधातुं शक्तः परानुत्साह-प्रभाववतश्च साम-आदिभिर्योग-उपनिषद्भ्यां चातिसंधातुं ।। ०९.१.१५ ।।

एवं उत्साह-प्रभाव-मन्त्र-शक्तीनां उत्तर-उत्तर-अधिकोअतिसंधत्ते ।। ०९.१.१६ ।।

देशः पृथिवी ।। ०९.१.१७ ।।

तस्यां हिमवत्-समुद्र-अन्तरं उदीचीनं योजन-सहस्र-परिमाणं तिर्यक्चक्र-वर्ति-क्षेत्रं ।। ०९.१.१८ ।।

तत्रारण्यो ग्राम्यः पर्वत औदको भौमः समो विषम इति विशेषाः ।। ०९.१.१९ ।।

तेषु यथा-स्व-बल-वृद्धि-करं कर्म प्रयुञ्जीत ।। ०९.१.२० ।।

यत्र-आत्मनः सैन्य-व्यायामानां भूमिः । अभूमिः परस्य । स उत्तमो देशः । विपरीतोअधमः । साधारणो मध्यमः ।। ०९.१.२१ ।।

कालः शीत-उष्ण-वर्ष-आत्मा ।। ०९.१.२२ ।।

तस्य रात्रिरहः पक्षो मास ऋतुरयनं संवत्सरो युगं इति विशेषाः ।। ०९.१.२३ ।।

तेषु यथा-स्व-बल-वृद्धि-करं कर्म-प्रयुञ्जीत ।। ०९.१.२४ ।।

यत्र-आत्मनः सैन्य-व्यायामानां ऋतुः अनृतुः परस्य । स उत्तमः कालः । विपरीतोअधमः । साधारणो मध्यमः ।। ०९.१.२५ ।।

"शक्ति-देश-कालानां तु शक्तिः श्रेयसी" इत्याचार्याः ।। ०९.१.२६ ।।

शक्तिमान्हि निम्न-स्थलवतो देशस्य शीत-उष्ण-वर्षवतश्च कालस्य शक्तः प्रतीकारे भवति ।। ०९.१.२७ ।।

"देशः श्रेयान्" इत्येके ।। ०९.१.२८ ।।

"स्थल-गतो हि श्वा नक्रं विकर्षति । निम्न-गतो नक्रः श्वानम्" इति ।। ०९.१.२९ ।।

"कालः श्रेयान्" इत्येके ।। ०९.१.३० ।।

"दिवा काकः कौशिकं हन्ति । रात्रौ कौशिकः काकम्" इति ।। ०९.१.३१ ।।

नैति कौटिल्यः ।। ०९.१.३२ ।।

परस्पर-साधका हि शक्ति-देश-कालाः ।। ०९.१.३३ ।।

तैरभ्युच्चितस्तृतीयं चतुर्थं वा दण्डस्यांशं मूले पार्ष्ण्यां प्रत्यन्त-अटवीषु च रक्षा विधाय कार्य-साधन-सहं कोश-दण्डं चऽदाय क्षीण-पुराण-भक्तं अगृहीत-नव-भक्तं असंस्कृत-दुर्गम-मित्रं वार्षिकं चास्य सस्यं हैमनं च मुष्टिं उपहन्तुं मार्गशीर्षीं यात्रां यायात् ।। ०९.१.३४ ।।

हैमानं चास्य सस्यं वासन्तिकं च मुष्टिं उपहन्तुं चैत्रीं यात्रां यायात् ।। ०९.१.३५ ।।

क्षीण-कृण-काष्ठ-उदकं असंस्कृत-दुर्गम-मित्रं वासन्तिकं चास्य सस्यं वार्षिकीं च मुष्टिं उपहन्तुं ज्येष्ठामूलीयां यात्रां यायात् ।। ०९.१.३६ ।।

अत्युष्णं अल्प-यवस-इन्धन-उदकं वा देशं हेमन्ते यायात् ।। ०९.१.३७ ।।

तुषार-दुर्दिनं अगाध-निम्न-प्रायं गहन-तृण-वृक्षं वा देशं ग्रीष्मे यायात् ।। ०९.१.३८ ।।

स्व-सैन्य-व्यायाम-योग्यं परस्यायोग्यं वर्षति यायात् ।। ०९.१.३९ ।।

मार्गशीर्षीं तैषीं चान्तरेण दीर्घ-कालां यात्रां यायात् । चैत्रीं वैशाखीं चान्तरेण मध्यम-कालाम् । ज्येष्ठामूलीयां आषाढीं चान्तरेण ह्रस्व-कालाम् । उपोषिष्यन्व्यसने चतुर्थीं ।। ०९.१.४० ।।

व्यसन-अभियानं विगृह्य-याने व्याख्यातं ।। ०९.१.४१ ।।

प्रायशश्चऽचार्याः "पर-व्यसने यातव्यम्" इत्युपदिशन्ति ।। ०९.१.४२ ।।

शक्त्य्-उदये यातव्यं अनैकान्तिकत्वाद्व्यसनानां इति कौटिल्यः ।। ०९.१.४३ ।।

यदा वा प्रयातः कर्शयितुं उच्छेतुं वा शक्नुयादमित्रं तदा यायात् ।। ०९.१.४४ ।।

अत्युष्ण-उपक्षीणे काले हस्ति-बल-प्रायो यायात् ।। ०९.१.४५ ।।

हस्तिनो ह्यन्तः-स्वेदाः कुष्ठिनो भवन्ति ।। ०९.१.४६ ।।

अनवगाहमानास्तोयं अपिबन्तश्चान्तर्-अवक्षाराच्चान्धी-भवन्ति ।। ०९.१.४७ ।।

तस्मात्प्रभूत-उदके देशे वर्षति च हस्ति-बल-प्रायो यायात् ।। ०९.१.४८ ।।

विपर्यये खर-उष्ट्र-अश्व-बल-प्रायो देशं अल्प-वर्ष-पङ्कं ।। ०९.१.४९ ।।

वर्षति मरु-प्रायं चतुर्-अङ्ग-बलो यायात् ।। ०९.१.५० ।।

सम-विषम-निम्न-स्थल-ह्रस्व-दीर्घ-वशेन वाअध्वनो यात्रां विभजेत् ।। ०९.१.५१ ।।

सर्वा वा ह्रस्व-कालाः स्युर्यातव्याः कार्य-लाघवात् । ।। ०९.१.५२अ ब ।।

दीर्घाः कार्य-गुरुत्वाद्वा वर्षा-वासः परत्र च ।। ०९.१.५२च्द् ।।

मौल-भृतक-श्रेणी-मित्र-अमित्र-अटवी-बलानां समुद्दान-कालाः ।। ०९.२.०१ ।।

मूल-रक्षणादतिरिक्तं मौल-बलम् । अत्यावाप-युक्ता वा मौला मूले विकुर्वीरन् । बहुल-अनुरक्त-मौल-बलः सार-बलो वा प्रतियोद्धा । व्यायामेन योद्धव्यम् । प्रकृष्टेअध्वनि काले वा क्षय-व्यय-सहत्वान्मौलानाम् । बहुल-अनुरक्त-सम्पाते च यातव्यस्यौपजाप-भयादन्य-सैन्यानां भृत-आदीनां अविश्वासे । बल-क्षये वा सर्व-सैन्यानां इति मौल-बल-कालः ।। ०९.२.०२ ।।

"प्रभूतं मे भृत-बलं अल्पं च मौल-बलम्ण्" "परस्याल्पं विरक्तं वा मौल-बलम् । फल्गु-प्रायं असारं वा भृत-सैन्यम्ण्" "मन्त्रेण योद्धव्यं अल्प-व्यायामेनण्" "ह्रस्वो देशः कालो वा तनु-क्षय-व्ययह्ण्" "अल्प-आवापं शान्त-उपजापं विश्वस्तं वा मे सैन्यम्ण्" "परस्याल्पः प्रसारो हन्तव्यह्ण्" इति भृत-बल-कालः ।। ०९.२.०३ ।।

"प्रभूतं मे श्रेणी-बलम् । शक्यं मूले यात्रायां चऽधातुम्ण्" ह्रस्वः प्रवासः । श्रेणी-बल-प्रायः प्रतियोद्धा मन्त्र-व्यायामाभ्यां प्रतियोद्धु-कामः । दण्ड-बल-व्यवहारः इति श्रेणी-बल-कालः ।। ०९.२.०४ ।।

"प्रभूतं मे मित्र-बलं शक्यं मूले यात्रायां चऽधातुम्ण्" "अल्पः प्रवासो मन्त्र-युद्धाच्च भूयो व्यायाम-युद्धम्ण्" "मित्र-बलेन वा पूर्वं अटवीं नगर-स्थानं आसारं वा योधयित्वा पश्चात्स्व-बलेन योद्धयिष्यामिण्" "मित्र-साधारणं वा मे कार्यम्ण्" "मित्र-आयत्ता वा मे कार्य-सिद्धिह्ण्" "आसन्नं अनुग्राह्यं वा मे मित्रम्ण्" "अत्यावापं वाअस्य सादयिष्यामि" इति मित्र-बल-कालः ।। ०९.२.०५ ।।

"प्रभूतं मे शत्रु-बलम् । शत्रु-बलेन योधयिष्यामि नगर-स्थानं अटवीं वा । तत्र मे श्व-वराहयोः कलहे चण्डालस्यैवान्यतर-सिद्धिर्भविष्यतिण्" "आसाराणां अटवीनां वा कण्टक-मर्दनं एतत्करिष्यामिण्" अत्युपचितं वा कोप-भयान्नित्यं आसन्नं अरि-बलं वासयेद् । अन्यत्र-अभ्यन्तर-कोप-शङ्कायाः शत्रु-युद्ध-अवर-युद्ध-कालश्च इत्यमित्र-बल-कालः ।। ०९.२.०६ ।।

तेनाटवी-बल-कालो व्याख्यातः ।। ०९.२.०७ ।।

मार्ग-आदेशिकम् । पर-भूमि-योग्यम् । अरि-युद्ध-प्रतिलोमम् । अटवी-बल-प्रायः शत्रुर्वा । "बिल्वं बिल्वेन हन्यताम्ण्" अल्पः प्रसारो हन्तव्यः इत्यटवी-बल-कालः ।। ०९.२.०८ ।।

सैन्यं अनेकं अनेकस्थं उक्तं अनुक्तं वा विलोप-अर्थं यदुत्तिष्ठति तदौत्साहिकं अभक्त-वेतनं विलोप-विष्टि-प्रताप-करं भेद्यं परेषाम् । अभेद्यं तुल्य-देश-जाति-शिल्प-प्रायं संहतं महत् [इति बल-उपादान-कालाह्] ।। ०९.२.०९ ।।

तेषां कुप्य-भृतं अमित्र-अटवी-बलं विलोप-भृतं वा कुर्यात् ।। ०९.२.१० ।।

अमित्रस्य वा बल-काले प्रत्युत्पन्ने शत्रु-बलं अवगृह्णीयात् । अन्यत्र वा प्रेषयेत् । अफलं वा कुर्यात् । विक्षिप्तं वा वासयेत् । काले वाअतिक्रान्ते विसृजेत् ।। ०९.२.११ ।।

परस्य चएतद्बल-समुद्दानं विघातयेत् । आत्मनः सम्पादयेत् ।। ०९.२.१२ ।।

पूर्वं पूर्वं चएषां श्रेयः सम्नाहयितुं ।। ०९.२.१३ ।।

तद्-भाव-भावित्वान्नित्य-सत्कार-अनुगमाच्च मौल-बलं भृत-बलात्श्रेयः ।। ०९.२.१४ ।।

नित्य-अनन्तरं क्षिप्र-उत्थायि वश्यं व भृत-बलं श्रेणी-बलात्श्रेयः ।। ०९.२.१५ ।।

जानपदं एक-अर्थ-उपगतं तुल्य-संघर्ष-अमर्ष-सिद्धि-लाभं च श्रेणी-बलं मित्र-बलात्श्रेयः ।। ०९.२.१६ ।।

अपरिमित-देश-कालं एक-अर्थ-उपगमाच्च मित्र-बलं अमित्र-बलात्श्रेयः ।। ०९.२.१७ ।।

आर्य-अधिष्ठितं अमित्र-बलं अटवी-बलात्श्रेयः ।। ०९.२.१८ ।।

तदुभयं विलोप-अर्थं ।। ०९.२.१९ ।।

अविलोपे व्यसने च ताभ्यां अहि-भयं स्यात् ।। ०९.२.२० ।।

"ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-सैन्यानां तेजः-प्राधान्यात्पूर्वं पूर्वं श्रेयः सम्नाहयितुम्" इत्याचार्याः ।। ०९.२.२१ ।।

नैति कौटिल्यः ।। ०९.२.२२ ।।

प्रणिपातेन ब्राह्मण-बलं परोअभिहारयेत् ।। ०९.२.२३ ।।

प्रहरण-विद्या-विनीतं तु क्षत्रिय-बलं श्रेयः । बहुल-सारं वा वैश्य-शूद्र-बलं इति ।। ०९.२.२४ ।।

तस्मादेवं-बलः परः । तस्यएतत्प्रतिबलं इति बल-समुद्दानं कुर्यात् ।। ०९.२.२५ ।।

हस्ति-यन्त्र-शकट-गर्भ-कुन्त-प्रास-हाटक-वेणु-शल्यवद्हस्ति-बलस्य प्रतिबलं ।। ०९.२.२६ ।।

तदेव पाषाण-लगुड-आवरण-अङ्कुश-कच-ग्रहणी-प्रायं रथ-बलस्य प्रतिबलं ।। ०९.२.२७ ।।

तदेवाश्वानां प्रतिबलम् । वर्मिणो वा हस्तिनोअश्वा वा वर्मिणः ।। ०९.२.२८ ।।

कवचिनो रथा आवरणिनः पत्तयश्च चतुर्-अङ्ग-बलस्य प्रतिबलं ।। ०९.२.२९ ।।

एवं बल-समुद्दानं पर-सैन्य-निवारणं । ।। ०९.२.३०अ ब ।।

विभवेन स्व-सैन्यानां कुर्यादङ्ग-विकल्पशः ।। ०९.२.३०च्द् ।।

अल्पः पश्चात्-कोपो महान्पुरस्ताल्-लाभ इति अल्पः पश्चात्-कोपो गरीयान् ।। ०९.३.०१ ।।

अल्पं पश्चात्-कोपं प्रयातस्स्य दूष्य-अमित्र-आटविका हि सर्वतः समेधयन्ति । प्रकृति-कोपो वा ।। ०९.३.०२ ।।

लब्धं अपि च महान्तं पुरस्ताल्-लाहं एवं-भूते भृत्य-मित्र-क्षय-व्यया ग्रसन्ते ।। ०९.३.०३ ।।

तस्मात्सहस्र-एकीयः पुरस्ताल्-लाभस्यायोगः शत-एकीयो वा पश्चात्-कोप इति न यायात् ।। ०९.३.०४ ।।

सूची-मुखा ह्यनर्था इति लोक-प्रवादः ।। ०९.३.०५ ।।

पश्चात्-कोपे साम-दान-भेद-दण्डान्प्रयुञ्जीत ।। ०९.३.०६ ।।

पुरस्ताल्-लाभे सेना-पतिं कुमारं वा दण्ड-चारिणं कुर्वीत ।। ०९.३.०७ ।।

बलवान्वा राजा पश्चात्-कोप-अवग्रह-समर्थः पुरस्ताल्-लाभं आदातुं यायात् ।। ०९.३.०८ ।।

अभ्यन्तर-कोप-शङ्कायां शङ्कितानादाय यायात् । बाह्य-कोप-शङ्कायां वा पुत्र-दारं एषां ।। ०९.३.०९ ।।

अभ्यन्तर-अवग्रहं कृत्वा शून्य-पालं अनेक-बल-वर्गं अनेक-मुख्यं च स्थापयित्वा यायात् । न वा यायात् ।। ०९.३.१० ।।

अभ्यन्तर-कोपो बाह्य-कोपात्पापीयानित्युक्तं पुरस्तात् ।। ०९.३.११ ।।

मन्त्र-पुरोहित-सेना-पति-युव-राजानां अन्यतम-कोपोअभ्यन्तर-कोपः ।। ०९.३.१२ ।।

तं आत्म-दोष-त्यागेन पर-शक्त्य्-अपराध-वशेन वा साधयेत् ।। ०९.३.१३ ।।

महा-अपराधेअपि पुरोहिते सम्रोधनं अवस्रावणं वा सिद्धिः । युव-राजे सम्रोधनं निग्रहो वा गुणवत्यन्यस्मिन्सति पुत्रे ।। ०९.३.१४ ।।

पुत्रं भ्रातरं अन्यं वा कुल्यं राज-ग्राहिणं उत्साहेन साधयेत् । उत्साह-अब्भावे गृहीत-अनुवर्तन-संधि-कर्मभ्यां अरि-संधान-भयात् ।। ०९.३.१५ ।।

अन्येभ्यस्तद्-विधेभ्यो वा भूमि-दानैर्विश्वासयेदेनं ।। ०९.३.१६ ।।

तद्-विशिष्टं स्वयं-ग्राहं दण्डं वा प्रेषयेत् । सामन्त-आटविकान्वा । तैर्विगृहीतं अतिसंदध्यात् ।। ०९.३.१७ ।।

अपरुद्ध-आदानं पारग्रामिकं वा योगं आतिष्ठेत् ।। ०९.३.१८ ।।

एतेन मन्त्र-सेना-पती व्याख्यातौ ।। ०९.३.१९ ।।

मन्त्र्य्-आदि-वर्जानां अन्तर्-अमात्यानां अन्यतम-कोपोअन्तर्-अमात्य-कोपः ।। ०९.३.२० ।।

तत्रापि यथा-अर्हं उपायान्प्रयुञ्जीत ।। ०९.३.२१ ।।

राष्ट्र-मुख्य-अन्त-पाल-आटविक-दण्ड-उपनतानां अन्यतम-कोपो बाह्य-कोपः ।। ०९.३.२२ ।।

तं अन्योन्येनावग्राहयेत् ।। ०९.३.२३ ।।

अतिदुर्ग-प्रतिष्टब्धं वा सामन्त-आटविक-तत्-कुलीन-अपरुद्धानां अन्यतमेनावग्राहयेत् ।। ०९.३.२४ ।।

मित्रेणौपग्राहयेद्वा यथा नामित्रं गच्छेत् ।। ०९.३.२५ ।।

अमित्राद्वा सत्त्री भेदयेदेनं "अयं त्वा योग-पुरुषं मन्यमानो भर्तर्येव विक्रमयिष्यति । अवाप्त-अर्थो दण्ड-चारिणं अमित्र-आटविकेषु कृच्छ्रे वा प्रयासे योक्ष्यति । विपुत्र-दारं अन्ते वा वासयिष्यति ।। ०९.३.२६ ।।

प्रतिहत-विक्रमं त्वां भर्तर्य्पण्यं करिष्यति । त्वया वा संधिं कृत्वा भर्तारं एव प्रसादयिष्यति ।। ०९.३.२७ ।।

मित्रं उपकृष्टं वाअस्य गच्छ" इति ।। ०९.३.२८ ।।

प्रतिपन्नं इष्ट-अभिप्रायैः पूजयेत् ।। ०९.३.२९ ।।

अप्रतिपन्नस्य संश्रयं भेदयेद्"असौ ते योग-पुरुषः प्रणिहितः" इति ।। ०९.३.३० ।।

सत्त्री चएनं अभित्यक्त-शासनैर्घातयेत् । गूढ-पुरुषैर्वा ।। ०९.३.३१ ।।

सह-प्रस्थायिनो वाअस्य प्रवीर-पुरुषान्यथा-अभिप्राय-करणेनऽवाहयेत् ।। ०९.३.३२ ।।

तेन प्रणिहितान्सत्त्री ब्रूयात् ।। ०९.३.३३ ।।

इति सिद्धिः ।। ०९.३.३४ ।।

परस्य चएनान्कोपानुत्थापयेत् । आत्मनश्च शमयेत् ।। ०९.३.३५ ।।

यः कोपं कर्तुं शमयितुं वा शक्तस्तत्रौपजापः कार्यः ।। ०९.३.३६ ।।

यः सत्य-संधः शक्तः कर्मणि फल-अवाप्तौ चानुग्रहीतुं विनिपाते च त्रातुं तत्र प्रतिजापः कार्यः । तर्कयितव्यश्च कल्याण-बुद्धिरुताहो शठ इति ।। ०९.३.३७ ।।

शठो हि बाह्योअभ्यन्तरं एवं उपजपति "भर्तारं चेद्हत्वा मां प्रतिपादयिष्यति शत्रु-वधो भूमि-लाभश्च मे द्विविधो लाभो भविष्यति । अथ वा शत्रुरेनं आहनिष्यतिइति हत-बन्धु-पक्षस्तुल्य-दोष-दण्डेनौद्विग्नश्च मे भूयानकृत्य-पक्षो भविष्यति । तद्-विधे वाअन्यस्मिन्नपि शङ्कितो भविष्यति । अन्यं अन्यं चास्य मुख्यम् अभित्यक्त-शासनेन घातयिष्यामि" इति ।। ०९.३.३८ ।।

अभ्यन्तरो वा शठो बाह्यं एवं उपजपति "कोशं अस्य हरिष्यामि । दण्डं वाअस्य हनिष्यामि । दुष्टं वा भर्तारं अनेन घातयिष्यामि । प्रतिपन्नं बाह्यं अमित्र-आटविकेषु विक्रमयिष्यामि "चक्रं अस्य सज्यताम् । वैरं अस्य प्रसज्यताम् । ततः स्व-अधीनो मे भविष्यति । ततो भर्तारं एव प्रसादयिष्यामि । स्वयं वा राज्यं ग्रहीष्यामिण्" बद्ध्वा वा बाह्य-भूमिं भर्तृ-भूमिं चौभयं अवाप्स्यामि । विरुद्धं वाआवाहयित्वा बाह्यं विश्वस्तं घातयिष्यामि । शून्यं वाअस्य मूलं हरिष्यामि" इति ।। ०९.३.३९ ।।

कल्याण-बुद्धिस्तु सह-जीव्यर्थं उपजपति ।। ०९.३.४० ।।

कल्याण-बुद्धिना संदधीत । शठं "तथा" इति प्रतिगृह्यातिसंदध्यात् इति ।। ०९.३.४१ ।।

एवं उपलभ्य परे परेभ्यः स्वे स्वेभ्यः स्वे परेभ्यः स्वतः परे । ।। ०९.३.४२अ ब ।।

रक्ष्याः स्वेभ्यः परेभ्यश्च नित्यं आत्मा विपश्चिता ।। ०९.३.४२च्द् ।।

युग्य-पुरुष-अपचयः क्षयः ।। ०९.४.०१ ।।

हिरण्य-धान्य-अपचयो व्ययः ।। ०९.४.०२ ।।

ताभ्यां बहु-गुण-विशिष्टे लाभे यायात् ।। ०९.४.०३ ।।

आदेयः प्रत्यादेयः प्रसादकः प्रकोपको ह्रस्व-कालस्तनु-क्षयोअल्प-व्ययो महान्वृद्ध्य्-उदयः कल्यो धर्म्यः पुरोगश्चैति लाभ-सम्पत् ।। ०९.४.०४ ।।

सुप्राप्य-अनुपाल्यः परेषां अप्रत्यादेय इत्यादेयः ।। ०९.४.०५ ।।

विपर्यये प्रत्यादेयः ।। ०९.४.०६ ।।

तं आददानस्तत्रस्थो वा विनाशं प्राप्नोति ।। ०९.४.०७ ।।

यदि वा पश्येत्"प्रत्यादेयं आदाय कोश-दण्ड-निचय-रक्षा-विधानान्यवस्रावयिष्यामि । खनि-द्रव्य-हस्ति-वन-सेतु-बन्ध-वणिक्-पथानुद्धृत-सारान्करिष्यामि । प्रकृतीरस्य कर्शयिष्यामि । अपवाहयिष्यामि । आयोगेनऽराधयिष्यामि वा । ताः परं प्रतियोगेन कोपयिष्यति । प्रतिपक्षे वाअस्य पण्यं एनं करिष्यामि । मित्रं अपरुद्धं वाअस्य प्रतिपादयिष्यामि । मित्रस्य स्वस्य वा देशस्य पीडां अत्रस्थस्तस्करेभ्यः परेभ्यश्च प्रतिकरिष्यामि । मित्रं आश्रयं वाअस्य वैगुण्यं ग्राहयिष्यामि । तदमित्र-विरक्तं तत्-कुलीनं प्रतिपत्स्यते । सत्कृत्य वाअस्मै भूमिं दास्यामि इति संहित-समुत्थितं मित्रं मे चिराय भविष्यति" इति प्रत्यादेयं अपि लाभं आददीत ।। ०९.४.०८ ।।

इत्यादेय-प्रत्यादेयौ व्याख्यातौ ।। ०९.४.०९ ।।

अधार्मिकाद्धार्मिकस्य लाभो लभ्यमानः स्वेषां परेषां च प्रसादको भवति ।। ०९.४.१० ।।

विपरीतः प्रकोपक इति ।। ०९.४.११ ।।

मन्त्रिणां उपदेशाल्लाभोअलभ्यमानः कोपको भवति "अयं अस्माभिः क्षय-व्ययौ ग्राहितः" इति ।। ०९.४.१२ ।।

दूष्य-मन्त्रिणां अनादराल्लाभो लभ्यमानः कोपको भवति "सिद्ध-अर्थोअयं अस्मान्विनाशयिष्यति" इति ।। ०९.४.१३ ।।

विपरीतः प्रसादकः ।। ०९.४.१४ ।।

इति प्रसादक-कोपकौ व्याख्यातौ ।। ०९.४.१५ ।।

गमन-मात्र-साध्यत्वाद्ध्रस्व-कालह् ।। ०९.४.१६ ।।

मन्त्र-साध्यत्वात्तनु-क्षयः ।। ०९.४.१७ ।।

भक्त-मात्र-व्ययत्वादल्प-व्ययह् ।। ०९.४.१८ ।।

तदात्व-वैपुल्यान्महान् ।। ०९.४.१९ ।।

अर्थ-अनुबन्धकत्वाद्वृद्ध्य्-उदयः ।। ०९.४.२० ।।

निराबाधकत्वात्कल्यः ।। ०९.४.२१ ।।

प्रशस्त-उपादानाद्धर्म्यः ।। ०९.४.२२ ।।

सामवायिकानां अनिर्बन्ध-गामित्वात्पुरोगः इति ।। ०९.४.२३ ।।

तुल्ये लाभे देश-कालौ शक्त्य्-उपायौ प्रिय-अप्रियौ जव-अजवौ सामीप्य-विप्रकर्षौ तदात्व-अनुबन्धौ सारत्व-सातत्ये बाहुल्य-बाहु-गुण्ये च विमृश्य बहु-गुण-युक्तं लाभं आददीत ।। ०९.४.२४ ।।

लाभ-विघ्नाः कामः कोपः साध्वसं कारुण्यं ह्रीरनार्य-भावो मानः सानुक्रोशता पर-लोक-अपेक्षा धार्मिकत्वं अत्यागित्वं दैन्यं असूया हस्त-गत-अवमानो दौरात्म्यं अविश्वासो भयं अप्रतीकारः शीत-उष्ण-वर्षाणां आक्षम्यं मङ्गल-तिथि-नक्षत्र-इष्टित्वं इति ।। ०९.४.२५ ।।

नक्षत्रं अति पृच्छन्तं बालं अर्थोअतिवर्तते । ।। ०९.४.२६अ ब ।।

अर्थो ह्यर्थस्य नक्षत्रं किं करिष्यन्ति तारकाः ।। ०९.४.२६च्द् ।।

नाधनाः प्राप्नुवन्त्यर्थान्नरा यत्न-शतैरपि । ।। ०९.४.२७अ ब ।।

अर्थैरर्था प्रबध्यन्ते गजाः प्रजिगजैरिव ।। ०९.४.२७च्द् ।।

संध्य्-आदीनां अयथा-उद्देश-अवस्थापनं अपनयः ।। ०९.५.०१ ।।

तस्मादापदः सम्भवन्ति ।। ०९.५.०२ ।।

बाह्य-उत्पत्तिरभ्यन्तर-प्रतिजापा । अभ्यन्तर-उत्पत्तिर्बाह्य-प्रतिजापा । बाह्य-उत्पत्तिर्बाह्य-प्रतिजापा । अभ्यन्तर-उत्पत्तिरभ्यन्तर-प्रतिजापा इत्यापदः ।। ०९.५.०३ ।।

यत्र बाह्या अभ्यन्तर-अनुपजपन्ति । अभ्यन्तरा वा बाह्यान् । तत्र-उभय-योगे प्रतिजपतः सिद्धिर्विशेषवती ।। ०९.५.०४ ।।

सुव्याजा हि प्रतिजपितारो भवन्ति । नौपजपितारः ।। ०९.५.०५ ।।

तेषु प्रशान्तेषु नान्यान्शक्नुयुरुपजपितुं उपजपितारः ।। ०९.५.०६ ।।

कृच्छ्र-उपजापा हि बाह्यानां अभ्यन्तरास्तेषां इतरे वा ।। ०९.५.०७ ।।

महतश्च प्रयत्नस्य वधः परेषाम् । अर्थ-अनुबन्धश्चऽत्मन इति ।। ०९.५.०८ ।।

अभ्यन्तरेषु प्रतिजपत्सु साम-दाने प्रयुञ्जीत ।। ०९.५.०९ ।।

स्थान-मान-कर्म सान्त्वं ।। ०९.५.१० ।।

अनुग्रह-परिहारौ कर्मस्वायोगो वा दानं ।। ०९.५.११ ।।

बाह्येषु प्रतिजपत्सु भेद-दण्डौ प्रयुञ्जीत ।। ०९.५.१२ ।।

सत्त्रिणो मित्र-व्यञ्जना वा बाह्यानां चारं एषां ब्रूयुः "अयं वो राजा दूष्य-व्यञ्जनैरतिसंधातु-कामः । बुध्यध्वम्" इति ।। ०९.५.१३ ।।

दूष्येषु वा दूष्य-व्यञ्जनाः प्रणिहिता दूष्यान्बाह्यैर्भेदयेयुः । बाह्यान्वा दूष्यैः ।। ०९.५.१४ ।।

दूष्याननुप्रविष्टा वा तीक्ष्णाः शस्त्र-रसाभ्यां हन्युः ।। ०९.५.१५ ।।

आहूय वा बाह्यान्घातयेयुः ।। ०९.५.१६ ।।

यत्र बाह्या बाह्यानुपजपन्ति । अभ्यन्तरानभ्यन्तरा वा । तत्रएकान्त-योग उपजपितुः सिद्धिर्विशेषवती ।। ०९.५.१७ ।।

दोष-शुद्धौ हि दूष्या न विद्यन्ते ।। ०९.५.१८ ।।

दूष्य-शुद्धौ हि दोषः पुनरन्यान्दूषयति ।। ०९.५.१९ ।।

तस्माद्बाह्येषुउपजपत्सु भेद-दण्डौ प्रयुञ्जीत ।। ०९.५.२० ।।

सत्त्रिणो मित्र-व्यञ्जना वा ब्रूयुः "अयं वो राजा स्वयं आदातु-कामः । विगृहीताः स्थानेन राज्ञा । बुध्यध्वम्" इति ।। ०९.५.२१ ।।

प्रतिजपितुर्वा दूत-दण्डाननुप्रविष्टास्तीक्ष्णाः शस्त्र-रस-आदिभिरेषां छिद्रेषु प्रहरेयुः ।। ०९.५.२२ ।।

ततः सत्त्रिणः प्रतिजपितारं अभिशंसेयुः ।। ०९.५.२३ ।।

अभ्यन्तरानभ्यन्तरेषुउपजपत्सु यथा-अर्हं उपायं प्रयुञ्जीत ।। ०९.५.२४ ।।

तुष्ट-लिङ्गं अतुष्टं विपरीतं वा साम प्रयुञ्जीत ।। ०९.५.२५ ।।

शौच-सामर्थ्य-अपदेशेन व्यसन-अभ्युदय-अवेक्षणेन वा प्रतिपूजनं इति दानं ।। ०९.५.२६ ।।

मित्र-व्यञ्जनो वा ब्रूयादेतान्"चित्त-ज्ञान-अर्थं उपधास्यति वो राजा । तदस्यऽख्यातव्यं इति ।। ०९.५.२७ ।।

परस्परादृवा भेदयेदेनान्"असौ चासौ च वो राजन्येवं उपजपति" इति भेदः ।। ०९.५.२८ ।।

दाण्डकर्मिकवच्च दण्डः ।। ०९.५.२९ ।।

एतासां चतसृणां आपदां अभ्यन्तरां एव पूर्वं साधयेत् ।। ०९.५.३० ।।

अहि-भयादभ्यन्तर-कोपो बाह्य-कोपात्पापीयानित्युक्तं पुरस्ताड ।। ०९.५.३१ ।।

पूर्वां पूर्वां विजानीयाल्लघ्वीं आपदं आपदां । ।। ०९.५.३२अ ब ।।

उत्थितां बलवद्भ्यो वा गुर्वीं लघ्वीं विपर्यये ।। ०९.५.३२च्द् ।।

दूष्येभ्यः शत्रुभ्यश्च द्विविधा शुद्धा ।। ०९.६.०१ ।।

दूष्य-शुद्धायां पौरेषु जानपदेषु वा दण्ड-वर्जानुपायान्प्रयुञ्जीत ।। ०९.६.०२ ।।

दण्डो हि महा-जने क्षेप्तुं अशक्यः ।। ०९.६.०३ ।।

क्षिप्तो वा तं चार्थं न कुर्यात् । अन्यं चानर्थं उत्पादयेत् ।। ०९.६.०४ ।।

मुख्येषु त्वेषां दाण्ड-कर्मिकवच्चेष्टेत ।। ०९.६.०५ ।।

शत्रु-शुद्धायां यतः शत्रुः प्रधानः कार्यो वा ततः साम-आदिभिः सिद्धिं लिप्सेत ।। ०९.६.०६ ।।

स्वामिन्यायत्ता प्रधान-सिद्धिः । मन्त्रिष्वायत्ताआयत्त-सिद्धिः । उभय-आयत्ता प्रधान-आयत्त-सिद्धिः ।। ०९.६.०७ ।।

दूष्य-अदूष्याणां आमिश्रितत्वादामिश्रा ।। ०९.६.०८ ।।

आमिश्रायां अदूष्यतः सिद्धिः ।। ०९.६.०९ ।।

आलम्बन-अभावे ह्यालम्बिता न विद्यन्ते ।। ०९.६.१० ।।

मित्र-अमित्राणां एकी-भावात्पर-मिश्रा ।। ०९.६.११ ।।

पर-मिश्रायां मित्रतः सिद्धिः ।। ०९.६.१२ ।।

सुकरो हि मित्रेण संधिः । नामित्रेणैति ।। ०९.६.१३ ।।

मित्रं चेन्न संधिं इच्छेदभीक्ष्णं उपजपेत् ।। ०९.६.१४ ।।

ततः सत्त्रिभिरमित्राद्भेदयित्वा मित्रं लभेत ।। ०९.६.१५ ।।

मित्र-संघस्य वा योअन्त-स्थायी तं लभेत ।। ०९.६.१६ ।।

अन्त-स्थायिनि लब्धे मध्य-स्थायिनो भिद्यन्ते ।। ०९.६.१७ ।।

मध्य-स्थायिनं वा लभेत ।। ०९.६.१८ ।।

मध्य-स्थायिनि लब्धे नान्त-स्थायिनः संहन्यन्ते ।। ०९.६.१९ ।।

यथा चएषां आश्रय-भेदस्तानुपायान्प्रयुञ्जीत ।। ०९.६.२० ।।

धार्मिकं जाति-कुल-श्रुत-वृत्त-स्तवेन सम्बन्धेन पूर्वेषां त्रैकाल्य-उपकारानपकाराभ्यां वा सान्त्वयेत् ।। ०९.६.२१ ।।

निवृत्त-उत्साहं विग्रह-श्रान्तं प्रतिहत-उपायं क्षय-व्ययाभ्यां प्रवासेन चौपतप्तं शौचेनान्यं लिप्समानं अन्यस्माद्वा शङ्कमानं मैत्री-प्रधानं वा कल्याण-बुद्धिं साम्ना साधयेत् ।। ०९.६.२२ ।।

लुब्धं क्षीणं वा तपस्वि-मुख्य-अवस्थापना-पूर्वं दानेन साधयेत् ।। ०९.६.२३ ।।

तत्पञ्च-विधं देय-विसर्गो गृहीत-अनुवर्तनं आत्त-प्रतिदानं स्व-द्रव्य-दानं अपूर्वं पर-स्वेषु स्वयं-ग्राह-दानं च ।। ०९.६.२४ ।।

इति दान-कर्म ।। ०९.६.२५ ।।

परस्पर-द्वेष-वैर-भूमि-हरण-शङ्कितं अतोअन्यतमेन भेदयेत् ।। ०९.६.२६ ।।

भीरुं वा प्रतिघातेन "कृत-संधिरेष त्वयि कर्म-करिष्यति । मित्रं अस्य निसृष्टम् । संधौ वा नाभ्यन्तरः" इति ।। ०९.६.२७ ।।

यस्य वा स्व-देशादन्य-देशाद्वा पण्यानि पण्य-अगारतयाआगच्छेयुः तानि अस्य "यातव्याल्लब्धानि" इति सत्त्रिणश्चारयेयुः ।। ०९.६.२८ ।।

बहुली-भूते शासनं अभित्यक्तेन प्रेषयेत्"एतत्ते पण्यं पण्य-अगारं वा मया ते प्रेषितम् । सामवायिकेषु विक्रमस्व । अपगच्छ वा । ततः पण-शेषं अवाप्स्यसि" इति ।। ०९.६.२९ ।।

ततः सत्त्रिणः परेषु ग्राहयेयुः "एतदरि-प्रदत्तम्" इति ।। ०९.६.३० ।।

शत्रु-प्रख्यातं वा पण्यं अविज्ञातं विजिगीषुं गच्छेत् ।। ०९.६.३१ ।।

तदस्य वैदेहक-व्यञ्जनाः शत्रु-मुख्येषु विक्रीणीरन् ।। ०९.६.३२ ।।

ततः सत्त्रिणः परेषु ग्राहयेयुः "एतत्पण्यं अरि-प्रदत्तम्" इति ।। ०९.६.३३ ।।

महा-अपराधानर्थ-मानाभ्यां उपगृह्य वा शस्त्र-रस-अग्निभिरमित्रे प्रणिदध्यात् ।। ०९.६.३४ ।।

अथएकं अमात्यं निष्पातयेत् ।। ०९.६.३५ ।।

तस्य पुत्र-दारं उपगृह्य रात्रौ हतं इति ख्यापयेत् ।। ०९.६.३६ ।।

अथामात्यः शत्रोस्तानेक-एकशः प्ररूपयेत् ।। ०९.६.३७ ।।

ते चेद्यथा-उक्तं कुर्युर्न चएनान्ग्राहयेत् ।। ०९.६.३८ ।।

अशक्तिमतो वा ग्राहयेत् ।। ०९.६.३९ ।।

आप्त-भाव-उपगतो मुख्यादस्यऽत्मानं रक्षणीयं कथयेत् ।। ०९.६.४० ।।

अथामित्र-शासनं मुख्य-उपघाताय प्रेषितं उभय-वेतनो ग्राहयेत् ।। ०९.६.४१ ।।

उत्साह-शक्तिमतो वा प्रेषयेत्"अमुष्य राज्यं गृहाण । यथा-अस्थितो नः संधिः" इति ।। ०९.६.४२ ।।

ततः सत्त्रिणः परेषु ग्राहयेयुः ।। ०९.६.४३ ।।

एकस्य स्कन्ध-आवारं वीवधं आसारं वा घातयेयुः ।। ०९.६.४४ ।।

इतरेषु मैत्रीं ब्रुवाणाः "त्वं एतेषां घातयितव्यः" इत्युपजपेयुः ।। ०९.६.४५ ।।

यस्य वा प्रवीर-पुरुषो हस्ती हयो वा म्रियेत गूढ-पुरुषैर्हन्येत ह्रियेत वा सत्त्रिणः परस्पर-उपहतं ब्रूयुः ।। ०९.६.४६ ।।

ततः शासनं अभिशस्तस्य प्रेषयेत्"भूयः कुरु ततः पण-शीर्षं अवाप्स्यसि" इति ।। ०९.६.४७ ।।

तदुभय-वेतना ग्राहयेयुः ।। ०९.६.४८ ।।

भिन्नेष्वन्यतमं लभेत ।। ०९.६.४९ ।।

तेन सेना-पति-कुमार-दण्ड-चारिणो व्याख्याताः ।। ०९.६.५० ।।

सांधिकं च भेदं प्रयुञ्जीत ।। ०९.६.५१ ।।

इति भेद-कर्म ।। ०९.६.५२ ।।

तीक्ष्णं उत्साहिनं व्यसनिनं स्थित-शत्रुं वा गूढ-पुरुषाः शस्त्र-अग्नि-रस-आदिभिः साधयेयुः । सौकर्यतो वा तेषां अन्यतमः ।। ०९.६.५३ ।।

तीक्ष्णो ह्येकः शस्त्र-रस-अग्निभिः साधयेत् ।। ०९.६.५४ ।।

अयं सर्व-संदोह-कर्म विशिष्टं वा करोति ।। ०९.६.५५ ।।

इत्युपाय-चतुर्-वर्गः ।। ०९.६.५६ ।।

पूर्वः पूर्वश्चास्य लघिष्ठः ।। ०९.६.५७ ।।

सान्त्वं एक-गुणं ।। ०९.६.५८ ।।

दानं द्वि-गुणं सान्त्व-पूर्वं ।। ०९.६.५९ ।।

भेदस्त्रि-गुणः सान्त्व-दान-पूर्वः ।। ०९.६.६० ।।

दण्डश्चतुर्-गुणः सान्त्व-दान-भेद-पूर्वः ।। ०९.६.६१ ।।

इत्यभियुञ्जानेषुउक्तं ।। ०९.६.६२ ।।

स्व-भूमिष्ठेषु तु त एवौपायाः ।। ०९.६.६३ ।।

विशेषस्तु ।। ०९.६.६४ ।।

स्व-भूमिष्ठानां अन्यतमस्य पण्य-अगारैरभिज्ञातान्दूत-मुख्यानभीक्ष्णं प्रेषयेत् ।। ०९.६.६५ ।।

त एनं संधौ पर-हिंसायां वा योजयेयुः ।। ०९.६.६६ ।।

अप्रतिपद्यमानं "कृतो नः संधिः" इत्यावेदयेयुः ।। ०९.६.६७ ।।

तं इतरेषां उभय-वेतनाः संक्रामयेयुः "अयं वो राजा दुष्टः" इति ।। ०९.६.६८ ।।

यस्य वा यस्माद्भयं वैरं द्वेषो वा तं तस्माद्भेदयेयुः "अयं ते शत्रुणा संधत्ते । पुरा त्वां अतिसंधत्ते । क्षिप्रतरं संधीयस्व । निग्रहे चास्य प्रयतस्व" इति ।। ०९.६.६९ ।।

आवाह-विवाहाभ्यां वा कृत्वा सम्योगं असम्युक्तान्भेदयेत् ।। ०९.६.७० ।।

सामन्त-आटविक-तत्-कुलीन-अपरुद्धैश्चएषां राज्यानि घातयेत् । सार्थ-व्रज-अटवीर्वा । दण्डं वाअभिसृतं ।। ०९.६.७१ ।।

परस्पर-अपाश्रयाश्चएषां जाति-संघाश्छिद्रेषु प्रहरेयुः । गूढाश्चाग्नि-रस-शस्त्रेण ।। ०९.६.७२ ।।

वीतंस-गिलवच्चारीन्योगैराचरितैः शठः । ।। ०९.६.७३अ ब ।।

घातयेत्पर-मिश्रायां विश्वासेनऽमिषेण च ।। ०९.६.७३च्द् ।।

काम-आदिरुत्सेकः स्वाः प्रकृतीः कोपयति । अपनयो बाह्याः ।। ०९.७.०१ ।।

तदुभयं आसुरी वृत्तिः ।। ०९.७.०२ ।।

स्व-जन-विकारः कोपः ।। ०९.७.०३ ।।

पर-वृद्धि-हेतुषु आपद्-अर्थोअनर्थः संशय इति ।। ०९.७.०४ ।।

योअर्थः शत्रु-वृद्धिं अप्राप्तः करोति । प्राप्तः प्रत्यादेयः परेषां भवति । प्राप्यमाणो वा क्षय-व्यय-उदयो भवति । स भवत्यापद्-अर्थः ।। ०९.७.०५ ।।

यथा सामन्तानां आमिष-भूतः सामन्त-व्यसनजो लाभः । शत्रु-प्रार्थितो वा स्व-भाव-अधिगम्यो लाभः । पश्चात्कोपेन पार्ष्णि-ग्राहेण वा विगृहीतः पुरस्ताल्-लाभः । मित्र-उच्छेदेन संधि-व्यतिक्रमेण वा मण्डल-विरुद्धो लाभः इत्यापद्-अर्थः ।। ०९.७.०६ ।।

स्वतः परतो वा भय-उत्पत्तिरित्यनर्थः ।। ०९.७.०७ ।।

तयोः अर्थो न वाइति । अनर्थो न वाइति । अर्थोअनर्थ इति । अनर्थोअर्थ इति संशयः ।। ०९.७.०८ ।।

शत्रु-मित्रं उत्साहयितुं अर्थो न वाइति संशयः ।। ०९.७.०९ ।।

शत्रु-बलं अर्थ-मानाभ्यां आवाहयितुं अनर्थो न वाइति संशयः ।। ०९.७.१० ।।

बलवत्-सामन्तां भूमिं आदातुं अर्थोअनर्थ इति संशयः ।। ०९.७.११ ।।

जायसा सम्भूययानं अनर्थोअर्थ इति संशयः ।। ०९.७.१२ ।।

तेषां अर्थ-संशयं उपगच्छेत् ।। ०९.७.१३ ।।

अर्थोअर्थ-अनुबन्धः । अर्थो निरनुबन्धः । अर्थोअनर्थ-अनुबन्धः । अनर्थोअर्थ-अनुबन्धः । अनर्थो निरनुबन्धः । अनर्थोअनर्थ-अनुबन्धः इत्यनुबन्ध-षड्-वर्गः ।। ०९.७.१४ ।।

शत्रुं उत्पाट्य पार्ष्णि-ग्राह-आदानं अर्थोअनर्थ-अनुबन्धः ।। ०९.७.१५ ।।

उदासीनस्य दण्ड-अनुग्रहः फलेन अर्थो निरनुबन्धः ।। ०९.७.१६ ।।

परस्यान्तर्-उच्छेदनं अर्थोअनर्थ-अनुबन्धः ।। ०९.७.१७ ।।

शत्रु-प्रतिवेशस्यानुग्रहः कोश-दण्डाभ्यां अनर्थोअनर्थ-अनुबन्धः ।। ०९.७.१८ ।।

हीन-शक्तिं उत्साह्य निवृत्तिरनर्थो निरनुबन्धः ।। ०९.७.१९ ।।

ज्यायांसं उत्थाप्य निवृत्तिरनर्थोअनर्थ-अनुबन्धः ।। ०९.७.२० ।।

तेषां पूर्वः पूर्वः श्रेयानुपसम्प्राप्तुं ।। ०९.७.२१ ।।

इति कार्य-अवस्थापनं ।। ०९.७.२२ ।।

समन्ततो युगपद्-अर्थ-उत्पत्तिः समन्ततोअर्थ-आपद्भवति ।। ०९.७.२३ ।।

साएव पार्ष्णि-ग्राह-विगृहीता समन्ततोअर्थ-संशय-आपद्भवति ।। ०९.७.२४ ।।

तयोर्मित्र-आक्रन्द-उपग्रहात्सिद्धिः ।। ०९.७.२५ ।।

समन्ततः शत्रुभ्यो भय-उत्पत्तिः समन्त्तोअनर्थ-आपद्भवति ।। ०९.७.२६ ।।

साएव मित्र-विगृहीता समन्ततोअनर्थ-संशय-आपद्भवति ।। ०९.७.२७ ।।

तयोश्चल-अमित्र-आक्रन्द-उपग्रहात्सिद्धिः । पर-मिश्र-अप्रतीकारो वा ।। ०९.७.२८ ।।

इतो लाभ इतरतो लाभ इत्युभयतोअर्थ-आपद्भवति ।। ०९.७.२९ ।।

तस्यां समन्ततोअर्थायां च लाभ-गुण-युक्तं अर्थं आदातुं यायात् ।। ०९.७.३० ।।

तुल्ये लाभ-गुणे प्रधानं आसन्नं अनतिपातिनं ऊनो वा येन भवेत्तं आदातुं यायात् ।। ०९.७.३१ ।।

इतोअनर्थ इतरतोअनर्थ इत्युभयतोअनर्थ-आपत् ।। ०९.७.३२ ।।

तस्यां समन्ततोअनर्थायां च मित्रेभ्यः सिद्धिं लिप्सेत ।। ०९.७.३३ ।।

मित्र-अभावे प्रकृतीनां लघीयस्यएकतोअनर्थां साधयेत् । उभयतोअनर्थां ज्यायस्या । समन्ततोअनर्थां मूलेन प्रतिकुर्यात् ।। ०९.७.३४ ।।

अशक्ये सर्वं उत्सृज्यापगच्छेत् ।। ०९.७.३५ ।।

दृष्टा हि जीवतः पुनर्-आवृत्तिर्यथा सुयात्रा-उदयनाभ्यां ।। ०९.७.३६ ।।

इतो लाभ इतरतो राज्य-अभिमर्श इत्युभयतोअर्थ-अनर्थ-आपद्भवति ।। ०९.७.३७ ।।

तस्यां अनर्थ-साधको योअर्थस्तं आदातुं यायात् ।। ०९.७.३८ ।।

अन्यथा हि राज्य-अभिमर्शं वारयेत् ।। ०९.७.३९ ।।

एतया समन्ततोअर्थ-अनर्थ-आपद्व्याख्याता ।। ०९.७.४० ।।

इतोअनर्थ इतरतोअर्थ-संशय इत्युभयतोअनर्थ-अर्थ-संशया ।। ०९.७.४१ ।।

तस्यां पूर्वं अनर्थं साधयेत् । तत्-सिद्धावर्थ-संशयं ।। ०९.७.४२ ।।

एतया समन्ततोअनर्थ-अर्थ-संशया व्याख्याता ।। ०९.७.४३ ।।

इतोअर्थ इतरतोअनर्थ-संशय इत्युभयतोअर्थ-अनर्थ-संशय-आपड ।। ०९.७.४४ ।।

एतया समन्ततोअर्थ-अनर्थ-संशया व्याख्याता ।। ०९.७.४५ ।।

तस्यां पूर्वां पूर्वां प्रकृतीनां अनर्थ-संशयान्मोक्षयितुं यतेत ।। ०९.७.४६ ।।

श्रेयो हि मित्रं अनर्थ-संशये तिष्ठन्न दण्डः । दण्डो वा न कोश इति ।। ०९.७.४७ ।।

समग्र-मोक्षण-अभावे प्रकृतीनां अवयवान्मोक्षयितुं यतेत ।। ०९.७.४८ ।।

तत्र पुरुष-प्रकृतीनां बहुलं अनुरक्तं वा तीक्ष्ण-लुब्ध-वर्जम् । द्रव्य-प्रकृतीनां सारं महा-उपकारं वा ।। ०९.७.४९ ।।

संधिनाआसनेन द्वैधी-भावेन वा लघूनि । विपर्ययैर्गुरूणि ।। ०९.७.५० ।।

क्षय-स्थान-वृद्धीनां चौत्तर-उत्तरं लिप्सेत ।। ०९.७.५१ ।।

प्रातिलोम्येन वा क्षय-आदीनां आयत्यां विशेषं पश्येत् ।। ०९.७.५२ ।।

इति देश-अवस्थापनं ।। ०९.७.५३ ।।

एतेन यात्रा-आदि-मध्य-अन्तेष्वर्थ-अनर्थ-संशयानां उपसम्प्राप्तिर्व्याख्याता ।। ०९.७.५४ ।।

निरन्तर-योगित्वाच्चार्थ-अनर्थ-संशयानां यात्रा-आदावर्थः श्रेयानुपसम्प्राप्तुं पार्ष्णि-ग्राह-आसार-प्रतिघाते क्षय-व्यय-प्रवास-प्रत्यादेये मूल-रक्षणेषु च भवति ।। ०९.७.५५ ।।

तथाअनर्थः संशयो वा स्व-भूमिष्ठस्य विषह्यो भवति ।। ०९.७.५६ ।।

एतेन यात्रा-मध्येअर्थ-अनर्थ-संशयानां उपसम्प्राप्तिर्व्याख्याता ।। ०९.७.५७ ।।

यात्रा-अन्ते तु कर्शनीयं उच्छेदनीयं वा कर्शयित्वाउच्छिद्य वाअर्थः श्रेयानुपसम्प्राप्तुं नानर्थः संशयो वा पर-आबाध-भयात् ।। ०९.७.५८ ।।

सामवायिकानां अपुरोगस्य तु यात्रा-मध्य-अन्तगोअनर्थः संशयो वा श्रेयानुपसम्प्राप्तुं अनिर्बन्ध-गामित्वात् ।। ०९.७.५९ ।।

अर्थो धर्मः काम इत्यर्थ-त्रि-वर्गः ।। ०९.७.६० ।।

तस्य पूर्वः पूर्वः श्रेयानुपसम्प्राप्तुं ।। ०९.७.६१ ।।

अनर्थोअधर्मः शोक इत्यनर्थ-त्रि-वर्गः ।। ०९.७.६२ ।।

तस्य पूर्वः पूर्वः श्रेयान्प्रतिकर्तुं ।। ०९.७.६३ ।।

अर्थोअनर्थ इति । धर्मोअधर्म इति । कामः शोक इति संशय-त्रि-वर्गः ।। ०९.७.६४ ।।

तस्यौत्तर-पक्ष-सिद्धौ पूर्व-पक्षः श्रेयानुपसम्प्राप्तुं ।। ०९.७.६५ ।।

इति काल-अवस्थापनं ।। ०९.७.६६ ।।

इत्यापदः तासां सिद्धिः ।। ०९.७.६७ ।।

पुत्र-भ्रातृ-बन्धुषु साम-दानाभ्यां सिद्धिरनुरूपा । पौर-जानपद-दण्ड-मुख्येषु दान-भेदाभ्याम् । सामन्त-आटविकेषु भेद-दण्डाभ्यां ।। ०९.७.६८ ।।

एषाअनुलोमा । विपर्यये प्रतिलोमा ।। ०९.७.६९ ।।

मित्र-अमित्रेषु व्यामिश्रा सिद्धिः ।। ०९.७.७० ।।

परस्पर-साधका ह्युपायाः ।। ०९.७.७१ ।।

शत्रोः शङ्कित-अमात्येषु सान्त्वं प्रयुक्तं शेष-प्रयोगं निवर्तयति । दूष्य-अमात्येषु दानम् । संघातेषु भेदः । शक्तिमत्सु दण्ड इति ।। ०९.७.७२ ।।

गुरु-लाघव-योगाच्चऽपदां नियोग-विकल्प-समुच्चया भवन्ति ।। ०९.७.७३ ।।

"अनेनएवौपायेन नान्येन" इति नियोगः ।। ०९.७.७४ ।।

"अनेन वाअन्येन वा" इति विकल्पः ।। ०९.७.७५ ।।

"अनेनान्येन च" इति समुच्चयः ।। ०९.७.७६ ।।

तेषां एक-योगाश्चत्वारस्त्रि-योगाश्च । द्वि-योगाः षट् । एकश्चतुर्-योगः ।। ०९.७.७७ ।।

इति पञ्च-दश-उपायाः ।। ०९.७.७८ ।।

तावन्तः प्रतिलोमाः ।। ०९.७.७९ ।।

तेषां एकेनौपायेन सिद्धिरेक-सिद्धिः । द्वाभ्यां द्वि-सिद्धिः । त्रिभिस्त्रि-सिद्धिः । चतुर्भिश्चतुः-सिद्धिरिति ।। ०९.७.८० ।।

धर्म-मूलत्वात्काम-फलत्वाच्चार्थस्य धर्म-अर्थ-काम-अनुबन्धा याअर्थस्य सिद्धिः सा सर्व-अर्थ-सिद्धिः <इति सिद्धयह्> ।। ०९.७.८१ ।।

दैवादग्निरुदकं व्याधिः प्रमारो विद्रवो दुर्भिक्षं आसुरी सृष्टिरित्यापदः ।। ०९.७.८२ ।।

तासां दैवत-ब्राह्मण-र्पणिपाततः सिद्धिः ।। ०९.७.८३ ।।

अतिवृष्टिरवृष्टिर्वा सृष्टिर्वा याआसुरी भवेत् । ।। ०९.७.८४अ ब ।।

तस्यां आथर्वणं कर्म सिद्ध-आरम्भाश्च सिद्धयः ।। ०९.७.८४च्द् ।।

वास्तुक-प्रशस्ते वास्तुनि नायक-वर्धकि मौहूर्तिकाः स्कन्ध-आवारम् । वृत्तं दीर्घं चतुर्-अश्रं वा भूमि-वशेन वा । चतुर्-द्वारं षट्-पथं नव-संस्थानं मापयेयुः खात-वप्र-साल-द्वार-अट्टालक-सम्पन्नं भये स्थाने च ।। १०.१.०१ ।।

मध्यमस्यौत्तरे नव-भागे राज-वास्तुकं धनुः-शत-आयामं अर्ध-विस्तारम् । पश्चिम-अर्धे तस्यान्तः-पुरं ।। १०.१.०२ ।।

अन्तर्-वंशिक-सैन्यं चान्ते निविशेत ।। १०.१.०३ ।।

पुरस्तादुपस्थानम् । दक्षिणतः कोश-शासन-कार्य-करणानि । वामतो राज-औपवाह्यानां हस्त्य्-अश्व-रथानां स्थानं ।। १०.१.०४ ।।

अतो धनुः-शत-अन्तराश्चत्वारः शकट-मेथी-प्रतति-स्तम्भ-साल-परिक्षेपाः ।। १०.१.०५ ।।

प्रथमे पुरस्तान्मन्त्रि-पुरोहितौ । दण्षिणतः कोष्ठ-अगारं महानसं च । वामतः कुप्य-आयुध-अगारं ।। १०.१.०६ ।।

द्वितीये मौल-भृतानां स्थानं अश्व-रथानां सेना-पतेश्च ।। १०.१.०७ ।।

तृतीये हस्तिनः श्रेण्यः प्रशास्ता च ।। १०.१.०८ ।।

चतुर्थे विष्टिर्नायको मित्र-अमित्र-अटवी-बलं स्व-पुरुष-अधिष्ठितं ।। १०.१.०९ ।।

वणिजो रूप-आजीवाश्चानु-महा-पथं ।। १०.१.१० ।।

बाह्यतो लुब्धक-श्व-गणिनः सतूर्य-अग्नयः । गूढाश्चऽरक्षाः ।। १०.१.११ ।।

शत्रूणां आपाते कूप-कूट-अवपात-कण्टकिनीश्च स्थापयेत् ।। १०.१.१२ ।।

अष्टादश-वर्गाणां आरक्ष-विपर्यासं कारयेत् ।। १०.१.१३ ।।

दिव-आयामं च कारयेदपसर्प-ज्ञान-अर्थं ।। १०.१.१४ ।।

विवाद-सौरिक-समाज-द्यूत-वारणं च कारयेत् । मुद्रा-रक्षणं च ।। १०.१.१५ ।।

सेना-निवृत्तं आयुधीयं अशासनं शून्य-पालो बध्नीयात् ।। १०.१.१६ ।।

पुरस्तादध्वनः सम्यक्-प्रशास्ता रक्षणानि च । ।। १०.१.१७अ ब ।।

यायाद्वर्धकि-विष्टिभ्यां उदकानि च कारयेत् ।। १०.१.१७च्द् ।।

ग्राम-अरण्यानां अध्वनि निवेशान्यवस-इन्धन-उदक-वशेन परिसंख्याय स्थान-आसन-गमन-कालं च यात्रां यायात् ।। १०.२.०१ ।।

तत्-प्रतीकार-द्वि-गुणं भक्त-उपकरणं वाहयेत् ।। १०.२.०२ ।।

अशक्तो वा सैन्येष्वायोजयेत् । अन्तरेषु वा निचिनुयात् ।। १०.२.०३ ।।

पुरस्तान्नायकः । मध्ये कलत्रं स्वामी च । पार्श्वयोरश्वा बाहु-उत्सारः । चक्र-अन्तेषु हस्तिनः प्रसार-वृद्धिर्वा । पश्चात्सेना-पतिर्यायात्निविशेत ।। १०.२.०४ ।।

सर्वतो वन-आजीवः प्रसारः ।। १०.२.०५ ।।

स्व-देशादन्वायतिर्वीवधः ।। १०.२.०६ ।।

मित्र-बलं आसारः ।। १०.२.०७ ।।

कलत्र-स्थानं अपसारः ।। १०.२.०८ ।।

पुरस्तादध्याघाते मकरेण यायात् । पश्चात्शकटेन । पार्श्वयोर्वज्रेण । समन्ततः सर्वतो-भद्रेण । एक-अयने सूच्या ।। १०.२.०९ ।।

पथि-द्वैधी-भावे स्वभूमितो यायात् ।। १०.२.१० ।।

अभूमिष्ठानां हि स्व-भूमिष्ठा युद्धे प्रतिलोमा भवन्ति ।। १०.२.११ ।।

योजनं अधमा । अध्यर्धं मध्यमा । द्वि-योजनं उत्तमा । सम्भाव्या वा गतिः ।। १०.२.१२ ।।

आश्रय-कारी सम्पन्न-घाती पार्ष्णिरासारो मध्यम उदासीनो वा प्रतिकर्तव्यः । संकटो मार्गः शोधयितव्यः । कोशो दण्डो मित्र-अमित्र-अटवी-बलं विष्टि-ऋतुर्वा प्रतीक्ष्याः । कृत-दुर्ग-कर्म-निचय-रक्षा-क्षयः क्रीत-बल-निर्वेदो मित्र-बल-निर्वेदश्चऽगमिष्यति । उपजपितारो वा नातित्वरयन्ति । शत्रुरभिप्रायं वा पूरयिष्यति । इति शनैर्यायात् । विपर्यये शीघ्रं ।। १०.२.१३ ।।

हस्ति-स्तम्भ-संक्रम-सेतु-बन्ध-नौ-काष्ठ-वेणु-संघातैरलाबु-चर्म-करण्ड-दृति-प्लव-गण्डिका-वेणिकाभिश्चौदकानि तारयेत् ।। १०.२.१४ ।।

तीर्थ-अभिग्रहे हस्त्य्-अश्वैरन्यतो रात्रावुत्तार्य सत्त्रं गृह्णीयात् ।। १०.२.१५ ।।

अनुदके चक्रि-चतुष्पदं चाध्व-प्रमाणेन शक्त्याउदकं वाहयेत् ।। १०.२.१६ ।।

दीर्घ-कान्तारं अनुदकं यवस-इन्धन-उदक-हीनं वा कृच्छ्र-अध्वानं अभियोग-प्रस्कन्नं क्षुत्-पिपासा-अध्व-क्लान्तं पङ्क-तोय-गम्भीराणां वा नदी-दरी-शैलानां उद्यान-अपयाने व्यासक्तं एक-अयन-मार्गे शैल-विषमे संकटे वा बहुली-भूतं निवेशे प्रस्थिते विसम्नाहं भोजन-व्यासक्तं आयत-गत-परिश्रान्तं अवसुप्तं व्याधि-मरक-दुर्भिक्ष-पीडितं व्याधित-पत्त्य्-अश्व-द्विपं अभूमिष्ठं वा बल-व्यसनेषु वा स्व-सैन्यं रक्षेत् । पर-सैन्यं चाभिहन्यात् ।। १०.२.१७ ।।

एक-अयन-मार्ग-प्रयातस्य सेना-निश्चार-ग्रास-आहार-शय्या-प्रस्तार-अग्नि-निधान-ध्वज-आयुध-संख्यानेन पर-बल-ज्ञानं ।। १०.२.१८ ।।

तदाआत्मानो गूहयेत् ।। १०.२.१९ ।।

पार्वतं वन-दुर्गं वा सापसार-प्रतिग्रहं । ।। १०.२.२०अ ब ।।

स्व-भुमौ पृष्ठतः कृत्वा युध्येत निविशेत च ।। १०.२.२०च्द् ।।

बल-विशिष्टः कृत-उपजापः प्रतिविहित-ऋतुः स्व-भूम्यां प्रकाश-युद्धं उपेयात् ।। १०.३.०१ ।।

विपर्यये कूट-युद्धं ।। १०.३.०२ ।।

बल-व्यसन-अवस्कन्द-कालेषु परं अभिहन्यात् । अभूमिष्ठं वा स्व-भूमिष्ठः । प्रकृति-प्रग्रहो वा स्व-भूमिष्ठं ।। १०.३.०३ ।।

दूष्य-अमित्र-अटवी-बलैर्वा भङ्गं दत्त्वा विभूमि-प्राप्तं हन्यात् ।। १०.३.०४ ।।

संहत-अनीकं हस्तिभिर्भेदयेत् ।। १०.३.०५ ।।

पूर्वं भङ्ग-प्रदानेनानुप्रलीनं भिन्नं अभिन्नः प्रतिनिवृत्य हन्यात् ।। १०.३.०६ ।।

पुरस्तादभिहत्य प्रचलं विमुखं वा पृष्ठतो हस्त्य्-अश्वेनाभिहन्यात् ।। १०.३.०७ ।।

पृष्ठतोअभिहत्या प्रचलं विमुखं वा पुरस्तात्सार-बलेनाभिहन्यात् ।। १०.३.०८ ।।

ताभ्यां पार्श्व-अभिगातौ व्याख्यातौ ।। १०.३.०९ ।।

यतो वा दूष्य-फल्गु-बलं ततोअभिहन्यात् ।। १०.३.१० ।।

पुरस्ताद्विषमायां पृष्ठतोअभिहन्यात् ।। १०.३.११ ।।

पृष्ठतो विषमायां पुरस्तादभिहन्यात् ।। १०.३.१२ ।।

पार्श्वतो विषमायां इतरतोअभिहन्यात् ।। १०.३.१३ ।।

दूष्य-अमित्र-अटवी-बलैर्वा पूर्वं योधयित्वा श्रान्तं अश्रान्तः परं अभिहन्यात् ।। १०.३.१४ ।।

दूष्य-बलेन वा स्वयं भङ्गं दत्त्वा "जितम्" इति विश्वस्तं अविश्वस्तः सत्त्र-अपाश्रयोअभिहन्यात् ।। १०.३.१५ ।।

सार्थ-व्रज-स्कन्ध-आवार-संवाह-विलोप-प्रमत्तं अप्रमत्तोअभिहन्यात् ।। १०.३.१६ ।।

फल्गु-बल-अवच्छन्न-सार-बलो वा पर-वीराननुप्रविश्य हन्यात् ।। १०.३.१७ ।।

गो-ग्रहणेन श्वा-पद-वधेन वा पर-वीरानाकृष्य सत्त्रच्-छन्नोअभिहन्यात् ।। १०.३.१८ ।।

रात्राववस्कन्देन जागरयित्वा निद्रा-क्लान्तानवसुप्तान्वा दिवा हन्यात् ।। १०.३.१९ ।।

सपाद-चर्म-कोशैर्वा हस्तिभिः सौप्तिकं दद्यात् ।। १०.३.२० ।।

अहः-सम्नाह-परिश्रान्तानपर-अह्नेअभिहन्यात् ।। १०.३.२१ ।।

शुष्क-चर्म-वृत्त-शर्कर-आकोशकैर्गो-महिष-उष्ट्र-यूथैर्वा त्रस्नुभिरकृत-हस्त्य्-अश्वं भिन्नं अभिन्नः प्रतिनिवृत्तं हन्यात् ।। १०.३.२२ ।।

प्रतिसूर्य-वातं वा सर्वं अभिहन्यात् ।। १०.३.२३ ।।

धान्वन-वन-संकट-पङ्क-शैल-निम्न-विषम-नावो गावः शकटव्यूहो नीहारो रात्रिरिति सत्त्राणि ।। १०.३.२४ ।।

पूर्वे च प्रहरण-कालाः कूट-युद्ध-हेतवः ।। १०.३.२५ ।।

संग्रामस्तु निर्दिष्ट-देश-कालो धर्मिष्ठः ।। १०.३.२६ ।।

संहत्य दण्डं ब्रूयात्"तुल्य-वेतनोअस्मि । भवद्भिः सह भोग्यं इदं राज्यम् । मयाअभिहितैः परोअभिहन्तव्यः" इति ।। १०.३.२७ ।।

वेदेष्वप्यनुश्रूयते समाप्त-दक्षिणानां यज्ञानां अवभृथेषु "सा ते गतिर्या शूराणाम्" इति ।। १०.३.२८ ।।

अपिइह श्लोकौ भवतः ।। १०.३.२९ ।।

"यान्यज्ञ-संघैस्तपसा च विप्राः स्वर्ग-एषिणः पात्र-चयैश्च यान्ति । ।। १०.३.३०अ ब ।।

क्षणेन तानप्यतियान्ति शूराः प्राणान्सुयुद्धेषु परित्यजन्तः ।। १०.३.३०च्द् ।।

"नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भ-कृत-उत्तरीयं । ।। १०.३.३१अ ब ।।

तत्तस्य मा भून्नरकं च गच्छेद्यो भर्तृ-पिण्डस्य कृते न युध्येत् इति ।। १०.३.३१च्द् ।।

मन्त्रि-पुरोहिताभ्यां उत्साहयेद्योधान्व्यूह-सम्पदा ।। १०.३.३२ ।।

कार्तान्तिक-आदिश्चास्य वर्गः सर्वज्ञ-दैवत-सम्योग-ख्यापनाभ्यां स्व-पक्षं उद्धर्षयेत् । पर-पक्षं चौद्वेजयेत् ।। १०.३.३३ ।।

"श्वो युद्धम्" इति कृत-उपवासः शस्त्र-वाहनं चानुशयीत ।। १०.३.३४ ।।

अथर्वभिश्च जुहुयात् ।। १०.३.३५ ।।

विजय-युक्ताः स्वर्गीयाश्चऽशिषो वाचयेत् ।। १०.३.३६ ।।

ब्राह्मणेभ्यश्चऽत्मानं अतिसृजेत् ।। १०.३.३७ ।।

शौर्य-शिल्प-अभिजन-अनुराग-युक्तं अर्थ-मानाभ्यां अविसंवादितं अनीक-गर्भं कुर्वीत ।। १०.३.३८ ।।

पितृ-पुत्र-भ्रातृकाणां आयुधीयानां अध्वजं मुण्ड-अनीकं राज-स्थानं ।। १०.३.३९ ।।

हस्ती रथो वा राज-वाहनं अश्व-अनुबन्धः ।। १०.३.४० ।।

यत्प्राय-सैन्यो यत्र वा विनीतः स्यात्त्(अद्) अधिरोहयेत् ।। १०.३.४१ ।।

राज-व्यञ्जनो व्यूह-अधिष्ठानं आयोज्यः ।। १०.३.४२ ।।

सूत-मागधाः शूराणां स्वर्गं अस्वर्गं भीरूणां जाति-संघ-कुल-कर्म-वृत्त-स्तवं च योधानां वर्णयेयुः ।। १०.३.४३ ।।

पुरोहित-पुरुषाः कृत्य-अभिचारं ब्रूयुः । यन्त्रिक-वर्धकि-मौहूर्तिकाः स्व-कर्म-सिद्धिं असिद्धिं परेषां ।। १०.३.४४ ।।

सेना-पतिरर्थ-मानाभ्यां अभिसंस्कृतं अनीकं आभाषेत "शत-साहस्रो राज-वधः । पञ्चाशत्-साहस्रः सेना-पति-कुमार-वधः । दश-साहस्रः प्रवीर-मुख्य-वधः । पञ्च-साहस्रो हस्ति-रथ-वधः । साहस्रोअश्व-वधः । शत्यः पत्ति-मुख्य-वधः । शिरो विंशतिकं भोग-द्वैगुण्यं स्वयं-ग्राहश्च" इति ।। १०.३.४५ ।।

तदेषां दश-वर्ग-अधिपतयो विद्युः ।। १०.३.४६ ।।

चिकित्सकाः शस्त्र-यन्त्र-अगद-स्नेह-वस्त्र-हस्ताः स्त्रियश्चान्न-पान-रक्षिण्यः पुरुषाणां उद्धर्षणीयाः पृष्ठतस्तिष्ठेयुः ।। १०.३.४७ ।।

अदक्षिणा-मुखं पृष्ठतः-सूर्यं अनुलोम-वातं अनीकं स्व-भूमौ व्यूहेत ।। १०.३.४८ ।।

पर-भूमि-व्यूहे चाश्वांश्चारयेयुः ।। १०.३.४९ ।।

यत्र स्थानं प्रजवश्चाभूमिर्व्यूहस्य तत्र स्थितः प्रजवितश्चौभयथा जीयेत विपर्यये जयति । उभयथा स्थाने प्रजवे च ।। १०.३.५० ।।

समा विषमा व्यामिश्रा वा भूमिरिति पुरस्तात्पार्श्वाभ्यां पश्चाच्च ज्ञेया ।। १०.३.५२ ।।

समायां दण्ड-मण्डल-व्यूहाः । विषमायां भोग-असंहत-व्यूहाः । व्यामिश्रायां विषम-व्यूहाः ।। १०.३.५३ ।।

विशिष्ट-बलं भङ्क्त्वा संधिं याचेत ।। १०.३.५४ ।।

सम-बलेन याचितः संदधीत ।। १०.३.५५ ।।

हीनं अनुहन्यात् । न त्वेव स्व-भूमि-प्राप्तं त्यक्त-आत्मानं वा ।। १०.३.५६ ।।

पुनर्-आवर्तमानस्य निराशस्य च जीविते । ।। १०.३.५७अ ब ।।

अधार्यो जायते वेगस्तस्माद्भग्नं न पीडयेत् ।। १०.३.५७च्द् ।।

स्व-भूमिः पत्त्य्-अश्व-रथ-द्विपानां इष्टा युद्धे निवेशे च ।। १०.४.०१ ।।

धान्वन-वन-निम्न-स्थल-योधिनां खनक-आकाश-दिवा-रात्रि-योधिनां च पुरुषाणां नादेय-पार्वत-आनूप-सारसानां च हस्तिनां अश्वानां च यथा-स्वं इष्टा युद्ध-भूमयः कालाश्च ।। १०.४.०२ ।।

समा स्थिराअभिकाशा निरुत्खातिन्य-चक्र-खुराअनक्ष-ग्राहिण्य-वृक्ष-गुल्म-व्रतती-स्तम्भ-केदार-श्वभ्र-वल्मीक-सिकता-पङ्क-भङ्गुरा दरण-हीना च रथ-भूमिः । हस्त्य्-अश्वयोर्मनुष्याणां च समे विषमे हिता युद्धे निवेशे च ।। १०.४.०३ ।।

अण्व्-अश्म-वृक्षा ह्रस्व-लङ्घनीय-श्वभ्रा मन्द-दरण-दोषा चाश्व-भूमिः ।। १०.४.०४ ।।

स्थूल-स्थाण्वश्म-वृक्ष-व्रतती-वल्मीक-गुल्मा पदाति-भूमिः ।। १०.४.०५ ।।

गम्य-शैल-निम्न-विषमा मर्दनीय-वृक्षा छेदनीय-व्रतती पङ्क-भङ्गुरा दरण-हीना च हस्ति-भूमिः ।। १०.४.०६ ।।

अकण्टकिन्यबहु-विषमा प्रत्यासारवतीइति पदातीनां अतिशयः ।। १०.४.०७ ।।

द्वि-गुण-प्रत्यासारा कर्दम-उदक-खञ्जन-हीना निह्शर्कराइति वाजिनां अतिशयः ।। १०.४.०८ ।।

पांसु-कर्दम-उदक-नल-शर-आधानवती श्व-दण्ष्ट्र-हीना महा-वृक्ष-शाखा-घात-वियुक्ताइति हस्तिनां अतिशयः ।। १०.४.०९ ।।

तोय-आशय-अपाश्रयवती निरुत्खातिनी केदार-हीना व्यावर्तन-समर्थाइति रथानां अतिशयः ।। १०.४.१० ।।

उक्ता सर्वेषां भूमिः ।। १०.४.११ ।।

एतया सर्व-बल-निवेशा युद्धानि च व्याख्यातानि भवन्ति ।। १०.४.१२ ।।

भूमि-वास-वन-विचयोअविषम-तोय-तीर्थ-वात-रश्मि-ग्रहणं वीवध-आसारयोर्घातो रक्षा वा विशुद्धिः स्थापना च बलस्य प्रसार-वृद्धिर्बाहु-उत्सारः पूर्व-प्रहारो व्यावेशनं व्यावेधनं आश्वासो ग्रहणं मोक्षणं मार्ग-अनुसार-विनिमयः कोश-कुमार-अभिहरणं जघन-कोट्य्-अभिघातो हीन-अनुसारणं अनुयानं समाज-कर्मेत्यश्व-कर्माणि ।। १०.४.१३ ।।

पुरो-यानं अकृत-मार्ग-वास-तीर्थ-कर्म बाहु-उत्सारस्तोय-तरण-अवतरणे स्थान-गमन-अवतरणं विषम-सम्बाध-प्रवेशोअग्नि-दान-शमनं एक-अङ्ग-विजयो भिन्न-संधानं अभिन्न-भेदनं व्यसने त्राणं अभिघातो विभीषिका त्रासनं-औदार्यं ग्रहणं मोक्षणं साल-द्वार-अट्टालक-भञ्जनं कोश-वाहन-अपवाहनं इति हस्ति-कर्माणि ।। १०.४.१४ ।।

स्व-बल-रक्षा चतुर्-अङ्ग-बल-प्रतिषेधः संग्रामे ग्रहणं मोक्षणं भिन्न-संधानं अभिन्न-भेदनं त्रासनं औदार्यं भीम-घोषश्चैति रथ-कर्माणि ।। १०.४.१५ ।।

सर्व-देश-काल-शस्त्र-वहनं व्यायामश्चैति पदाति-कर्माणि ।। १०.४.१६ ।।

शिबिर-मार्ग-सेतु-कूप-तीर्थ-शोधन-कर्म यन्त्र-आयुध-आवरण-उपकरण-ग्रास-वहनं आयोधनाच्च प्रहरण-आवरण-प्रतिविद्ध-अपनयनं इति विष्टि-कर्माणि ।। १०.४.१७ ।।

कुर्याद्गव-अश्व-व्यायोगं रथेष्वल्प-हयो नृपः । ।। १०.४.१८अ ब ।।

खर-उष्ट्र-शकटानां वा गर्भं अल्प-गजस्तथा ।। १०.४.१८च्द् ।।

पञ्च-धनुः-शत-अपकृष्टं दुर्गं अवस्थाप्य युद्धं उपेयात् । भूमि-वशेन वा ।। १०.५.०१ ।।

विभक्त-मुख्यां अचक्षुर्-विषये मोक्षयित्वा सेनां सेना-पति-नायकौ व्यूहेयातां ।। १०.५.०२ ।।

शम-अन्तरं पत्तिं स्थापयेत् । त्रि-शम-अन्तरं अश्वम् । पञ्च-शम-अन्तरं रथं हस्तिनं वा ।। १०.५.०३ ।।

द्वि-गुण-अन्तरं त्रि-गुण-अन्तरं वा व्यूहेत ।। १०.५.०४ ।।

एवं यथा-सुखं असम्बाधं युध्येत ।। १०.५.०५ ।।

पञ्च-अरत्नि धनुः ।। १०.५.०६ ।।

तस्मिन्धन्विनं स्थापयेत् । त्रि-धनुष्यश्वम् । पञ्च-धनुषि रथं हस्तिनं वा ।। १०.५.०७ ।।

पञ्च-धनुरनीक-संधिः पक्ष-कक्ष-उरस्यानां ।। १०.५.०८ ।।

अश्वस्य त्रयः पुरुषाः प्रतियोद्धारः ।। १०.५.०९ ।।

पञ्च-दश रथस्य हस्तिनो वा । पञ्च चाश्वाः ।। १०.५.१० ।।

तावन्तः पाद-गोपा वाजि-रथ-द्विपानां विधेयाः ।। १०.५.११ ।।

त्रीणि त्रिकाण्यनीकं रथानां उरस्यं स्थापयेत् । तावत्कक्षं पक्षं चौभयतः ।। १०.५.१२ ।।

पञ्च-चत्वारिंशदेवं रथा रथ-व्यूहे भवन्ति । द्वे शते पञ्च-विंशतिश्चाश्वाः । षट्-शतानि पञ्च-सप्ततिश्च पुरुषाः प्रतियोधारः । तावन्तः पाद-गोपाः ।। १०.५.१३ ।।

एष सम-व्यूहः ।। १०.५.१४ ।।

तस्य द्वि-रथ-उत्तरा वृद्धिरा-एक-विंशति-रथादिति ।। १०.५.१५ ।।

एवं ओजा दश सम-व्यूह-प्रकृतयो भवन्ति ।। १०.५.१६ ।।

पक्ष-कक्ष-उरस्यानां मिथो विषम-संख्याने विषम-व्यूहः ।। १०.५.१७ ।।

तस्यापि द्वि-रथौत्तरा वृद्धिरा-एक-विंशति-रथादिति ।। १०.५.१८ ।।

एवं ओजा दश विषम-व्यूह-प्रकृतयो भवन्ति ।। १०.५.१९ ।।

अतः सैन्यानां व्यूह-शेषं आवापः कार्यः ।। १०.५.२० ।।

रथानां द्वौ त्रि-भागावङ्गेष्वावापयेत् । शेषं उरस्यं स्थापयेत् ।। १०.५.२१ ।।

एवं त्रि-भाग-ऊनो रथानां आवापः कार्यः ।। १०.५.२२ ।।

तेन हस्तिनां अश्वानां आवापो व्याख्यातः ।। १०.५.२३ ।।

यावद्-अश्व-रथ-द्विपानां युद्ध-सम्बाधनं न कुर्यात्तावदावापः कार्यः ।। १०.५.२४ ।।

दण्ड-बाहुल्यं आवापः ।। १०.५.२५ ।।

पत्ति-बाहुल्यं प्रत्यापावः ।। १०.५.२६ ।।

एक-अङ्ग-बाहुल्यं अन्वावापः ।। १०.५.२७ ।।

दूष्य-बाहुल्यं अत्यावापः ।। १०.५.२८ ।।

पर-आवापात्प्रत्यावापाच्च चतुर्-गुणादा-अष्ट-गुणादिति वा विभवतः सैन्यानां आवापः ।। १०.५.२९ ।।

रथ-व्यूहेन हस्ति-व्यूहो व्याख्यातः ।। १०.५.३० ।।

व्यामिश्रो वा हस्ति-रथ-अश्वानां चक्र-अन्तेषु हस्तिनः पार्श्वयोरश्वा रथा उरस्ये ।। १०.५.३१ ।।

हस्तिनां उरस्यं रथानां कक्षावश्वानां पक्षाविति मध्य-भेदी ।। १०.५.३२ ।।

विपरीतोअन्त-भेदी ।। १०.५.३३ ।।

हस्तिनां एव तु शुद्धः साम्नाह्यानां उरस्यं औपवाह्यानां जघनं व्यालानां कोट्याविति ।। १०.५.३४ ।।

अश्व-व्यूहो वर्मिणां उरस्यं शुद्धानां कक्ष-पक्षाविति ।। १०.५.३५ ।।

पत्ति-व्यूहः पुरस्तादावरणिनः पृष्ठतो धन्विनः ।। १०.५.३६ ।।

इति शुद्धाः ।। १०.५.३७ ।।

पत्तयः पक्षयोरश्वाः पार्श्वयोः हस्तिनः पृष्ठतो रथाः पुरस्तात् । पर-व्यूह-वशेन वा विपर्यासः ।। १०.५.३८ ।।

इति द्व्य्-अङ्ग-बल-विभागः ।। १०.५.३९ ।।

तेन त्र्-अङ्ग-बल-विभागो व्याख्यातः ।। १०.५.४० ।।

दण्ड-सम्पत्सार-बलं पुंसां ।। १०.५.४१ ।।

हस्त्य्-अश्वयोर्विशेषः कुलं जातिः सत्त्वं वयः-स्थता प्राणो वर्ष्म जवस्तेजः शिल्पं स्तैर्यं उदग्रता विधेयत्वं सुव्यञ्जन-आचारताइति ।। १०.५.४२ ।।

पत्त्य्-अश्व-रथ-द्विपानां सार-त्रि-भागं उरस्यं स्थापयेत् । द्वौ त्रि-भागौ कक्षं पक्षं चौभयतः । अनुलोमं अनुसारम् । प्रतिलोमं तृतीय-सारम् । फल्गु प्रतिलोमं ।। १०.५.४३ ।।

एवं सर्वं उपयोगं गमयेत् ।। १०.५.४४ ।।

फल्गु-बलं अन्तेष्ववधाय वेग-अभिहूलिको भवति ।। १०.५.४५ ।।

सार-बलं अग्रतः कृत्वा कोटीष्वनुसारं कुर्यात् । जघने तृतियिय-सारम् । मध्ये फल्गु-बलं ।। १०.५.४६ ।।

एवं एतत्सहिष्णु भवति ।। १०.५.४७ ।।

व्यूहं तु स्थापयित्वा पक्ष-कक्ष-उरस्यानां एकेन द्वाभ्यां वा प्रहरेत् । शेषैः प्रतिगृहणीयात् ।। १०.५.४८ ।।

यत्परस्य दुर्बलं वीत-हस्त्य्-अश्वं दूष्य-अमात्यं कृत-उपजापं वा तत्-प्रभूत-सारेणाभिहन्यात् ।। १०.५.४९ ।।

यद्वा परस्य सारिष्ठं तद्-द्वि-गुण-सारेणाभिहन्यात् ।। १०.५.५० ।।

यदङ्गं अल्प-सारं आत्मनस्तद्बहुनाउपचिनुयात् ।। १०.५.५१ ।।

यतः परस्यापचयस्ततोअभ्याशे व्यूहेत । यतोत्वा भयं स्यात् ।। १०.५.५२ ।।

अभिसृतं परिसृतं अतिसृतं अपसृतं उन्मथ्य-अवधानं वलयो गो-मूत्रिका मण्डलं प्रकीर्णिका व्यावृत्त-पृष्ठं अनुवंशं अग्रतः पार्श्वाभ्यां पृष्ठतो भग्न-रक्षा भग्न-अनुपात इत्यश्व-युद्धानि ।। १०.५.५३ ।।

प्रकीर्णिक-आवर्जान्येतान्येव चतुर्णां अङ्गानां व्यस्त-समस्तानां वा घातः । पक्ष-कक्ष-उरस्यानां च प्रभञ्जनं अवस्कन्दः सौप्तिकं चैति हसित्-युद्धानि ।। १०.५.५४ ।।

उन्मथ्य-अवधान-वर्जान्येतान्येव स्व-भूमावभियान-अपयान-स्थित-युद्धानिइति रथ-युद्धानि ।। १०.५.५५ ।।

सर्व-देश-काल-प्रहरणं उपांशु-दण्डश्चैति पत्ति-युद्धानि ।। १०.५.५६ ।।

एतेन विधिना व्यूहानोजान्युग्मांश्च कारयेत् । ।। १०.५.५७अ ब ।।

विभवो यावदङ्गानां चतुर्णां सदृशो भवेत् ।। १०.५.५७च्द् ।।

द्वे शते धनुषां गत्वा राजा तिष्ठेत्प्रतिग्रहे । ।। १०.५.५८अ ब ।।

भिन्न-संघातनं तस्मान्न युध्येताप्रतिग्रहः ।। १०.५.५८च्द् ।।

पक्षावुरस्यं प्रतिग्रह इत्यौशनसो व्यूह-विभागः || १०.६.०१ ||

पक्षौ कक्षावुरस्यं प्रतिग्रह इति बार्हस्पत्यः || १०.६.०२ ||

प्रपक्ष-कक्ष-उरस्या उभयोः दण्ड-भोग-मण्डल-असंहताः प्रकृति-व्यूहाः || १०.६.०३ ||

तत्र तिर्यग्-वृत्तिर्दण्डः || १०.६.०४ ||

समस्तानां अन्वावृत्तिर्भोगः || १०.६.०५ ||

सरतां सर्वतो-वृत्तिर्मण्डलः || १०.६.०६ ||

स्थितानां पृथग्-अनीक-वृत्तिरसंहतः || १०.६.०७ ||

पक्ष-कक्ष-उरस्यैः समं वर्तमानो दण्डः || १०.६.०८ ||

स कक्ष-अतिक्रान्तः प्रदरः || १०.६.०९ ||

स एव पक्ष-कक्षाभ्यां प्रतिक्रान्तो दृढकः || १०.६.१० ||

स एवातिक्रान्तः पक्षाभ्यां असह्यः || १०.६.११ ||

पक्षाववस्थाप्यौरस्य-अतिक्रान्तः श्येनः || १०.६.१२ ||

विपर्यये चापं चाप-कुक्षिः प्रतिष्ठः सुप्रतिष्ठश्च || १०.६.१३ ||

चाप-पक्षः संजयः || १०.६.१४ ||

स एवौरस्य-अतिक्रान्तो विजयः || १०.६.१५ ||

स्थूल-कर्ण-पक्षः स्थूण-अकर्णः || १०.६.१६ ||

द्वि-गुण-पक्ष-स्थूणो विशाल-विजयः || १०.६.१७ ||

त्र्य्-अभिक्रान्त-पक्षश्चमू-मुखः || १०.६.१८ ||

विपर्यये झष-आस्यः || १०.६.१९ ||

ऊर्ध्व-राजिर्दण्डः सूची || १०.६.२० ||

द्वौ दण्डौ वलयः || १०.६.२१ ||

चत्वारो दुर्जयः || १०.६.२२ ||

इति दण्ड-व्यूहाः || १०.६.२३ ||

पक्ष-कक्ष-उरस्यैर्विषमं वर्तमानो भोगः || १०.६.२४ ||

स सर्प-सारी गो-मूत्रिका वा || १०.६.२५ ||

स युग्म-उरस्यो दण्ड-पक्षः शकटः ।। १०.६.२६ ।।

विपर्यये मकरः ।। १०.६.२७ ।।

हस्त्य्-अश्व-रथैर्व्यतिकीर्णः शकटः पारिपतन्तकः ।। १०.६.२८ ।।

इति भोग-व्यूहाः ।। १०.६.२९ ।।

पक्ष-कक्ष-उरस्यानां एकी-भावे मण्डलः ।। १०.६.३० ।।

स सर्वतो-मुखः सर्वतो-भद्रः ।। १०.६.३१ ।।

अष्ट-अनीको दुर्जयः ।। १०.६.३२ ।।

इति मण्डल-व्यूहाः ।। १०.६.३३ ।।

पक्ष-कक्ष-उरस्यानां असंहतादसंहतः ।। १०.६.३४ ।।

स पञ्च-अनीकानां आकृति-स्थापनाद्वज्रो गोधा वा ।। १०.६.३५ ।।

चतुर्णां उद्धानकः काकपदी वा ।। १०.६.३६ ।।

त्रयाणां अर्ध-चन्द्रकः कर्कटक-शृङ्गी वा ।। १०.६.३७ ।।

इत्यसंहत-व्यूहाः ।। १०.६.३८ ।।

रथ-उरस्यो हस्ति-कक्षोअश्व-पृष्ठोअरिष्टः ।। १०.६.३९ ।।

पत्तयोअश्वा रथा हस्तिनश्चानुपृष्ठं अचलः ।। १०.६.४० ।।

हस्तिनोअश्वा रथाः पत्तयश्चानुपृष्ठं अप्रतिहतः ।। १०.६.४१ ।।

तेषां प्रदरं दृढकेन घातयेत् । दृढकं असह्येन । श्येनं चापेन । प्रतिष्ठं सुप्रतिष्ठेन । संजयं विजयेन । स्थूण-आकर्णं विशाल-विजयेन । पारिपतन्तकं सर्वतो-भद्रेण ।। १०.६.४२ ।।

दुर्जयेन सर्वान्प्रतिव्यूहेत ।। १०.६.४३ ।।

पत्त्य्-अश्व-रथ-द्विपानां पूर्वं पूर्वं उत्तरेण घातयेत् । हीन-अङ्गं अधिक-अङ्गेन चैति ।। १०.६.४४ ।।

अङ्ग-दशकस्यएकः पतिः पतिकः । पतिक-दशकस्यएकः सेना-पतिः । तद्-दशकस्यएको नायक इति ।। १०.६.४५ ।।

स तूर्य-घोष-ध्वज-पताकाभिर्व्यूह-अङ्गानां संज्ञाः स्थापयेदङ्ग-विभागे संघाते स्थाने गमने व्यावर्तने प्रहरणे च ।। १०.६.४६ ।।

समे व्यूहे देश-काल-सार-योगात्सिद्धिः ।। १०.६.४७ ।।

यन्त्रैरुपनिषद्-योगैस्तीक्ष्णैर्व्यासक्त-घातिभिः । ।। १०.६.४८अ ब ।।

मायाभिर्देव-सम्योगैः शकटैर्हस्ति-भीषणैः ।। १०.६.४८च्द् ।।

दूष्य-प्रकोपैर्गो-यूथैः स्कन्ध-आवार-प्रदीपनैः । ।। १०.६.४९अ ब ।।

कोटी-जघन-घातैर्वा दूत-व्यञ्जन-भेदनैः ।। १०.६.४९च्द् ।।

"दुर्गं दग्धं हृतं वा ते कोपः कुल्यः समुत्थितः । ।। १०.६.५०अ ब ।।

शत्रुराटविको वा" इति परस्यौद्वेगं आचरेत् ।। १०.६.५०च्द् ।।

एकं हन्यान्न वा हन्यादिषुः क्षिप्तो धनुष्मता । ।। १०.६.५१अ ब ।।

प्रज्ञानेन तु मतिः क्षिप्ता हन्याद्गर्भ-गतानपि ।। १०.६.५१च्द् ।।

संघ-लाभो दण्ड-मित्र-लाभानां उत्तमः ।। ११.१.०१ ।।

संघा हि संहतत्वादधृष्याः परेषां ।। ११.१.०२ ।।

ताननुगुणान्भुञ्जीत साम-दानाभ्याम् । विगुणान्भेद-दण्डाभ्यां ।। ११.१.०३ ।।

काम्बोज-सुराष्ट्र-क्षत्रिय-श्रेण्य्-आदयो वार्त्त-शस्त्र-उपजीविनः ।। ११.१.०४ ।।

लिच्छिविक-वृजिक-मल्लक-मद्रक-कुकुर-कुरु-पाञ्चाल-आदयो राज-शब्द-उपजीविनः ।। ११.१.०५ ।।

सर्वेषां आसन्नाः सत्त्रिणः संघानां परस्पर-न्यङ्ग-द्वेष-वैर-कलह-स्थानान्युपलभ्य क्रम-अभिनीतं भेदं उपचारयेयुः "असौ त्वा विजल्पति" इति ।। ११.१.०६ ।।

एवं उभयतो-बद्ध-रोषाणां विद्या-शिल्प-द्यूत-वैहारिकेष्वाचार्य-व्यञ्जना बाल-कलहानुत्पादयेयुः ।। ११.१.०७ ।।

वेश-शौण्डिकेषु वा प्रतिलोम-प्रशंसाभिः संघ-मुख्य-मनुष्याणां तीक्ष्णाः कलहानुत्पादयेयुः । कृत्य-पक्ष-उपग्रहेण वा ।। ११.१.०८ ।।

कुमारकान्विशिष्टच्-छिन्दिकया हीनच्-छिन्दिकानुत्साहयेयुः ।। ११.१.०९ ।।

विशिष्टानां चएक-पात्रं विवाहं वा हीनेभ्यो वारयेयुः ।। ११.१.१० ।।

हीनान्वा विशिष्टैरेक-पात्रे विवाहे वा योजयेयुः ।। ११.१.११ ।।

अवहीनान्वा तुल्य-भाव-उपगमने कुलतः पौरुषतः स्थान-विपर्यासतो वा ।। ११.१.१२ ।।

व्यवहारं अवस्थितं वा प्रतिलोम-स्थापनेन निशामयेयुः ।। ११.१.१३ ।।

विवाद-पदेषु वा द्रव्य-पशु-मनुष्य-अभिघातेन रात्रौ तीक्ष्णाः कलहानुत्पादयेयुः ।। ११.१.१४ ।।

सर्वेषु च कलह-स्थानेषु हीन-पक्षं राजा कोश-दण्डाभ्यां उपगृह्य प्रतिपक्ष-वधे योजयेत् ।। ११.१.१५ ।।

भिन्नानपवाहयेद्वा ।। ११.१.१६ ।।

भूमौ चएषां पञ्च-कुलीं दश-कुलीं वा कृष्यायां निवेशयेत् ।। ११.१.१७ ।।

एकस्था हि शस्त्र-ग्रहण-समर्थाः स्युः ।। ११.१.१८ ।।

समवाये चएषां अत्ययं स्थापयेत् ।। ११.१.१९ ।।

राज-शब्दिभिरवरुद्धं अवक्षिप्तं वा कुल्यं अभिजातं राज-पुत्रत्वे स्थापयेत् ।। ११.१.२० ।।

कार्तान्तिक-आदिश्चास्य वर्गो राज-लक्षण्यतां संघेषु प्रकाशयेत् ।। ११.१.२१ ।।

संघ-मुख्यांश्च धर्मिष्ठानुपजपेत्"स्व-धर्मं अमुष्य राज्ञः पुत्रे भ्रातरि वा प्रतिपद्यध्वम्" इति ।। ११.१.२२ ।।

प्रतिपन्नेषु कृत्य-पक्ष-उपग्रह-अर्थं अर्थं दण्डं च प्रेषयेत् ।। ११.१.२३ ।।

विक्रम-काले शौण्डिक-व्यञ्जनाः पुत्र-दार-प्रेत-अपदेशेन "नैषेचनिकम्" इति मदन-रस-युक्तान्मद्य-कुम्भान्शतशः प्रयच्छेयुः ।। ११.१.२४ ।।

चैत्य-दैवत-द्वार-रक्षा-स्थानेषु च सत्त्रिणः समय-कर्म-निक्षेपं सहिरण्य-अभिज्ञान-मुद्राणि हिरण्य-भाजनानि च प्ररूपयेयुः ।। ११.१.२५ ।।

दृश्यमानेषु च संघेषु "राजकीयाः" इत्यावेदयेयुः ।। ११.१.२६ ।।

अथावस्कन्दं दद्यात् ।। ११.१.२७ ।।

संघानां वा वाहन-हिरण्ये कालिके गृहीत्वा संघ-मुख्याय प्रख्यातं द्रव्यं प्रयच्छेत् ।। ११.१.२८ ।।

तदेषां याचिते "दत्तं अमुष्मै मुख्याय" इति ब्रूयात् ।। ११.१.२९ ।।

एतेन स्कन्ध-आवार-अटवी-भेदो व्याख्यातः ।। ११.१.३० ।।

संघ-मुख्य-पुत्रं आत्म-सम्भावितं वा सत्त्री ग्राहयेत्"अमुष्य राज्ञः पुत्रस्त्वम् । शत्रु-भयादिह न्यस्तोअसि" इति ।। ११.१.३१ ।।

प्रतिपन्नं राजा कोश-दण्डाभ्यां उपगृह्य संघेषु विक्रमयेत् ।। ११.१.३२ ।।

अवाप्त-अर्थस्तं अपि प्रवासयेत् ।। ११.१.३३ ।।

बन्धकी-पोषकाः प्लवक-नट-नर्तक-सौभिका वा प्रणिहिताः स्त्रीभिः परम-रूप-यौवनाभिः संघ-मुख्यानुन्मादयेयुः ।। ११.१.३४ ।।

जात-कामानां अन्यतमस्य प्रत्ययं कृत्वाअन्यत्र गमनेन प्रसभ-हरणेन वा कलहानुत्पादयेयुः ।। ११.१.३५ ।।

कलहे तीक्ष्णाः कर्म कुर्युः "हतोअयं इत्थं कामुकः" इति ।। ११.१.३६ ।।

विसंवादितं वा मर्षयमाणं अभिसृत्य स्त्री ब्रूयात्"असौ मां मुख्यस्त्वयि जात-कामां बाधते । तस्मिन्जीवति नैह स्थास्यामि" इति घातं अस्य प्रयोजयेत् ।। ११.१.३७ ।।

प्रसह्य-अपहृता वा वन-अन्ते क्रिडा-गृहे वाअपहर्तारं रात्रौ तीक्ष्णेन घातयेत् । स्वयं वा रसेन ।। ११.१.३८ ।।

ततः प्रकाशयेत्"अमुना मे प्रियो हतः" इति ।। ११.१.३९ ।।

जात-कामं वा सिद्ध-व्यञ्जनः सांवदनिकीभिरौषधीभिः संवास्य रसेनातिसंधायापगच्छेत् ।। ११.१.४० ।।

तस्मिन्नपक्रान्ते सत्त्रिणः पर-प्रयोगं अभिशंसेयुः ।। ११.१.४१ ।।

आढ्य-विधवा गूढ-आजीवा योग-स्त्रियो वा दाय-निक्षेप-अर्थं विवदमानाः संघ-मुख्यानुन्मादयेयुः । अदिति-कौशिक-स्त्रियो नर्तकी-गायना वा ।। ११.१.४२ ।।

प्रतिपन्नान्गूढ-वेश्मसु रात्रि-समागम-प्रविष्टांस्तीक्ष्णा हन्युर्बद्ध्वा हरेयुर्वा ।। ११.१.४३ ।।

सत्त्री वा स्त्री-लोलुपं संघ-मुख्यं प्ररूपयेत्"अमुष्मिन्ग्रामे दरिद्र-कुल्लं अपसृतम् । तस्य स्त्री राज-अर्हा । गृहाणएनाम्" इति ।। ११.१.४४ ।।

गृहीतायां अर्ध-मास-अनन्तरं सिद्ध-व्यञ्जनो दूष्य-संघ-मुख्य-मध्ये प्रक्रोशेत्"असौ मे मुख्यो भार्यां स्नुषां भगिनीं दुहितरं वाअधिचरति" इति ।। ११.१.४५ ।।

तं चेत्संघो निगृह्णीयात् । राजाएनं उपगृह्य विगुणेषु विक्रमयेत् ।। ११.१.४६ ।।

अनिगृहीते सिद्ध-व्यञ्जनं रात्रौ तीक्ष्णाः प्रवासयेयुः ।। ११.१.४७ ।।

ततस्तद्-व्यञ्जनाः प्रक्रोशेयुः "असौ ब्रह्महा ब्राह्मणी-जारश्च" इति ।। ११.१.४८ ।।

कार्तान्तिक-व्यञ्जनो वा कन्यां अन्येन वृतां अन्यस्य प्ररूपयेत्"अमुष्य कन्या राज-पत्नी राज-प्रसविनी च भविष्यति । सर्व-स्वेन प्रसह्य वाएनां लभस्व" इति ।। ११.१.४९ ।।

अलभ्यमानायां पर-पक्षं उद्धर्षयेत् ।। ११.१.५० ।।

लब्धायां सिद्धः कलहः ।। ११.१.५१ ।।

भिक्षुकी वा प्रिय-भार्यं मुख्यं ब्रूयात्"असौ ते मुख्यो यौवन-उत्सिक्तो भार्यायां मां प्राहिणोत् । तस्याहं भयाल्लेख्यं आभरणं गृहीत्वाआगताअस्मि । निर्दोषा ते भार्या । गूढं अस्मिन्प्रतिकर्तव्यम् । अहं अपि तावत्प्रतिपत्स्यामि" इति ।। ११.१.५२ ।।

एवं-आदिषु कलह-स्थानेषु स्वयं उत्पन्ने वा कलहे तीक्ष्णैरुत्पादिते वा हीन-पक्षं राजा कोश-दण्डाभ्यां उपगृह्य विगुणेषु विक्रमयेदपवाहयेद्वा ।। ११.१.५३ ।।

संघेष्वेवं एक-राजो वर्तेत ।। ११.१.५४ ।।

संघाश्चाप्येवं एक-राजादेतेभ्योअतिसंघानेभ्यो रक्षयेयुः ।। ११.१.५५ ।।

संघ-मुख्यश्च संघेषु न्याय-वृत्तिर्हितः प्रियः । ।। ११.१.५६अ ब ।।

दान्तो युक्त-जनस्तिष्ठेत्सर्व-चित्त-अनुवर्तकः ।। ११.१.५६च्द् ।।

"बलीयसाअभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वेतस-धर्मा तिष्ठेत् ।। १२.१.०१ ।।

इन्द्रस्य हि स प्रणमति यो बलीयसो नमति" इति भारद्वाजः ।। १२.१.०२ ।।

"सर्व-संदोहेन बलानां युध्येत ।। १२.१.०३ ।।

पराक्रमो हि व्यसनं अपहन्ति ।। १२.१.०४ ।।

स्व-धर्मश्चएष क्षत्रियस्य । युद्धे जयः पराजयो वा" इति विशाल-अक्षः ।। १२.१.०५ ।।

नैति कौटिल्यः ।। १२.१.०६ ।।

सर्वत्रानुप्रणतः कुलैडक इव निराशो जीविते वसति ।। १२.१.०७ ।।

युध्यमानश्चाल्प-सैन्यः समुद्रं इवाप्लवोअवगाहमानः सीदति ।। १२.१.०८ ।।

तद्-विशिष्टं तु राजानं आश्रितो दुर्गं अविषह्यं वा चेष्टेत ।। १२.१.०९ ।।

त्रयोअभियोक्तारो धर्म-लोभ-असुर-विजयिन इति ।। १२.१.१० ।।

तेषां अभ्यवपत्त्या धर्म-विजयी तुष्यति ।। १२.१.११ ।।

तं अभ्यवपद्येत । परेषां अपि भयात् ।। १२.१.१२ ।।

भूमि-द्रव्य-हरणेन लोभ-विजयी तुष्यति ।। १२.१.१३ ।।

तं अर्थेनाभ्यवपद्येत ।। १२.१.१४ ।।

भूमि-द्रव्य-पुत्र-दार-प्राण-हरणेनासुर-विजयी ।। १२.१.१५ ।।

तं भूमि-द्रव्याभ्यां उपगृह्याग्राह्यः प्रतिकुर्वीत ।। १२.१.१६ ।।

तेषां अन्यतमं उत्तिष्ठमानं संधिना मन्त्र-युद्धेन कूट-युद्धेन वा प्रतिव्यूहेत ।। १२.१.१७ ।।

शत्रु-पक्षं अस्य साम-दानाभ्याम् । स्व-पक्षं भेद-दण्डाभ्यां ।। १२.१.१८ ।।

दुर्गं राष्ट्रं स्कन्ध-आवारं वाअस्य गूढाः शस्त्र-रस-अग्निभिः साधयेयुः ।। १२.१.१९ ।।

सर्वतः पार्ष्णिं अस्य ग्राहयेत् ।। १२.१.२० ।।

अटवीभिर्वा राज्यं घातयेत् । तत्-कुलीन-अपरुद्धाभ्यां वा हारयेत् ।। १२.१.२१ ।।

अपकार-अन्तेषु चास्य दूतं प्रेषयेत् ।। १२.१.२२ ।।

अनपकृत्य वा संधानं ।। १२.१.२३ ।।

तथाअप्यभिप्रयान्तं कोश-दण्डयोः पाद-उत्तरं अहो-रात्र-उत्तरं वा संधिं याचेत ।। १२.१.२४ ।।

स चेद्दण्ड-संधिं याचेत । कुण्ठं अस्मै हस्त्य्-अश्वं दद्याद् । उत्साहितं वा गर-युक्तं ।। १२.१.२५ ।।

पुरुष-संधिं याचेत । दूष्य-अमित्र-अटवी-बलं अस्मै दद्याद्योग-पुरुष-अधिष्ठितं ।। १२.१.२६ ।।

तथा कुर्याद्यथाउभय-विनाशः स्यात् ।। १२.१.२७ ।।

तीक्ष्ण-बलं वाअस्मै दद्याद्यदवमानितं विकुर्वीत । मौलं अनुरक्तं वा यदस्य व्यसनेअपकुर्यात् ।। १२.१.२८ ।।

कोश-संधिं याचेत । सारं अस्मै दद्याद्यस्य क्रेतारं नाधिगच्छेत् । कुप्यं अयुद्ध-योग्यं वा ।। १२.१.२९ ।।

भूमि-संधिं याचेत । प्रत्यादेयां नित्य-अमित्रां अनपाश्रयां महा-क्षय-व्यय-निवेशां वाअस्मै भूमिं दद्यात् ।। १२.१.३० ।।

सर्व-स्वेन वा राज-धानी-वर्जेन संधिं याचेत बलीयसः ।। १२.१.३१ ।।

यत्प्रसह्य हरेदन्यस्तत्प्रयच्चेदुपायतः । ।। १२.१.३२अ ब ।।

रक्षेत्स्व-देहं न धनं का ह्यनित्ये धने दया ।। १२.१.३२च्द् ।।

स चेत्संधौ नावतिष्ठेत । ब्रूयादेनं "इमे शत्रु-षड्-वर्ग-वशगा राजानो विनष्टाः । तेषां अनात्मवतां नार्हसि मार्गं अनुगन्तुं ।। १२.२.०१ ।।

धर्मं अर्थं चावेक्षस्व ।। १२.२.०२ ।।

मित्र-मुखा ह्यमित्रास्ते ये त्वा साहसं अधर्मं अर्थ-अतिक्रमं च ग्राहयन्ति ।। १२.२.०३ ।।

शूरैस्त्यक्त-आत्मभिः सह योद्धुं साहसम् । जन-क्षयं उभयतः कर्तुं अधर्मः । दृष्टं अर्थं मित्रं अदुष्टं च त्यक्तुं अर्थ-अतिक्रमः ।। १२.२.०४ ।।

मित्रवांश्च स राजा । भूयश्चएतेनार्थेन मित्राण्युद्योजयिष्यति यानि त्वा सर्वतोअभियास्यन्ति ।। १२.२.०५ ।।

न च मध्यम-उदासीनयोर्मण्डलस्य वा परित्यक्तः । भवांस्तु परित्यक्तः यत्त्वा समुद्युक्तं उपप्रेक्षन्ते "भूयः क्षय-व्ययाभ्यां युज्यताम् । मित्राच्च भिद्यताम् । अथएनं परित्यक्त-मूलं सुखेनौच्छेत्स्यामः" इति ।। १२.२.०६ ।।

स भवान्नार्हति मित्र-मुखानां अमित्राणां श्रोतुम् । मित्राण्युद्वेजयितुं अमित्रांश्च श्रेयसा योक्तुम् । प्राण-संशयं अनर्थं चौपगन्तुम्" इति यच्छेत् ।। १२.२.०७ ।।

तथाअपि प्रतिष्ठमानस्य प्रकृति-कोपं अस्य कारयेद्यथा संघ-वृत्ते व्याख्यातं योग-वामने च ।। १२.२.०८ ।।

तीक्ष्ण-रसद-प्रयोगं च ।। १२.२.०९ ।।

यदुक्तं आत्म-रक्षितके रक्ष्यं तत्र तीक्ष्णान्रसदांश्च प्रयुञ्जीत ।। १२.२.१० ।।

बन्धकी-पोषकाः परम-रूप-यौवनाभिः स्त्रीभिः सेना-मुख्यानुन्मादयेयुः ।। १२.२.११ ।।

बहूनां एकस्यां द्वयोर्वा मुख्ययोः कामे जाते तीक्ष्णाः कलहानुत्पादयेयुः ।। १२.२.१२ ।।

कलहे पराजित-पक्षं परत्र-अपगमने यात्रा-साहाय्य-दाने वा भर्तुर्योजयेयुः ।। १२.२.१३ ।।

काम-वशान्वा सिद्ध-व्यञ्जनाः सांवदनिकीभिरोषधीभिरतिसंधानाय मुख्येषु रसं दापयेयुः ।। १२.२.१४ ।।

वैदेहक-व्यञ्जने वा राज-महिष्याः सुभगायाः प्रेष्यां आसन्नां काम-निमित्तं अर्थेनाभिवृष्य परित्यजेत् ।। १२.२.१५ ।।

तस्यएव परिचारक-व्यञ्जन-उपदिष्टः सिद्ध-व्यञ्जनः सांवदनिकीं ओषधीं दद्यात्"वैदेहक-शरीरेअवघातव्या" इति ।। १२.२.१६ ।।

सिद्धे सुभगाया अप्येनं योगं उपदिशेत्"राज-शरीरेअवधातव्या" इति ।। १२.२.१७ ।।

ततो रसेनातिसंदध्यात् ।। १२.२.१८ ।।

कार्तान्तिक-व्यञ्जनो वा महा-मात्रं "राज-लक्षण-सम्पन्नम्" क्रम-अभिनीतं ब्रूयात् ।। १२.२.१९ ।।

भार्यां अस्य भिक्षुकी "राज-पत्नी राज-प्रसविनी वा भविष्यसि" इति ।। १२.२.२० ।।

भार्या-व्यञ्जना वा महा-मात्रं ब्रूयात्"राजा किल मां अवरोधयिष्यति । तवान्तिकाय पत्र-लेख्यं आभरणं चैदं परिव्राजिकयाआहृतम्" इति ।। १२.२.२१ ।।

सूद-आरालिक-व्यञ्जनो वा रस-प्रयोग-अर्थं राज-वचनं अर्थं चास्य लोभनीयं अभिनयेत् ।। १२.२.२२ ।।

तदस्य वैदेहक-व्यञ्जनः प्रतिसंदध्यात् । कार्य-सिद्धिं च ब्रूयात् ।। १२.२.२३ ।।

एवं एकेन द्वाभ्यां त्रिभिरित्युपायैरेक-एकं अस्य महा-मात्रं विक्रमायापगमनाय वा योजयेत् इति ।। १२.२.२४ ।।

दुर्गेषु चास्य शून्य-पाल-आसन्नाः सत्त्रिणः पौर-जानपदेषु मैत्री-निमित्तं आवेदयेयुः "शून्य-पालेनौक्ता योधाश्चाधिकरणस्थाश्च "कृच्छ्र-गतो राजा जीवन्नागमिष्यति । न वा । प्रसह्य वित्तं आर्जयध्वम् । अमित्रांश्च हत" इति ।। १२.२.२५ ।।

बहुली-भूते तीक्ष्णाः पौरान्निशास्वाहारयेयुः । मुख्यांश्चाभिहन्युः "एवं क्रियन्ते ये शून्य-पालस्य न शुश्रूषन्ते" इति ।। १२.२.२६ ।।

शून्य-पाल-स्थानेषु च सशोणितानि शस्त्र-वित्त-बन्धनान्युत्सृजेयुः ।। १२.२.२७ ।।

ततः सत्त्रिणः "शून्य-पालो घातयति विलोपयति च" इत्यावेदयेयुः ।। १२.२.२८ ।।

एवं जानपदान्समाहर्तुर्भेदयेयुः ।। १२.२.२९ ।।

समाहर्तृ-पुरुषांस्तु ग्राम-मध्येषु रात्रौ तीक्ष्णा हत्वा ब्रूयुः "एवं क्रियन्ते ये जन-पदं अधर्मेण बाधन्ते" इति ।। १२.२.३० ।।

समुत्पन्ने दोषे शून्य-पालं समाहर्तारं वा प्रकृति-कोपेन घातयेयुः ।। १२.२.३१ ।।

तत्-कुलीनं अपरुद्धं वा प्रतिपादयेयुः ।। १२.२.३२ ।।

अन्तः-पुर-पुर-द्वारं द्रव्य-धान्य-परिग्रहान् । ।। १२.२.३३अ ब ।।

दहेयुस्तांश्च हन्युर्वा ब्रूयुरस्यऽर्त-वादिनः ।। १२.२.३३च्द् ।।

राज्ञो राज-वल्लभानां चऽसन्नाः सत्त्रिणः पत्त्य्-अश्व-रथ-द्विप-मुख्यानां "राजा क्रुद्धः" इति सुहृद्-विश्वासेन मित्र-स्थानीयेषु कथयेयुः ।। १२.३.०१ ।।

बहुली-भूते तीक्ष्णाः कृत-रात्रि-चार-प्रतीकारा गृहेषु "स्वामि-वचनेनऽगम्यताम्" इति ब्रूयुः ।। १२.३.०२ ।।

तान्निर्गच्छत एवाभिहन्युः । "स्वामि-संदेशः" इति चऽसन्नान्ब्रूयुः ।। १२.३.०३ ।।

ये चाप्रवासितास्तान्सत्त्रिणो ब्रूयुः "एतत्तद्यदस्माभिः कथितम् । जीवितु-कामेनापक्रान्तव्यम्" इति ।। १२.३.०४ ।।

येभ्यश्च राजा याचितो न ददाति तान्सत्त्रिणो ब्रूयुः "उक्तः शून्य-पालो राज्ञा "अयाच्यं अर्थं असौ चासौ च मा याचते । मया प्रत्याख्याताः शत्रु-संहिताः । तेषां उद्धरणे प्रयतस्व" इति ।। १२.३.०५ ।।

ततः पूर्ववदाचरेत् ।। १२.३.०६ ।।

येभ्यश्च राजा याचितो ददाति तान्सत्त्रिणो ब्रूयुः "उक्तः शून्य-पालो राज्ञा "अयाच्यं अर्थं असौ चासौ च मा याचते । तेभ्यो मया सोअर्थो विश्वास-अर्थं दत्तः । शत्रु-संहिताः । तेषां उद्धरणे प्रयतस्व" इति ।। १२.३.०७ ।।

ततः पूर्ववदाचरेत् ।। १२.३.०८ ।।

ये चएनं याच्यं अर्थं न याचन्ते तान्सत्त्रिणो ब्रूयुः "उक्तः शून्य-पालो राज्ञा "याच्यं अर्थं असौ चासौ च मा न याचते । किं अन्यत्स्व-दोष-शङ्कितत्वात् । तेषां उद्धरणे प्रयतस्व" इति ।। १२.३.०९ ।।

ततः पूर्ववदाचरेत् ।। १२.३.१० ।।

एतेन सर्वः कृत्य-पक्षो व्याख्यातः ।। १२.३.११ ।।

प्रत्यासन्नो वा राजानं सत्त्री ग्राहयेत्"असौ चासौ च ते महा-मात्रः शत्रु-पुरुषैः सम्भाषते" इति ।। १२.३.१२ ।।

प्रतिपन्ने दूष्यानस्य शासन-हरान्दर्शयेत्"एतत्तत्" इति ।। १२.३.१३ ।।

सेना-मुख्य-प्रकृति-पुरुषान्वा भूम्या हिरण्येन वा लोभयित्वा स्वेषु विक्रमयेदपवाहयेद्वा ।। १२.३.१४ ।।

योअस्य पुत्रः समीपे दुर्गे वा प्रतिवसति तं सत्त्रिणाउपजापयेत्"आत्म-सम्पन्नतरस्त्वं पुत्रः । तथाअप्यन्तर्-हितः । तत्-किं उपेक्षसे विक्रम्य गृहाण । पुरा त्वा युव-राजो विनाशयति" इति ।। १२.३.१५ ।।

तत्-कुलीनं अपरुद्धं वा हिरण्येन प्रतिलोभ्य ब्रूयात्"अन्तर्-बलं प्रत्यन्त-स्कन्धं अन्तं वाअस्य प्रमृद्नीहि" इति ।। १२.३.१६ ।।

आटविकानर्थ-मानाभ्यां उपगृह्य राज्यं अस्य घातयेत् ।। १२.३.१७ ।।

पार्ष्णि-ग्राहं वाअस्य ब्रूयात्"एष खलु राजा मां उच्छिद्य त्वां उच्छेत्स्यति । पार्ष्णिं अस्य गृहाण । त्वयि निवृत्तस्याहं पार्ष्णिं ग्रहीष्यामि" इति ।। १२.३.१८ ।।

मित्राणि वाअस्य ब्रूयात्"अहं वः सेतुः । मयि विभिन्ने सर्वानेष वो राजा प्लावयिष्यति । सम्भूय वाअस्य यात्रां विहनाम" इति ।। १२.३.१९ ।।

तत्-संहतानां असंहतानां च प्रेषयेत्"एष खलु राजा मां उत्पाट्य भवत्सु कर्म करिष्यति । बुध्यध्वम् । अहं वः श्रेयानभ्युपपत्तुम्" इति ।। १२.३.२० ।।

मध्यमस्य प्रहिणुयादुदासीनस्य वा पुनः । ।। १२.३.२१अ ब ।।

यथाआसन्नस्य मोक्ष-अर्थं सर्व-स्वेन तद्-अर्पणं ।। १२.३.२१च्द् ।।

ये चास्य दुर्गेषु वैदेहकव्यञ्जनाः । ग्रामेसु गृहपतिक-व्यञ्जनाः । जन-पद-संधिषु गो-रक्षक-तापस-व्यञ्जनाः । ते सामन्त-आटविक-तत्-कुलीन-अपरुद्धानां पण्य-आगार-पूर्वं प्रेषयेयुः "अयं देशो हार्यः" इति ।। १२.४.०१ ।।

आगतांश्चएषां दुर्गे गूढ-पुरुषानर्थ-मानाभ्यां अभिसत्कृत्य प्रकृतिच्-छिद्राणि प्रदर्शयेयुः ।। १२.४.०२ ।।

तेषु तैः सह प्रहरेयुः ।। १२.४.०३ ।।

स्कन्ध-आवारे वाअस्य शौण्डिक-व्यञ्जनः पुत्रं अभित्यक्तं स्थापयित्वाअवस्कन्द-काले रसेन प्रवासयित्वा "नैषेचनिकम्" इति मदन-रस-युक्तान्मद्यकुम्भान्शतशः प्रयच्छेत् ।। १२.४.०४ ।।

शुद्धं वा मद्यं पाद्यं वा मद्यं दद्यादेकं अहः । उत्तरं रस्-सिद्धं प्रयच्छेत् ।। १२.४.०५ ।।

शुद्धं वा मद्यं दण्ड-मुख्येभ्यः प्रदाय मद-काले रस-सिद्धं प्रयच्छेत् ।। १२.४.०६ ।।

दण्ड-मुख्य-व्यञ्जनो वा पुत्रं अभित्यक्तं इति समानं ।। १२.४.०७ ।।

पाक्व-मांसिक-औदनिक-औण्डिक-आपूपिक-व्यञ्जना वा पण्य-विशेषं अवघोषयित्वा परस्पर-संघर्षेण कालिकं समर्घतरं इति वा परानाहूय रसेन स्व-पण्यान्यपचारयेयुः ।। १२.४.०८ ।।

सुरा-क्षीर-दधि-सर्पिस्-तैलानि वा तद्-व्यवहर्तृ-हस्तेषु गृहीता स्त्रियो बालाश्च रस-युक्तेषु स्व-भाजनेषु परिकिरेयुः ।। १२.४.०९ ।।

"अनेनार्घेण । विशिष्टं वा भूयो दीयताम्" इति तत्रएवावाकिरेयुः ।। १२.४.१० ।।

एतान्येव वैदेहक-व्यञ्जनाः । पण्य-विरेयेणऽहर्तारो वा ।। १२.४.११ ।।

हस्त्य्-अश्वानां विधा-यवसेषु रसं आसन्ना दद्युः ।। १२.४.१२ ।।

कर्म-कर-व्यञ्जना वा रस-अक्तं यवसं उदकं वा विक्रीणीरन् ।। १२.४.१३ ।।

चिर-संसृष्टा वा गो-वाणिजका गवां अज-अवीनां वा यूथान्यवस्कन्द-कालेषु परेषां मोह-स्थानेषु प्रमुञ्चेयुः । अश्व-खर-उष्ट्रमहिष-आदीनां दुष्टांश्च ।। १२.४.१४ ।।

तद्-व्यञ्जना वा चुच्छुन्दरी-शोणित-अक्त-अक्षान् ।। १२.४.१५ ।।

लुब्धक-व्यञ्जना वा व्याल-मृगान्पञ्जरेभ्यः प्रमुञ्चेयुः । सर्प-ग्राहा वा सर्पानुग्र-विषान् । हस्ति-जीविनो वा हस्तिनः ।। १२.४.१६ ।।

अग्नि-जीविनो वाअग्निं अवसृजेयुः ।। १२.४.१७ ।।

गूढ-पुरुषा वा विमुखान्पत्त्य्-अश्व-रथ-द्विप-मुख्यानभिहन्युः । आदीपयेयुर्वा मुख्य-आवासान् ।। १२.४.१८ ।।

दूष्य-अमित्र-आटविक-व्यञ्जनाः प्रणिहिताः पृष्ठ-अभिघातं अवस्कन्द-प्रतिग्रहं वा कुर्युः ।। १२.४.१९ ।।

वन-गूढा वा प्रत्यन्त-स्कन्धं उपनिष्कृष्याभिहन्युः । एक-अयने वीवध-आसार-प्रसारान्वा ।। १२.४.२० ।।

ससंकेतं वा रात्रि-युद्धे भूरि-तूर्यं आहत्य ब्रूयुः "अनुप्रविष्टाः स्मो । लब्धं राज्यम्" इति ।। १२.४.२१ ।।

राज-आवासं अनुप्रविष्टा वा संकुलेषु राजानं हन्युः ।। १२.४.२२ ।।

सर्वतो वा प्रयातं एन(?एव?) म्लेच्छ-आटविक-दण्ट-चारिणः सत्त्र-अपाश्रयाः स्तम्भ-वाट-अपाश्रया वा हन्युः ।। १२.४.२३ ।।

लुब्धक-व्यञ्जना वाअवस्कन्द-संकुलेषु गूढ-युद्ध-हेतुभिरभिहन्युः ।। १२.४.२४ ।।

एक-अयने वा शैल-स्तम्भ-वाट-खञ्जन-अन्तर्-उदके वा स्व-भूमि-बलेनाभिहन्युः ।। १२.४.२५ ।।

नदी-सरस्-तटाक-सेतु-बन्ध-भेद-वेगेन वा प्लावयेयुः ।। १२.४.२६ ।।

धान्वन-वन-दुर्ग-निम्न-दुर्गस्थं वा योग-अग्नि-धूमाभ्यां नाशयेयुः ।। १२.४.२७ ।।

संकट-गतं अग्निना । धान्वन-गतं धूमेन । निधान-गतं रसेन । तोय-अवगाढं दुष्ट-ग्राहैरुदक-चरणैर्वा तीक्ष्णाः साधयेयुः । आदीप्त-आवासान्निष्पतन्तं वा ।। १२.४.२८ ।।

योग-वामन-योगाभ्यां योगेनान्यतमेन वा । ।। १२.४.२९अ ब ।।

अमित्रं अतिसंदध्यात्सक्तं उक्तासु भूमिषु ।। १२.४.२९च्द् ।।

दैव-तेज्यायाम्(देवता-इज्यायाम्?) यात्रायां अमित्रस्य बहूनि पूजा-आगम-स्थानानि भक्तितः ।। १२.५.०१ ।।

तत्रास्य योगं उब्जयेत् ।। १२.५.०२ ।।

देवता-गृह-प्रविष्टस्यौपरि यन्त्र-मोक्षणेन गूढ-भित्तिं शिलां वा पातयेत् ।। १२.५.०३ ।।

शिला-शस्त्र-वर्षं उत्तम-आगारात् । कपाटं अवपातितं वा । भित्ति-प्रणिहितं एक-देश-बद्धं वा परिघं मोक्षयेत् ।। १२.५.०४ ।।

देवता-देह-ध्वज-प्रहरणानि वाअस्यौपरिष्टात्पातयेत् ।। १२.५.०५ ।।

स्थान-आसन-गमन-भूमिषु वाअस्य गो-मय-प्रदेहेन गन्ध-उदक-प्रसेकेन वा रसं अतिचारयेत् । पुष्प-चूर्ण-उपहारेण वा ।। १२.५.०६ ।।

गन्ध-प्रतिच्छन्नं वाअस्य तीक्ष्णं धूमं अतिनयेत् ।। १२.५.०७ ।।

शूलकूपं अवपातनं वा शयन-आसनस्याधस्ताद्यन्त्र-बद्ध-तलं एनं कील-मोक्षणेन प्रवेशयेत् ।। १२.५.०८ ।।

प्रत्यासन्ने वाअमित्रे जन-पदाज्जनं अवरोध-क्षमं अतिनयेत् ।। १२.५.०९ ।।

दुर्गाच्चानवरोध-क्षमं अपनयेत् । प्रत्यादेयं अरि-विषयं वा प्रेषयेत् ।। १२.५.१० ।।

जन-पदं चएकस्थं शैल-वन-नदी-दुर्गेष्वटवी-व्यवहितेषु वा पुत्र-भ्रातृ-परिगृहीतं स्थापयेत् ।। १२.५.११ ।।

उपरोध-हेतवो दण्ड-उपनत-वृत्ते व्याख्याताः ।। १२.५.१२ ।।

तृण-काष्ठं आ-योजनाद्दाहयेत् ।। १२.५.१३ ।।

उदकानि च दूषयेत् । अवस्रावयेच्च ।। १२.५.१४ ।।

कूप-कूट-अवपात-कण्टकिनीश्च बहिरुब्जयेत् ।। १२.५.१५ ।।

सुरुङ्गां अमित्र-स्थाने बहु-मुखीं कृत्वा निचय-मुख्यानभिहारयेत् । अमित्रं वा ।। १२.५.१६ ।।

पर-प्रयुक्तायां वा सुरुङ्गायां परिखां उदक-अन्तिकीं खानयेत् । कूप-शालां अनुसालं वा ।। १२.५.१७ ।।

तोय-कुम्भान्कांस्य-भाण्डानि वा शङ्का-स्थानेषु स्थापयेत्खात-अभिज्ञान-अर्थं ।। १२.५.१८ ।।

ज्ञाते सुरुङ्गा-पथे प्रतिसुरुङ्गां कारयेत् ।। १२.५.१९ ।।

मध्ये भित्त्वा धूमं उदकं वा प्रयच्छेत् ।। १२.५.२० ।।

प्रतिविहित-दुर्गो वा मूले दायाद्<अम्> कृत्वा प्रतिलोमां अस्य दिशं गच्छेत् । यतो वा मित्रैर्बन्धुभिराटविकैर्वा संसृज्येत परस्यामित्रैर्दूष्यैर्वा महद्भिः । यतो वा गतोअस्य मित्रैर्वियोगं कुर्यात्पार्ष्णिं वा गृह्णीयात्राज्यं वाअस्य हारयेत्वीवध-आसार-प्रसारान्वा वारयेत् । यतो वा शक्नुयादाक्षिकवदपक्षेपेणास्य प्रहर्तुम् । यतो वा स्वं राज्यं त्रायेत मूलस्यौपचयं वा कुर्यात् ।। १२.५.२१ ।।

यतः संधिं अभिप्रेतं लभेत ततो वा गच्छेत् ।। १२.५.२२ ।।

सह-प्रस्थायिनो वाअस्य प्रेषयेयुः "अयं ते शत्रुरस्माकं हस्त-गतः । पण्यं विप्रकारं वाअपदिश्य हिरण्यं अन्तः-सार-बलं च प्रेषय यस्यएनं अर्पयेम बद्धं प्रवासितं वा" इति ।। १२.५.२३ ।।

प्रतिपन्ने हिरण्यं सार-बलं चऽददीत ।। १२.५.२४ ।।

अन्त-पालो वा दुर्ग-सम्प्रदाने बल-एक-देशं अतिनीय विश्वस्तं घातयेत् ।। १२.५.२५ ।।

जन-पदं एकस्थं वा घातयितुं अमित्र-अनीकं आवाहयेत् ।। १२.५.२६ ।।

तदवरुद्ध-देशं अतिनीय विश्वस्तं घातयेत् ।। १२.५.२७ ।।

मित्र-व्यञ्जनो वा बाह्यस्य प्रेषयेत्"क्षीणं अस्मिन्दुर्गे धान्यं स्नेहाः क्षारो लवणं वा । तदमुष्मिन्देशे काले च प्रवेक्ष्यति । तदुपगृहाण" इति ।। १२.५.२८ ।।

ततो रस-विद्धं धान्यं स्नेहं क्षारं लवणं वा दूष्य-अमित्र-आटविकाः प्रवेशयेयुः । अन्ये वाअभित्यक्ताः ।। १२.५.२९ ।।

तेन सर्व-भाण्ड-वीवध-ग्रहणं व्याख्यातं ।। १२.५.३० ।।

संधिं वा कृत्वा हिरण्य-एक-देशं अस्मै दद्यात् । विलम्बमानः शेषं ।। १२.५.३१ ।।

ततो रक्षा-विधानान्यवस्रावयेत् ।। १२.५.३२ ।।

अग्नि-रस-शस्त्रैर्वा प्रहरेत् ।। १२.५.३३ ।।

हिरण्य-प्रतिग्राहिणो वाअस्य वल्लभाननुगृह्णीयात् ।। १२.५.३४ ।।

परिक्षीणो वाअस्मै दुर्गं दत्त्वा निर्गच्छेत् ।। १२.५.३५ ।।

सुरुङ्गया कुक्षि-प्रदरेण वा प्राकार-भेदेन निर्गच्छेत् ।। १२.५.३६ ।।

रात्राववस्कन्दं दत्त्वा सिद्धस्तिष्ठेत् । असिद्धः पार्श्वेनापगच्छेत् ।। १२.५.३७ ।।

पाषण्डच्-छद्मना मन्द-परिवारो निर्गच्छेत् ।। १२.५.३८ ।।

प्रेत-व्यञ्जनो वा गूढैर्निर्ह्रियेत ।। १२.५.३९ ।।

स्त्री-वेष-धारी वा प्रेतं अनुगच्छेत् ।। १२.५.४० ।।

दैवत-उपहार-श्राद्ध-प्रहवणेषु वा रस-विद्धं अन्न-पानं अवसृज्य ।। १२.५.४१ ।।

कृत-उपजापो दूष्य-व्यञ्जनैर्निष्पत्य गूढ-सैन्योअभिहन्यात् ।। १२.५.४२ ।।

एवं गृहीत-दुर्गो वा प्राश्य-प्राशं चैत्यं उपस्थाप्य दैवत-प्रतिमाच्-छिद्रं प्रविश्यऽसीत । गूढ-भित्तिं वा । दैवत-प्रतिमा-युक्तं वा भूमि-गृहं ।। १२.५.४३ ।।

विस्मृते सुरुङ्गया रात्रौ राज-आवासं अनुप्रविश्य सुप्तं अमित्रं हन्यात् ।। १२.५.४४ ।।

यन्त्र-विश्लेषणं वा विश्लेष्याधस्तादवपातयेत् ।। १२.५.४५ ।।

रस-अग्नि-योगेनावलिप्तं गृहं जतु-गृहं वाअधिशयानं अमित्रं आदीपयेत् ।। १२.५.४६ ।।

प्रमद-वन-विहाराणां अन्यतमे वा विहार-स्थाने प्रमत्तं भूमि-गृह-सुरुङ्गा-गूढ-भित्ति-प्रविष्टास्तीक्ष्णा हन्युः । गूढ-प्रणिहिता वा रसेन ।। १२.५.४७ ।।

स्वपतो वा निरुद्धे देशे गूढाः स्त्रियः सर्प-रस-अग्नि-धूमानुपरि मुञ्चेयुः ।। १२.५.४८ ।।

प्रत्युत्पन्ने वा कारणे यद्यदुपपद्येत तत्तदमित्रेअन्तः-पुर-गते गूढ-संचारः प्रयुञ्जीत ।। १२.५.४९ ।।

ततो गूढं एवापगच्छेत् । स्वजन-संज्ञां च प्ररूपयेत् ।। १२.५.५० ।।

द्वाह्स्थान्वर्षधरांश्चान्यान्निगूढ-उपहितान्परे । ।। १२.४.५१अ ब ।।

तूर्य-संज्ञाभिराहूय द्विषत्-शेषाणि घातयेत् ।। १२.४.५१च्द् ।।

विजिगीषुः पर-ग्रामं अवाप्तु-कामः सर्वज्ञ-दैवत-सम्योग-ख्यापनाभ्यां स्व-पक्षं उद्धर्षयेत् । पर-पक्षं चौद्वेजयेत् ।। १३.१.०१ ।।

सर्वज्ञ-ख्यापनं तु गृह-गुह्य-प्रवृत्ति-ज्ञानेन प्रत्यादेशो मुख्यानाम् । कण्टक-शोधन-अपसर्प-अवगमेन प्रकाशनं राज-द्विष्ट-कारिणाम् । विज्ञाप्य-उपायन-ख्यापनं अदृष्ट-संसर्ग-विद्या-संज्ञा-आदिभिः । विदेश-प्रवृत्ति-ज्ञानं तदहरेव गृह-कपोतेन मुद्रा-सम्युक्तेन ।। १३.१.०२ ।।

दैवत-सम्योग-ख्यापनं तु सुरुङ्गा-मुखेनाग्नि-चैत्य-दैवत-प्रतिमाच्-छिद्राननुप्रविष्टैरग्नि-चैत्य-दैवत-व्यञ्जनैः सम्भाषणं पूजनं च । उदकादुत्थितैर्वा नाग-वरुण-व्यञ्जनैः सम्भाषणं पूजनं च । रात्रावन्तर्-उदके समुद्र-वालुका-कोशं प्रणिधायाग्नि-माला-दर्शनम् । शिला-शिक्य-अवगृहीते प्लवके स्थानम् । उदक-बस्तिना जरायुणा वा शिरोअवगूढ-नासः पृषत-अन्त्र-कुलीर-नक्र-शिंशुमार-उद्रवसाभिर्वा शत-पाक्यं तैलं नस्तः प्रयोगः ।। १३.१.०३ ।।

तेन रात्रि-गणश्चरति ।। १३.१.०४ ।।

इत्युदक-चरणानि ।। १३.१.०५ ।।

तैर्वरुण-नाग-कन्या-वाक्य-क्रिया सम्भाषणं च । कोप-स्थानेषु मुखादग्नि-धूम-उत्सर्गः ।। १३.१.०६ ।।

तदस्य स्व-विषये कार्तान्तिक-नैमित्तिक-मौहूर्तिक-पौराणिक-इक्षणिक-गूढ-पुरुषाः साचिव्य-करास्तद्-दर्शिनश्च प्रकाशयेयुः ।। १३.१.०७ ।।

परस्य विषये दैवत-दर्शनं दिव्य-कोश-दण्ड-उत्पत्तिं चास्य ब्रूयुः ।। १३.१.०८ ।।

दैवत-प्रश्न-निमित्त-वायस-अङ्ग-विद्या-स्वप्न-मृग-पक्षि-व्याहारेषु चास्य विजयं ब्रूयुः । विपरीतं अमित्रस्य ।। १३.१.०९ ।।

सदुन्दुभिं उल्कां च परस्य नक्षत्रे दर्शयेयुः ।। १३.१.१० ।।

परस्य मुख्यान्मित्रत्वेनौपदिशन्तो दूत-व्यञ्जनाः स्वामि-सत्कारं ब्रूयुः । स्व-पक्ष-बल-आधानं पर-पक्ष-प्रतिघातं च ।। १३.१.११ ।।

तुल्य-योग-क्षेमं अमात्यानां आयुधीयानां च कथयेयुः ।। १३.१.१२ ।।

तेषु व्यसन-अभ्युदय-अवेक्षणं अपत्य-पूजनं च प्रयुञ्जीत ।। १३.१.१३ ।।

तेन पर-पक्षं उत्साहयेद्यथा-उक्तं पुरस्तात् ।। १३.१.१४ ।।

भूयश्च वक्ष्यामः ।। १३.१.१५ ।।

साधारण-गर्दभेन दक्षान् । लकुट-शाखा-हननाभ्यां दण्ड-चारिणः । कुल-एडकेन चौद्विग्नान् । अशनि-वर्षेण विमानितान् । विदुलेनावकेशिना वायस-पिण्डेन कैतवज-मेघेनैति विहत-आशान्दुर्भग-अलंकारेण द्वेषिणाइति पूजा-फलान् । व्याघ्र-चर्मणा मृत्यु-कूटेन चौपहितान् । पीलु-विखादनेन करक-योष्ट्र्या गर्दभी-क्षीरा-अभिमन्थनेनैति ध्रुव-उपकारिण इति ।। १३.१.१६ ।।

प्रतिपन्नानर्थ-मानाभ्यां योजयेत् ।। १३.१.१७ ।।

द्रव्य-भक्तच्-छिद्रेषु चएनान्द्रव्य-भक्त-दानैरनुगृह्णीयात् ।। १३.१.१८ ।।

अप्रतिगृह्णतां स्त्री-कुमार-अलंकारानभिहरेयुः ।। १३.१.१९ ।।

दुर्भिक्ष-स्तेन-अटव्य्-उपघातेषु च पौर-जानपदानुत्साहयन्तः सत्त्रिणो ब्रूयुः "राजानं अनुग्रहं याचामहे निरनुग्रहाः परत्र गच्छामः" इति ।। १३.१.२० ।।

तथाइति प्रतिपन्नेषु द्रव्य-धान्यान्यपरिग्रहैः । ।। १३.१.२१अ ब ।।

साचिव्यं कार्यं इत्येतदुपजापाद्भूतं महत् ।। १३.१.२१च्द् ।।

मुण्डो जटिलो वा पर्वत-गुह-आवासी चतुर्-वर्ष-शत-आयुर्ब्रुवाणः प्रभूत-जटिल-अन्ते-वासी नगर-अभ्याशे तिष्ठेत् ।। १३.२.०१ ।।

शिष्याश्चास्य मूल-फल-उपगमनैरमात्यान्राजानं च भगवद्-दर्शनाय योजयेयुः ।। १३.२.०२ ।।

समागताश्च राज्ञा पूर्व-राज-देश-अभिज्ञानानि कथयेत् । "शते शते च वर्षाणां पूर्णेअहं अग्निं प्रविश्य पुनर्बालो भवामि । तदिह भवत्समीपे चतुर्थं अग्निं प्रवेक्ष्यामि । अवश्यं मे भवान्मानयितव्यः । त्रीन्वरान्वृणीष्ण(वृषीष्व)" इति ।। १३.२.०३ ।।

प्रतिपन्नं ब्रूयात्"सप्त-रात्रं इह सपुत्र-दारेण प्रेक्षा-प्रहवण-पूर्वं वस्तव्यम्" इति ।। १३.२.०४ ।।

वसन्तं अवस्कन्देत ।। १३.२.०५ ।।

मुण्डो वा जटिलो वा स्थानिक-व्यञ्जनः प्रभूत-जटिल-अन्ते-वासी वस्त-शोणित-दिग्धां वेणु-शलाकां सुवर्ण-चूर्णेनावलिप्य वल्मीके निदध्यादुपजिह्विक-अनुसरण-अर्थम् । स्वर्ण-नालिकां वा ।। १३.२.०६ ।।

ततः सत्त्री राज्ञः कथयेत्"असौ सिद्धः पुष्पितं निधिं जानाति" इति ।। १३.२.०७ ।।

स राज्ञा पृष्ठः "तथा" इति ब्रूयात् । तच्चाभिज्ञानं दर्शयेत् । भूयो वा हिरण्यं अन्तर्-आधाय ।। १३.२.०८ ।।

ब्रूयाच्चएनं "नाग-रक्षितोअयं निधिः प्रणिपात-साध्यः" इति ।। १३.२.०९ ।।

प्रतिपन्नं ब्रूयात्"सप्त-रात्रम्" इति समानं ।। १३.२.१० ।।

स्थानिक-व्यञ्जनं वा रात्रौ तेजन-अग्नि-युक्तं एकान्ते तिष्ठन्तं सत्त्रिणः क्रम-अभीनीतं राज्ञः कथयेयुः "असौ सिद्धः सामेधिकः" इति ।। १३.२.११ ।।

तं राजा यं अर्थं याचेत तं अस्य करिष्यमाणः "सप्त-रात्रम्" इति समानं ।। १३.२.१२ ।।

सिद्ध-व्यञ्जनो वा राजानं जम्भक-विद्याभिः प्रलोभयेत् ।। १३.२.१३ ।।

तं राजाइति समानं ।। १३.२.१४ ।।

सिद्ध-व्यञ्जनो वा देश-देवतां अभ्यर्हितां आश्रित्य प्रहवणैरभीक्ष्णं प्रकृति-मुख्यानभिसंवास्य क्रमेण राजानं अतिसंदध्यात् ।। १३.२.१५ ।।

जटिल-व्यञ्जनं अन्तर्-उदक-वासिनं वा सर्व-श्वेतं तट-सुरुङ्गा-भूमि-गृह-अपसरणं वरुणं नाग-राजं वा सत्त्रिणः क्रम-अभिनीतं राज्ञः कथयेयुः ।। १३.२.१६ ।।

तं राजाइति समानं ।। १३.२.१७ ।।

जन-पद-अन्ते-वासी सिद्ध-व्यञ्जनो वा राजानं शत्रु-दर्शनाय योजयेत् ।। १३.२.१८ ।।

प्रतिपन्नं बिम्बं कृत्वा शत्रुं आवाहयित्वा निरुद्धे देशे घातयेत् ।। १३.२.१९ ।।

अश्व-पण्य-उपयाता वैदेहक-व्यञ्जनाः पण्य-उपायन-निमित्तं आहूय राजानं पण्य-परीक्षायां आसक्तं अश्व-व्यतिकीर्णं वा हन्युः । अश्वैश्च प्रहरेयुः ।। १३.२.२० ।।

नगर-अभ्याशे वा चैत्यं आरुह्य रात्रौ तीक्ष्णाः कुम्भेषु नालीन्वा विदुलानि धमन्तः "स्वामिनो मुख्यानां वा मांसानि भक्षयिष्यामः । पूजा नो वर्तताम्" इत्यव्यक्तं ब्रूयुः ।। १३.२.२१ ।।

तदेषां नैमित्तिक-मौहूर्तिक-व्यञ्जनाः ख्यापयेयुः ।। १३.२.२२ ।।

मङ्गल्ये वा ह्रदे तटाक-मध्ये वा रात्रौ तेजन-तैल-अभ्यक्ता नाग-रूपिणः शक्ति-मुसलान्ययोमयानि निष्पेषयन्तस्तथैव ब्रूयुः ।। १३.२.२३ ।।

ऋक्ष-चर्म-कञ्चुकिनो वाअग्नि-धूम-उत्सर्ग-युक्ता रक्षो-रूपं वहन्तस्त्रिरपसव्यं नगरं कुर्वाणाः श्व-सृगाल-वाशित-अन्तरेषु तथैव ब्रूयुः ।। १३.२.२४ ।।

चैत्य-दैवत-प्रतिमां वा तेजन-तैलेनाभ्र-पटलच्-छन्नेनाग्निना वा रात्रौ प्रज्वाल्य तथैव ब्रूयुः ।। १३.२.२५ ।।

तदन्ये ख्यापयेयुः ।। १३.२.२६ ।।

दैवत-प्रतिमानां अभ्यर्हितानां वा शोणितेन प्रस्रावं अतिमात्रं कुर्युः ।। १३.२.२७ ।।

तदन्ये देव-रुधिर-संस्रावे संग्रामे पराजयं ब्रूयुः ।। १३.२.२८ ।।

संधि-रात्रिषु श्मशान-प्रमुखे वा चैत्यं ऊर्ध्व-भक्षितैर्मनुष्यैः प्ररूपयेयुः ।। १३.२.२९ ।।

ततो रक्षो-रूपी मनुष्यकं याचेत ।। १३.२.३० ।।

यश्चात्र शूर-वादिकोअन्यतमो वा द्रष्टुं आगच्छेत्तं अन्ये लोह-मुसलैर्हन्युः । यथा रक्षोभिर्हत इति ज्ञायेत ।। १३.२.३१ ।।

तदद्भुतं राज्ञस्तद्-दर्शिनः सत्त्रिणश्च कथयेयुः ।। १३.२.३२ ।।

ततो नैमितित्क-मौहूर्तिक-व्यञ्जनाः शान्तिं प्रायश्-चित्तं ब्रूयुः "अन्यथा महदकुशलं राज्ञो देशस्य च" इति ।। १३.२.३३ ।।

प्रतिपन्नं "एतेषु सप्त-रात्रं एक-एक-मन्त्र-बलि-होमं स्वयं राज्ञा कर्तव्यम्" इति ब्रूयुः ।। १३.२.३४ ।।

ततः समानं ।। १३.२.३५ ।।

एतान्वा योगानात्मनि दर्शयित्वा प्रतिकुर्वीत परेषां उपदेश-अर्थं ।। १३.२.३६ ।।

ततः प्रयोजयेद्योगान् ।। १३.२.३७ ।।

योग-दर्शन-प्रतीकारेण वा कोश-अभिसंहरणं कुर्यात् ।। १३.२.३८ ।।

हस्ति-कामं वा नाग-वन-पाला हस्तिना लक्षण्येन प्रलोभयेयुः ।। १३.२.३९ ।।

प्रतिपन्नं गहनं एक-अयनं वाअतिनीय घातयेयुः । बद्ध्वा वाअपहरेयुः ।। १३.२.४० ।।

तेन मृगया-कामो व्याख्यातः ।। १३.२.४१ ।।

द्रव्य-स्त्री-लोलुपं आढ्य-विधवाभिर्वा परम-रूप-यौवनाभिः स्त्रीभिर्दाय-निक्षेप-अर्थं उपनीताभिः सत्त्रिणः प्रलोभयेयुः ।। १३.२.४२ ।।

प्रतिपन्नं रात्रौ सत्त्रच्-छन्नाः समागमे शस्त्र-रसाभ्यां घातयेयुः ।। १३.२.४३ ।।

सिद्ध-प्रव्रजित-चैत्य-स्तूप-दैवत-प्रतिमानां अभीक्ष्ण-अभिगमनेषु वा भूमि-गृह-सुरुङ्ग-आरूढ-भित्ति-प्रविष्टास्तीक्ष्णाः परं अभिहन्युः ।। १३.२.४४ ।।

येषु देशेषु याः प्रेक्षाः प्रेक्षते पार्थिवः स्वयं । ।। १३.२.४५अ ब ।।

यात्रा-विहारे रमते यत्र क्रीडति वाअम्भसि ।। काक्१३.२.४५च्द् ।।

धिग्-उक्त्य्-आदिषु सर्वेषु यज्ञ-प्रहवणेषु वा । ।। १३.२.४६अ ब ।।

सूतिका-प्रेत-रोगेषु प्रीति-शोक-भयेषु वा । ।। १३.२.४६च्द् ।।

प्रमादं याति यस्मिन्वा विश्वासात्स्व-जन-उत्सवे ।। १३.२.४७अ ब ।।

यत्रास्यऽरक्षि-संचारो दुर्दिने संकुलेषु वा । ।। १३.२.४७च्द् ।।

विप्र-स्थाने प्रदीप्ते वा प्रविष्टे निर्जनेअपि वा । ।। १३.२.४८अ ब ।।

वस्त्र-आभरण-माल्यानां फेलाभिः शयन-आसनैः ।। १३.२.४८च्द् ।।

मद्य-भोजन-फेलाभिस्तूर्यैर्वाअभिगताः सह । ।। १३.२.४९अ ब ।।

प्रहरेयुररिं तीक्ष्णाः पूर्व-प्रणिहितैः सह ।। १३.२.४९च्द् ।।

यथैव प्रविशेयुश्च द्विषतः सत्त्र-हेतुभिः । ।। १३.२.५०अ ब ।।

तथैव चापगच्छेयुरित्युक्तं योग-वामनं ।। १३.२.५०च्द् ।।

श्रेणी-मुख्यं आप्तं निष्पातयेत् ।। १३.३.०१ ।।

स परं आश्र्त्य पक्ष-अपदेशेन स्व-विषयात्साचिव्य-कर-सहाय-उपादानं कुर्वीत ।। १३.३.०२ ।।

कृत-अपसर्प-उपचयो वा परं अनुमान्य स्वामिनो दूष्य-ग्रामं वीत-हस्त्य्-अश्वं दूष्य-अमात्यं दण्डं आक्रन्दं वा हत्वा परस्य प्रेषयेत् ।। १३.३.०३ ।।

जन-पद-एक-देशं श्रेणीं अटवीं वा सहाय-उपादान-अर्थं संश्रयेत ।। १३.३.०४ ।।

विश्वासं उपगतः स्वामिनः प्रेषयेत् ।। १३.३.०५ ।।

ततः स्वामी हस्ति-बन्धनं अटवी-घातं वाअपदिश्य गूढं एव प्रहरेत् ।। १३.३.०६ ।।

एतेनामात्य-अटविका व्याख्याताः ।। १३.३.०७ ।।

शत्रुणा मैत्रीं कृत्वाअमात्यानवक्षिपेत् ।। १३.३.०८ ।।

ते तत्-शत्रोः प्रेषयेयुः "भर्तारं नः प्रसादय" इति ।। १३.३.०९ ।।

स यं दूतं प्रेषयेत् । तं उपालभेत "भर्ता ते मां अमात्यैर्भेदयति । न च पुनरिहऽगन्तव्यम्" इति ।। १३.३.१० ।।

अथएकं अमात्यं निष्पातयेत् ।। १३.३.११ ।।

स परं आश्रित्य योग-अपसर्प-अपरक्त-दूष्यानशक्तिमतः स्तेनऽटविकानुभय-उपघातकान्वा परस्यौपहरेत् ।। १३.३.१२ ।।

आप्त-भाव-उपगतः प्रवीर-पुरुष-उपघातं अस्यौपहरेदन्त-पालं आटविकं दण्ड-चारिणं वा "दृढं असौ चासौ च ते शत्रुणा संधत्ते" इति ।। १३.३.१३ ।।

अथ पश्चादभित्यक्त-शासनैरेनान्घातयेत् ।। १३.३.१४ ।।

दण्ड-बल-व्यवहारेण वा शत्रुं उद्योज्य घातयेत् ।। १३.३.१५ ।।

कृत्य-पक्ष-उपग्रहेण वा परस्य-अमित्रं राजानं आत्मन्यपकारयित्वाअभियुञ्जीत ।। १३.३.१६ ।।

ततः परस्य प्रेषयेत्"असौ ते वैरी ममापकरोति । तं एहि सम्भूय हनिष्यावः । भूमौ हिरण्ये वा ते परिग्रहः" इति ।। १३.३.१७ ।।

प्रतिपन्नं अभिसत्कृत्यऽगतं अवस्कन्देन प्रकाशयुद्धेन वा शत्रुणा घातयेत् ।। १३.३.१८ ।।

अभिविश्वासन-अर्थं भूमि-दान-पुत्र-अभिषेक-रक्षा-अपदेशेन वा ग्राहयेत् ।। १३.३.१९ ।।

अविषह्यं उपांशु-दण्डेन वा घातयेत् ।। १३.३.२० ।।

स चेद्दण्डं दद्यान्न स्वयं आगच्छेत्तं अस्य वैरिणा घातयेत् ।। १३.३.२१ ।।

दण्डेन वा प्रयातुं इच्छेन्न विजिगीषुणा तथाअप्येनं उभयतः-सम्पीडनेन घातयेत् ।। १३.३.२२ ।।

अविश्वस्तो वा प्रत्येकशो यातुं इच्छेद्राज्य-एक-देशं वा यातव्यस्यऽदातु-कामः । तथाअप्येनं वैरिणा सर्व-संदोहेन वा घातयेत् ।। १३.३.२३ ।।

वैरिणा वा सक्तस्य दण्ड-उपनयेन मूलं अन्यतो हारयेत् ।। १३.३.२४ ।।

शत्रु-भूम्या वा मित्रं पणेत । मित्र-भूम्या वा शत्रुं ।। १३.३.२५ ।।

ततः शत्रु-भूमि-लिप्सायां मित्रेणऽत्मन्यपकारयित्वाअभियुञ्जीत इति समानाः पूर्वेण सर्व एव योगाः ।। १३.३.२६ ।।

शत्रुं वा मित्र-भूमि-लिप्सायां प्रतिपन्नं दण्डेनानुगृह्णीयात् ।। १३.३.२७ ।।

ततो मित्र-गतं अतिसंदध्यात् ।। १३.३.२८ ।।

कृत-प्रतिविधानो वा व्यसनं आत्मनो दर्शयित्वा मित्रेणामित्रं उत्साहयित्वाआत्मानं अभियोजयेत् ।। १३.३.२९ ।।

ततः सम्पीडनेन घातयेत् । जीव-ग्राहेण वा राज्य-विनिमयं कारयेत् ।। १३.३.३० ।।

मित्रेणऽश्रितश्चेत्शत्रुरग्राह्ये स्थातुं इच्छेत्सामन्त-आदिभिर्मूलं अस्य हारयेत् ।। १३.३.३१ ।।

दण्डेन वा त्रातुं इछेत्तं अस्य घातयेत् ।। १३.३.३२ ।।

तौ चेन्न भिद्येयातां प्रकाशं एवान्योन्य-भूम्या पणेत ।। १३.३.३३ ।।

ततः परस्परं मित्र-व्यञ्जना वा उभय-वेतना वा दूतान्प्रेषयेयुः "अयं ते राजा भूमिं लिप्सते शत्रु-संहितः" इति ।। १३.३.३४ ।।

तयोरन्यतरो जात-आशङ्क-आरोषः । पूर्ववच्चेष्टेत ।। १३.३.३५ ।।

दुर्ग-राष्ट्र-दण्ड-मुख्यान्वा कृत्य-पक्ष-हेतुभिरभिविख्याप्य प्रव्राजयेत् ।। १३.३.३६ ।।

ते युद्ध-अवस्कन्द-अवरोध-व्यसनेषु शत्रुं अतिसंदध्युः ।। १३.३.३७ ।।

भेदं वाअस्य स्व-वर्गेभ्यः कुर्युः ।। १३.३.३८ ।।

अभित्यक्त-शासनैः प्रतिसमानयेयुः ।। १३.३.३९ ।।

लुब्धक-व्यञ्जना वा मांस-विक्रयेण द्वाह्स्था दौवारिक-अपाश्रयाश्चोर-अभ्यागमं परस्य द्विस्त्रिरिति निवेद्य लब्ध-प्रत्यया भर्तुरनीकं द्विधा निवेश्य ग्राम-वधेअवस्कन्दे च द्विषतो ब्रूयुः "आसन्नश्चोर-गणः । महांश्चऽक्रन्दः । प्रभूतं सैन्यं आगच्छतु" इति ।। १३.३.४० ।।

तदर्पयित्वा ग्राम-घात-दण्डस्य सैन्यं इतरदादाय रात्रौ दुर्ग-द्वारेषु ब्रूयुः "हतश्चोर-गणः । सिद्ध-यात्रं इदं सैन्यं आगतम् । द्वारं अपाव्रियताम्" इति ।। १३.३.४१ ।।

पूर्व-प्रणिहिता वा द्वाराणि दद्युः ।। १३.३.४२ ।।

तैः सह प्रहरेयुः ।। १३.३.४३ ।।

कारु-शिल्पि-पाषण्ड-कुशीलव-वैदेहक-व्यञ्जनानायुधीयान्व्वा पर-दुर्गे प्रणिदध्यात् ।। १३.३.४४ ।।

तेषां गृह-पतिक-व्यञ्जनाः काष्ठ-तृण-धान्य-पण्य-शकटैः प्रहरण-आवरणान्यभिहरेयुः । देव-ध्वज-प्रतिमाभिर्वा ।। १३.३.४५ ।।

ततस्तद्-व्यञ्जनाः प्रमत्त-वधं अवस्कन्द-प्रतिग्रहं अभिप्रहरणं पृष्ठतः शङ्ख-दुन्दुभि-शब्देन वा "प्रविष्टम्" इत्यावेदयेयुः ।। १३.३.४६ ।।

प्राकार-द्वार-अट्टालक-दानं अनीक-भेदं घातं वा कुर्युः ।। १३.३.४७ ।।

सार्थ-गण-वासिभिरातिवाहिकैः कन्या-वाहिकैरश्व-पण्य-व्यवहारिभिरुपकरण-हारकैर्धान्य-क्रेतृ-विक्रेतृभिर्वा प्रव्रजित-लिङ्गिभिर्दूतैश्च दणड्-अतिनयनम् । संधि-कर्म-विश्वासन-अर्थं ।। १३.३.४८ ।।

इति राज-अपसर्पाः ।। १३.३.४९ ।।

एत एवाटवीनां अपसर्पाः कण्टक-शोधन-उक्ताश्च ।। १३.३.५० ।।

व्रजं अटव्य्-आसन्नं अपसर्पाः सार्थं वा चोरैर्घातयेयुः ।। १३.३.५१ ।।

कृत-संकेतं अन्न-पानं चात्र मदन-रस-विद्धं वा कृत्वाअपगच्छेयुः ।। १३.३.५२ ।।

गो-पालक-वैदेहकाश्च ततश्चोरान्गृहीत-लोप्त्र-भारान्मदन-रस-विकार-कालेअवस्कन्दयेयुः ।। १३.३.५३ ।।

संकर्षण-दैवतीयो वा मुण्ड-जटिल-व्यञ्जनः प्रहवण-कर्मणा मदन-रस-योगेनातिसंदध्यात् ।। १३.३.५४ ।।

अथावस्कन्दं दद्यात् ।। १३.३.५५ ।।

शौण्डिक-व्यञ्जनो वा दैवत-प्रेत-कार्य-उत्सव-समाजेष्वाटविकान्सुरा-विक्रय-उपायन-निमित्तं मदन-रस-योगेनातिसंदध्यात् ।। १३.३.५६ ।।

अथावस्कन्दं दद्यात् ।। १३.३.५७ ।।

ग्राम-घात-प्रविष्टां वा विक्षिप्य बहुधाअटवीं । ।। १३.३.५८अ ब ।।

घातयेदिति चोराणां अपसर्पाः प्रकीर्तिताः ।। १३.३.५८च्द् ।।

कर्शन-पूर्वं पर्युपासन-कर्म ।। १३.४.०१ ।।

जन-पदं यथा-निविष्टं अभये स्थापयेत् ।। १३.४.०२ ।।

उत्थितं अनुग्रह-परिहाराभ्यां निवेषयेत् । अन्यत्रापसरतः ।। १३.४.०३ ।।

संग्रामादन्यस्यां भूमौ निवेशयेत् । एकस्यां वा वासयेत् ।। १३.४.०४ ।।

न ह्यजनो जन-पदो राज्यं अजन-पदं वा भवतिइति कौटिल्यः ।। १३.४.०५ ।।

विषमस्थस्य मुष्टिं सस्यं वा हन्याद् । वीवध-प्रसारौ च ।। १३.४.०६ ।।

प्रसार-वीवधच्-छेदान्मुष्टि-सस्य-वधादपि । ।। १३.४.०७अ ब ।।

वमनाद्गूढ-घाताच्च जायते प्रकृति-क्षयः ।। १३.४.०७च्द् ।।

"प्रभूत-गुण-बद्ध(वद्ध)-अन्य-कुप्य-यन्त्र-शस्त्र-आवरण-विष्टिरश्मि-समग्रं मे सैन्यम् । ऋतुश्च पुरस्तात् । अपर्तुः परस्य । व्याधि-दुर्भिक्ष-निचय-रक्षा-क्षयः क्रीत-बल-निर्वेदो मित्र-बल-निर्वेदश्च" इति पर्युपासीत ।। १३.४.०८ ।।

कृत्वा स्कन्ध-आवारस्य रक्षां वीवध-आसारयोः पथश्च । परिक्षिप्य दुर्गं खात-सालाभ्याम् । दूषयित्वाउदकम् । अवस्राव्य परिखाः सम्पूरयित्वा वा । सुरुङ्गा-बल-कुटिकाभ्यां वप्र-प्राकारौ हारयेत् । दारं च गुडेन ।। १३.४.०९ ।।

निम्नं वा पांसु-मालयाआच्छादयेत् ।। १३.४.१० ।।

बहुल-आरक्षं यन्त्रैर्घातयेत् ।। १३.४.११ ।।

निष्किरादुपनिष्कृष्याश्वैश्च प्रहरेयुः ।। १३.४.१२ ।।

विक्रम-अन्तरेषु च नियोग-विकल्प-समुच्चयैश्चौपायानां सिद्धिं लिप्सेत ।। १३.४.१३ ।।

दुर्ग-वासिनः श्येन-काक-नप्तृ-भास-शुक-सारिक-उलूक-कपोतान्ग्राहयित्वा पुच्छेष्वग्नि-योग-युक्तान्पर-दुर्गे विसृजेत् ।। १३.४.१४ ।।

अपकृष्ट-स्कन्ध-आवारादुच्छ्रित-ध्वज-धन्व-आरक्षो वा मानुषेणाग्निना पर-दुर्गं आदीपयेत् ।। १३.४.१५ ।।

गूढ-पुर्षाश्चान्तर्-दुर्ग-पालका नकुल-वानर-बिडाल-शुनां पुच्छेष्वग्नि-योगं आधाय काण्ड-निचय-रक्षा-विधान-वेश्मसु विसृजेयुः ।। १३.४.१६ ।।

शुष्क-मत्स्यानां उदरेष्वग्निं आधाय वल्लूरे वा वायस-उपहारेण वयोभिर्हारयेयुः ।। १३.४.१७ ।।

सरल-देव-दारु-पूति-तृण-गुग्गुलु-श्री-वेष्टकसर्जरसलाक्षागुलिकाः खर-उष्ट्र-अजावीनां लेण्डं चाग्नि-धारणं ।। १३.४.१८ ।।

प्रियाल-चूर्णं अवल्गु-जमषी-मधु-उच्छिष्टं अश्व-खर-उष्ट्र-गो-लेण्डं इत्येष क्षेप्योअग्नि-योगः ।। १३.४.१९ ।।

सर्व-लोह-चूर्णं अग्नि-वर्णं वा कुम्भी-सीस-त्रपु-चूर्णं वा पारिभद्रक-पलाश-पुष्प-केश-मषी-तैल-मधु-उच्छिष्टक-श्री-वेष्टक-युक्तोअग्नि-योगो विश्वास-घाती वा ।। १३.४.२० ।।

तेनावलिप्तः शण-त्रपुस-वल्क-वेष्टितो बाण इत्यग्नि-योगः ।। १३.४.२१ ।।

न त्वेव विद्यमाने पराक्रमेअग्निं अवसृजेत् ।। १३.४.२२ ।।

अविश्वास्यो ह्यग्निर्दैव-पीडनं च । अप्रतिसंख्यात-प्राणि-धान्य-पशु-हिरण्य-कुप्य-द्रव्य-क्षय-करः ।। १३.४.२३ ।।

क्षीण-निचयं चावाप्तं अपि राज्यं क्षयायएव भवति (इति पर्युपासन-कर्म) ।। १३.४.२४ ।।

"सर्व-आरम्भ-उपकरण-विष्टि-सम्पन्नोअस्मि । व्याधितः पर उपधा-विरुद्ध-प्रकृतिरकृत-दुर्ग-कर्म-निचयो वा । निरासारः सासारो वा पुरा मित्रैः संधत्ते" इत्यवमर्द-कालः ।। १३.४.२५ ।।

स्वयं अग्नौ जाते समुत्थापिते वा प्रहवणे प्रेक्षा-अनीक-दर्शन-सङ्ग-सौरिक-कलहेषु नित्य-युद्ध-श्रान्त-बले बहुल-युद्ध-प्रतिविद्ध-प्रेत-पुरुषे जागरण-क्लान्त-सुप्त-जने दुर्दिने नदी-वेगे वा नीहार-सम्प्लवे वाअवमृद्नीयात् ।। १३.४.२६ ।।

स्कन्ध-आवारं उत्सृज्य वा वन-गूढः शत्रुं निष्क्रान्तं घातयेत् ।। १३.४.२७ ।।

मित्र-आसार-मुख्य-व्यञ्जनो वा समुद्धेन मैत्रीं कृत्वा दूतं अभित्यक्तं प्रेषयेत् "इदं ते छिद्रम् । इमे दूष्याः" "सम्रोद्धुर्वा छिद्रम् । अयं ते कृत्य-पक्षः" इति ।। १३.४.२८ ।।

तं प्रतिदूतं आदाय निर्गच्छन्तं विजिगीषुर्गृहीत्वा दोषं अभिविख्याप्य प्रवास्य अपगच्छेत् ।। १३.४.२९ ।।

ततो मित्र-आसार-व्यञ्जनो वा समृद्धं ब्रूयात्"मां त्रातुं उपनिर्गच्छ । मया वा सह सम्रोद्धारं जहि" इति ।। १३.४.३० ।।

प्रतिपन्नं उभयतः-सम्पीडनेन घातयेत् । जीव-ग्राहेण वा राज्य-विनिमयं कारयेत् ।। १३.४.३१ ।।

नगरं वाअस्य प्रमृद्नीयात् ।। १३.४.३२ ।।

सार-बलं वाअस्य वमयित्वाअभिहन्यात् ।। १३.४.३३ ।।

तेन दण्ड-उपनत-आटविका व्याख्याताः ।। १३.४.३४ ।।

दण्ड-उपनत-आटविकयोरन्यतरो वा समुद्धस्य प्रेषयेत् "अयं सम्रोद्धा व्याधितः । पार्ष्णि-ग्राहेणाभियुक्तः । छिद्रं अन्यदुत्थितम् । अन्यस्यां भूमावपयातु-कामः" इति ।। १३.४.३५ ।।

प्रतिपन्ने सम्रोद्धा स्कन्ध-आवारं आदीप्यापयायात् ।। १३.४.३६ ।।

ततः पूर्ववदाचरेत् ।। १३.४.३७ ।।

पण्य-सम्पातं वा कृत्वा पण्येनएनं रस-विद्धेनातिसंदध्यात् ।। १३.४.३८ ।।

आसार-व्यञ्जनो वा समुद्धस्य दूतं प्रेषयेत् "मया बाह्यं अभिहतं उपनिर्गच्छाभिहन्तुम्" इति ।। १३.४.३९ ।।

प्रतिपन्नं पूर्ववदाचरेत् ।। १३.४.४० ।।

मित्रं बन्धुं वाअपदिश्य योग-पुरुषाः शासन-मुद्रा-हस्ताः प्रविश्य दुर्गं ग्राहयेयुः ।। १३.४.४१ ।।

आसार-व्यञ्ज्जनो वा समुद्धस्य प्रेषयेत् "अमुष्मिन्देशे काले च स्कन्ध-आवारं अभिहनिष्यामि । युष्माभिरपि योद्धव्यम्" इति ।। १३.४.४२ ।।

प्रतिपन्नं यथा-उक्तं अभ्याघात-संकुलं दर्शयित्वा रात्रौ दुर्गान्निष्क्रान्तं घातयेत् ।। १३.४.४३ ।।

यद्वा मित्रं आवाहयेदाटव्विकं वा । तं उत्साहयेत्"विक्रम्य समुद्धे भूमिं अस्य प्रतिपद्यस्व" इति ।। १३.४.४४ ।।

विक्रान्तं प्रकृतिभिर्दूष्य-मुख्य-उपग्रहेण वा घातयेत् । स्वयं वा रसेन "मित्र-घातकोअयम्" इत्यवाप्त-अर्थः ।। १३.४.४५ ।।

विक्रमितु-कामं वा मित्र-व्यञ्जनः परस्याभिशंसेत् ।। १३.४.४६ ।।

आप्त-भाव-उपगतः प्रवीर-पुरुषानस्यौपघातयेत् ।। १३.४.४७ ।।

संधिं वा कृत्वा जन-पदं एनं निवेशयेत् ।। १३.४.४८ ।।

निविष्टं अस्य जन-पदं अविज्ञातो हन्यात् ।। १३.४.४९ ।।

अपकारयित्वा दूष्य-आटविकेषु वा बल-एक-देशं अतिनीय दुर्गं अवस्कन्देन हारयेत् ।। १३.४.५० ।।

दूष्य-अमित्र-आटविक-द्वेष्य-प्रत्यपसृताश्च कृत-अर्थ-मान-संज्ञा-चिह्नाः पर-दुर्गं अवस्कन्देयुः ।। १३.४.५१ ।।

पर-दुर्गं अवस्कन्द्य स्कन्ध-आवारं वा पतित-परान्-मुख-अभिपन्नं उक्त-केश-शस्त्र-भय-विरूपेभ्यश्चाभयं अयुध्यमानेभ्यश्च दद्युः ।। १३.४.५२ ।।

पर-दुर्गं अवाप्य विशुद्ध-शत्रु-पक्षं कृत-उपांशु-दण्ड-प्रतीकारं अन्तर्-बहिश्च प्रविशेत् ।। १३.४.५३ ।।

एवं विजिगीषुरमित्र-भूमिं लब्ध्वा मध्यमं लिप्सेत । तत्-सिद्धावुदासीनं ।। १३.४.५४ ।।

एष प्रथमो मार्गः पृथिवीं जेतुं ।। १३.४.५५ ।।

मध्यम-उदासीनयोरभावे गुण-अतिशयेनारि-प्रकृतीः साधयेत् । तत उत्तराः प्रकृतीः ।। १३.४.५६ ।।

एष द्वितीयो मार्गः ।। १३.४.५७ ।।

मण्डलस्याभावे शत्रुणा मित्रं मित्रेण वा शत्रुं उभयतः-सम्पीडनेन साधयेत् ।। १३.४.५८ ।।

एष-तृतीयो मार्गः ।। १३.४.५९ ।।

शक्यं एकं वा सामन्तं साधयेत् । तेन द्वि-गुणो द्वितीयम् । त्रि-गुणस्तृतीयं ।। १३.४.६० ।।

एष चतुर्थो मार्गः पृथिवीं जेतुं ।। १३.४.६१ ।।

जित्वा च पृथिवीं विभक्त-वर्ण-आश्रमां स्व-धर्मेण भुञ्जीत ।। १३.४.६२ ।।

उपजापोअपसर्पश्च वामनं पर्युपासनं । ।। १३.४.६३अ ब ।।

अवमर्दश्च पञ्चएते दुर्ग-लम्भस्य हेतवः ।। १३.४.६३च्द् ।।

द्विविधं विजिगीषोः समुत्थानं अटव्य्-आदिकं एक-ग्राम-आदिकं च ।। १३.५.०१ ।।

त्रिविधश्चास्य लम्भः नवो । भूत-पूर्वः । पित्र्य इति ।। १३.५.०२ ।।

नवं अवाप्य लाभं पर-दोषान्स्व-गुणैश्छादयेत् । गुणान्गुण-द्वैगुण्येन ।। १३.५.०३ ।।

स्व-धर्म-कर्म-अनुग्रह-परिहार-दान-मान-कर्मभिश्च प्रकृति-प्रिय-हितान्यनुवर्तेत ।। १३.५.०४ ।।

यथा-सम्भाषितं च कृत्य-पक्षं उपग्राहयेत् । भूयश्च कृत-प्रयासं ।। १३.५.०५ ।।

अविश्वासो हि विसंवादकः स्वेषां परेषां च भवति । प्रकृति-विरुद्ध-आचारश्च ।। १३.५.०६ ।।

तस्मात्समान-शील-वेष-भाषा-आचारतां उपगछेत् ।। १३.५.०७ ।।

देश-दैवत-स्माज-उत्सव-विहारेषु च भक्तिं अनुवर्तेत ।। १३.५.०८ ।।

देश-ग्राम-जाति-संघ-मुख्येषु चाभीक्ष्णं सत्त्रिणः परस्यापचारं दर्शयेयुः । माहाभाग्यं भक्तिं च तेषु स्वामिनः । स्वामि-सत्कारं च विद्यमानं ।। १३.५.०९ ।।

उचितैश्चएनान्भोग-परिहार-रक्षा-अवेक्षणैर्भुञ्जीत ।। १३.५.१० ।।

सर्व-देवता-आश्रम-पूजनं च विद्या-वाक्य-धर्म-शूर-पुरुषाणां च भूमि-द्रव्य-दान-परिहारान्कारयेत् । सर्व-बन्धन-मोक्षणं अनुग्रहं दीन-अनाथ-व्याधितानां च ।। १३.५.११ ।।

चातुर्मास्येष्वर्ध-मासिकं अघातम् । पौर्णमासीषु च चातूरात्रिकं राज-देश-नक्षत्रेष्वैकरात्रिकं ।। १३.५.१२ ।।

योनि-बाल-वधं पुंस्त्व-उपघातं च प्रतिषेधयेत् ।। १३.५.१३ ।।

यच्च कोश-दण्ड-उपघातकं अधर्मिष्ठं वा चरित्रं मन्येत तदपनीय धर्म्य-व्यवहारं स्थापयेत् ।। १३.५.१४ ।।

चोर-प्रकृतीनां म्लेच्छ-जातीनां च स्थान-विपर्यासं अनेकस्थं कारयेत् । दुर्ग-राष्ट्र-दण्ड-मुख्यानां च ।। १३.५.१५ ।।

परा-उपगृहीतानां च मन्त्रि-पुरोहितानां परस्य प्रत्यन्तेष्वनेकस्थं वासं कारयेत् ।। १३.५.१६ ।।

अपकार-समर्थाननुक्षियतो वा भर्तृ-विनाशं उपांशु-दण्डेन प्रशमयेत् ।। १३.५.१७ ।।

स्व-देशीयान्वा परेण वाअपरुद्धानपवाहित-स्थानेषु स्थापयेत् ।। १३.५.१८ ।।

यश्च तत्-कुलीनः प्रत्यादेयं आदातुं शक्तः । प्रत्यन्त-अटवीस्थो वा प्रबाधितुं अभिजातः । तस्मै विगुणां भूमिं प्रयच्छेत् । गुणवत्याश्चतुर्-भागं वा कोश-दण्ड-दानं अवस्थाप्य । यदुपकुर्वाणः पौर-जानपदान्कोपयेत् ।। १३.५.१९ ।।

कुपितैस्तैरेनं घातयेत् ।। १३.५.२० ।।

प्रकृतिभिरुपक्रुष्टं अपनयेत् । औपघातिके वा देशे निवेशयेत् इति ।। १३.५.२१ ।।

भूत-पूर्वे येन दोषेणापवृत्तस्तं प्रकृति-दोषं छादयेत् । येन च गुणेनौपावृत्तस्तं तीव्री-कुर्यात् इति ।। १३.५.२२ ।।

पित्र्ये पितुर्दोषांश्छादयेत् । गुणांश्च प्रकाशयेत् इति ।। १३.५.२३ ।।

चरित्रं अकृतं धर्म्यं कृतं चान्यैः प्रवर्तयेत् । ।। १३.५.२४अ ब ।।

प्रवर्तयेन्न चाधर्म्यं कृतं चान्यैर्निवर्तयेत् ।। १३.५.२४च्द् ।।

चातुर्वर्ण्य-रक्षा-अर्थं औपनिषदिकं अधर्मिष्ठेषु प्रयुञ्जीत ।। १४.१.०१ ।।

काल-कूट-आदिर्विष-वर्गः श्रद्धेय-देश-वेष-शिल्प-भाषा-अभिजन-अपदेशैः कुब्ज-वामन-किरात-मूक-बधिर-जड-अन्धच्-छद्मभिर्म्लेच्छ-जातीयैरभिप्रेतैः स्त्रीभिः पुम्भिश्च पर-शरीर-उपभोगेष्ववधातव्यः ।। १४.१.०२ ।।

राज-क्रीडा-भाण्ड-निधान-द्रव्य-उपब्भोगेषु गूढाः शस्त्र-निधानं कुर्युः । सत्र-आजीविनश्च रात्रि-चारिणोअग्नि-जीविनश्चाग्नि-निधानं ।। १४.१.०३ ।।

चित्र-भेक-कौण्डिन्यक-कृकण-पञ्च-कुष्ठ-शत-पदी-चूर्णं उच्चि-दिण्ग-कम्बली-शत-कन्द(कर्दम?)-इध्म-कृकलास-चूर्णं गृह-गोलिक-अन्ध-अहि-कक्र-कण्टक-पूति-कीट-गोमारिका-चूर्णं भल्लातक-अवल्गु-जर-सम्युक्तं सद्यः-प्राण-हरम् । एतेषां वा धूमः ।। १४.१.०४ ।।

कीटो वाअन्यतमस्तप्तः कृष्ण-सर्प-प्रियङ्गुभिः । ।। १४.१.०५अ ब ।।

शोषयेदेष सम्योगः सद्यः-प्राण-हरो मतः ।। १४.१.०५च्द् ।।

धाम-अर्गव-यातु-धान-मूलं भल्लातक-पुष्प-चूर्ण-युक्तं आर्धमासिकः ।। १४.१.०६ ।।

व्याघातक-मूलं भल्लातक-पुष्प-चूर्ण-युक्तं कीट-योगो मासिकः ।। १४.१.०७ ।।

कला-मात्रं पुरुषाणाम् । द्वि-गुणं खर-अश्वानाम् । चतुर्-गुणं हस्त्य्-उष्ट्राणां ।। १४.१.०८ ।।

शत-कर्दम-उच्चिदिङ्ग-कर-वीर-कटु-तुम्बी-मत्स्य-धूमो मदन-कोद्रव-पलालेन हस्ति-कर्ण-पलाश-पलालेन वा प्रवात-अनुवाते प्रणीतो यावच्चरति तावन्मारयति ।। १४.१.०९ ।।

पूकि-कीट-मस्त्य-कटु-तुम्बी-शत-कर्दम-इध्म-इन्द्र-गोप-चूर्णं पूति-कीट-क्षुद्र-आराला-हेम-विदारी-चूर्णं वा बस्त-शृङ्ग-खुर-चूर्ण-युक्तं अन्धी-करो धूमः ।। १४.१.१० ।।

पूति-करञ्ज-पत्र-हरि-ताल-मनः-शिला-गुञ्ज-आरक्त-कार्पास-पलाल-अन्य-आस्फोट-काच-गो-शकृद्-रस-पिष्टं अन्धी-करो धूमः ।। १४.१.११ ।।

सर्प-निर्मोकं गो-अश्व-पुरीषं अन्ध-अहिक-शिरश्चान्धी-करो धूमः ।। १४.१.१२ ।।

पारावत-प्लवक-क्रव्य-अदानां हस्ति-नर-वराहाणां च मूत्र-पुरीषं कासीस-हिङ्गु-यव-तुष-कण-तण्डुलाः कार्पास-कुटज-कोश-अतकीनां च बीजानि गो-मूत्रिका-भाण्डी-मूलं निम्ब-शिग्रु-फणिर्ज-काक्षीव-पीलुक-भङ्गः सर्प-शफरी-चर्म हस्ति-नख-शृङ्ग-चूर्णं इत्येष धूमो मदन-कोद्रव-पलालेन हस्ति-कर्ण-पलाश-पलालेन वा प्रणीतः प्रत्येकशो ।। १४.१.१३ ।।

।। यावच्चरति तावन्मारयति ।।

काली-कुष्ठ-नड-शतावली-मूलं सर्प-प्रचलाक-कृकण-पञ्च-कुष्ठ-चूर्णं वा धूमः पूर्व-कल्पेनऽर्द्र-शुष्क-पलालेन वा प्रणीतः संग्राम-अवतरण-अवस्कन्दन-संकुलेषु कृत-नेजन-उदक-अक्षि-प्रतीकारैः प्रणीतः सर्व-प्राणिनां नेत्रघ्नः ।। १४.१.१४ ।।

शारिका-कपोत-बक-बलाका-लेण्डं अर्क-अक्षि-पीलुक-स्नुहि-क्षीर-पिष्टं अन्धी-करणं अञ्जनं उदक-दूषणं च ।। १४.१.१५ ।।

यवक-शालि-मूल-मदन-फल-जाती-पत्र-नर-मूत्र-योगः प्लक्ष-विदारी-मूल-युक्तो मूक-उदुम्बर-मदन-कोद्रव-क्वाथ-युक्तो हस्ति-कर्ण-पलाश-क्वाथ-युक्तो वा मदन-योगः ।। १४.१.१६ ।।

शृङ्गि-गौतम-वृक-कण्टक-अर-मयूर-पदी-योगो गुञ्जा-लाङ्गली-विष-मूलिक-इङ्गुदी-योगः कर-वीर-अक्षि-पीलुक-अर्क-मृग-मारणी-योगो मदन्-कोद्रव-क्वाथ-युक्तो हस्ति-कर्ण-पलाश-क्वाथ-युक्तो वा मदन-योगः ।। १४.१.१७ ।।

समस्ता वा यवस-इन्धन-उदक-दूषणाः ।। १४.१.१८ ।।

कृत-कण्डल-कृकलास-गृह-गोलिक-अन्ध-अहिक-धूमो नेत्र-वधं उन्मादं च करोति ।। १४.१.१९ ।।

कृकलास-गृह-गोलिका-योगः कुष्ठ-करः ।। १४.१.२० ।।

स एव चित्रं एक-अन्त्र-मधु-युक्तः प्रमेहं आपादयति । मनुष्य-लोहित-युक्तः शोषं ।। १४.१.२१ ।।

दूषी-विषं मदन-कोद्रव-चूर्णं अपजिह्विका-योगः ।। १४.१.२२ ।।

मातृ-वाहक-अञ्जलि-कार-प्रचलाक-भेक-अक्षि-पीलुक-योगो विषूचिका-करः ।। १४.१.२३ ।।

पञ्च-कुष्ठक-कौण्डिन्य-कराज-वृक्ष-पुष्प-मधु-योगो ज्वर-करः ।। १४.१.२४ ।।

भासन-कुल-जिह्वा-ग्रन्थिका-योगः खरी-क्षीर-पिष्टो मूक-बधिर--करो मास-अर्ध-मासिकः ।। १४.१.२५ ।।

कला-मात्रं पुरुषाणां इत्समानं पूर्वेण ।। १४.१.२६ ।।

भङ्ग-क्वाथ-उपनयनं औषधानाम् । चूर्णं प्राण-भृताम् । सर्वेषां वा क्वाथ-उपनयनम् । एवं वीर्यवत्तरं भव्ति ।। १४.१.२७ ।।

इति योग-सम्पत् ।। १४.१.२८ ।।

शाल्मली विदारी-धान्य-सिद्धो मूल-वत्स-नाभ-सम्युक्तश्चुच्छुन्दरी-शोणित-प्रलेपेन दिग्धो बाणो यं विध्यति स विद्धोअन्यान्दश-पुरुषान्दशति । ते दष्टा दशान्यान्दशन्ति पुरुषान् ।। १४.१.२९ ।।

बल्लातक-यातु-धानाव-अनुधा-मार्गव-बाणानां पुष्पैरेलक-अक्षि-गुग्गुलु-हालाहलानां च कषायं बस्त-नर-शोणित-युक्तं दंश-योगः ।। १४.१.३० ।।

ततोअर्ध-धरणिको योगः सक्तु-पिण्याकाभ्यां उदके प्रणीतो धनुः-शत-आयामं उदक-आशयं दूषयति ।। १४.१.३१ ।।

मत्स्य-परम्परा ह्येतेन दष्टाअभिमृष्टा वा विषी-भवति । यश्चएतदुदकं पिबति स्पृशति वा ।। १४.१.३२ ।।

रक्त-श्वेत-सर्षपैर्गोधा त्रि-पक्षं उष्ट्रिकायां भूमौ निखातायां निहिता वध्येनोद्धृता यावत्पश्यति तावन्मारयति । कृष्ण-सर्पो वा ।। १४.१.३३ ।।

विद्युत्-प्रदग्धोअङ्गारो ज्वालो वा विद्युत्-प्रदग्धैः काष्ठैर्गृहीतश्चानुवासितः कृत्तिकासु भरणीषु वा रौद्रेण कर्मणाअभिहुतोअग्निः प्रणीतश्च निस्प्रतीकारो दहति ।। १४.१.३४ ।।

कर्मारादग्निं आहृत्य क्षौद्रेण जुहुयात्पृथक् । ।। १४.१.३५अ ब ।।

सुरया शौण्डिकादग्निं मार्गतोअग्निं घृतेन च ।। १४.१.३५च्द् ।।

माल्येन चएक-पत्न्य्-अग्निं पुंश्चल्य्-अग्निं च सर्षपैः । ।। १४.१.३६अ ब ।।

दध्ना च सूतिकास्वग्निं आहित-अग्निं च तण्डुलैः ।। १४.१.३६च्द् ।।

चण्डाल-अग्निं च मांसेन चित-अग्निं मानुषेण च ।। १४.१.३७अ ब ।।

समस्तान्बस्त-वसया मानुषेण ध्रुवेण च ।। १४.१.३७च्द् ।।

जुहुयादग्नि-मन्त्रेण राज-वृक्षस्य दारुभिः । ।। १४.१.३८अ ब ।।

एष निष्प्रतिकारोअग्निर्द्विषतां नेत्र-मोहनः ।। १४.१.३८च्द् ।।

अदिते नमस्ते । अनुमते नमस्ते । सरस्वति नमस्ते । देव सवितर्नमास्ते ।। १४.१.३९ ।।

अग्नये स्वाहा । सोमाय स्वाहा । भूः स्वाहा भुवः स्वाहा ।। १४.१.४० ।।

शिरीष-उदुम्बर-शमी-चूर्णं सर्पिषा संहृत्यार्ध-मासिकः क्षुद्-योगः ।। १४.२.०१ ।।

कशेरुक-उत्पल-कन्देक्षु-मूल-बिस-दूर्वा-क्षीर-घृत-मण्ड-सिद्धो मासिकः ।। १४.२.०२ ।।

माष-यव-कुलत्थ-दर्भ-मूल-चूर्णं वा क्षीर-घृताभ्याम् । वल्ली-क्षीर-घृतं वा सम-सिद्धम् । साल-पृश्नि-पर्णी-मूल-कल्कं पयसा पीत्वा । पयो वा तत्-सिद्धं मधु-घृताभ्यां अशित्वा मासं उपवसति ।। १४.२.०३ ।।

श्वेत-बस्त-मूत्रे सप्त-रात्र-उषितैः सिद्ध-अर्थकैः सिद्धं तैलं कटुक-आलाबौ मास-अर्ध-मास-स्थितं चतुष्-पद-द्वि-पदानां विरूप-करणं ।। १४.२.०४ ।।

तक्र-यव-भक्षस्य सप्त-रात्रादूर्ध्वं श्वेत-गर्दभस्य लेण्ड-यवैः सिद्धं गौर-सर्षप-तैलं विरूप-करणं ।। १४.२.०५ ।।

एतयोरन्यतरस्य मूत्र-लेण्द-रस-सिद्धं सिद्ध-अर्थक-तैलं अर्क-तूल-पतङ्ग-चूर्ण-प्रतीवापं श्वेती-करणं ।। १४.२.०६ ।।

श्वेत-कुक्कुट-अजगर-लेण्ड-योगः श्वेती-करणं ।। १४.२.०७ ।।

श्वेत-बस्त-मूत्रे श्वेत-सर्षपाः सप्त-रात्र-उषित-अस्तक्र(?)-मर्क--क्षीर-लवणं धान्यं च पक्ष-स्थितो योगः श्वेती-करणं ।। १४.२.०८ ।।

कटुक-अलाबौ वली-गते गतं-अर्ध-मास-स्थितं गौर-सर्षप-पिष्टं रोम्णां श्वेती-करणं ।। १४.२.०९ ।।

अलोजुनेति यः कीटः श्वेता च गृह-गोलिका । ।। १४.२.१०अ ब ।।

एतेन पिष्तेनाभ्यक्ताः केशाः स्युः शङ्ख-पाण्डराः ।। १४.२.१०च्द् ।।

गोमयेन तिन्दुक-अरिष्ट-कल्केन वा मर्दित-अङ्गस्य भल्लातक-रस-अनुलिप्तस्य मासिकः कुष्ठ-योगः ।। १४.२.११ ।।

कृष्ण-सर्प-मुखे गृह-गोलिका-मुखे वा सप्त-रात्र-उषिता गुज्जाः कुष्ठ-योगः ।। १४.२.१२ ।।

शुक-पित्त-अण्ड-रस-अभ्यङ्गः कुष्ठ-योगः ।। १४.२.१३ ।।

कुष्ठस्य-प्रियाल-कल्क-कषायः प्रतीकारः ।। १४.२.१४ ।।

कुक्कुट-कोश-अतकी(?)-शतावरी-मूल-युक्तं आहारयमाणो मासेन गौरो भवति ।। १४.२.१५ ।।

वट-कषाय-स्नातः सह-चर-कल्क-दिग्धः कृष्णो भवति ।। १४.२.१६ ।।

शकुन-कण्गु-तैल-युक्ता हरि-ताल-मनः-शिलाः श्यामी-करणं ।। १४.२.१७ ।।

ख-द्योत-चूर्णं सर्षप-तैल-युक्तं रात्रौ ज्वलति ।। १४.२.१८ ।।

ख-द्योत-गण्डू-पद-चूर्णं समुद्र-जन्तूनां भृङ्ग-कपालानां खदिर-कर्णिकाराणां पुष्प-चूर्णं वा शकुन-कङ्गु-तैल-युक्तं तेजन-चूर्णं ।। १४.२.१९ ।।

पारिभद्रक-त्वन्-मषी मण्डूक-वसया युक्ता गात्र-प्रज्वालनं अग्निना ।। १४.२.२० ।।

परिभद्रक-त्वक्-तिल-कल्क-प्रदिग्धं शरीरं अग्निना ज्वलति ।। १४.२.२१ ।।

पीलु-त्वन्-मषीमयः पिण्डो हस्ते ज्वलति ।। १४.२.२२ ।।

मण्डूक-वसा-दिग्धोअग्निना ज्वलति ।। १४.२.२३ ।।

तेन प्रदिग्धं अङ्गं कुश-आम्र-फल-तैल-सिक्तं समुद्र-मण्डूकी-फेनक-सर्ज-रस-चूर्ण-युक्तं वा ज्वलति ।। १४.२.२४ ।।

मण्डूक-कुलीर-आदीनां वसया सम-भागं तैलं सिद्धं अभ्यङ्गं गात्राणां अग्नि-प्रज्वालनं ।। १४.२.२५ ।।

वेणु-मूल-शैवल-लिप्तं अङ्गं मण्डूक-वसा-दिग्धं अग्निना ज्वलति ।। १४.२.२६ ।।

पारिभद्रक-प्पतिबला-वञ्जुल-वज्र-कदली-मूल-कल्केन मण्डूक-वसा-सिद्धेन तैलेनाभ्यक्त-पादोअङ्गारेषु गच्छति ।। १४.२.२७ ।।

उप-उदका प्रतिबला वञ्जुलः पारिभद्रकः । ।। १४.२.२८अ ब ।।

एतेषां मूल-कल्केन मण्डूक-वसया सह ।। १४.२.२८च्द् ।।

साधयेत्तैलं एतेन पादावभ्यज्य निर्मलौ । ।। १४.२.२९अ ब ।।

अङ्गार-राशौ विचरेद्यथा कुसुम-संचये ।। १४.२.२९च्द् ।।

हंस-क्रौञ्च-मयूराणां अन्येषां वा महा-शकुनीनां उदक-प्लवानां पुच्छेषु बद्धा नल-दीपिका रात्रावुल्का-दर्शनं ।। १४.२.३० ।।

वैद्युतं भस्म-अङ्गि-शमनं ।। १४.२.३१ ।।

स्त्री-पुष्प-पायिता माषा व्रजकुली-मूलं मण्डूक-वसा-मिश्रं चुल्लुयां दीप्तायां अपाचनं ।। १४.२.३२ ।।

चुल्ली-शोधनं प्रतीकारः ।। १४.२.३३ ।।

पीलुमयो मणिरग्नि-गर्भः सुवर्चला-मूल-ग्रन्थिः सूत्र-ग्रन्थिर्वा पिचु-परिवेष्टितो मुख्यादग्नि-धूम-उत्सर्गः ।। १४.२.३४ ।।

कुश-आम्र-फल-तैल-सिक्तोअग्निर्वर्ष-प्रवातेषु ज्वलति ।। १४.२.३५ ।।

समुद्र-फेनकस्तैल-युक्तोअम्भसि प्लवमानो ज्वलति ।। १४.२.३६ ।।

प्लवमानानां अस्थिषु कल्माष-वेणुना निर्मथितोअग्निर्नौदकेन शाम्यति । उदकेन ज्वलति ।। १४.२.३७ ।।

शस्त्र-हतस्य शूल-प्रोतस्य वा पुरुषस्य वाम-पार्श्व-पर्शुक-अस्थिषु कल्माष-वेणुना निर्मथितोअग्निः स्त्रियाः पुरुषस्य वाअस्थिषु मनुष्य-पर्शुकया निर्मथितोअग्निर्यत्र त्रिरपसव्यं गच्छति न चात्रान्योअग्निर्ज्वलति ।। १४.२.३८ ।।

चुच्चुन्दरी खञ्जरीटः खार-कीटश्च पिष्यते । ।। १४.२.३९अ ब ।।

अश्व-मूत्रेण संसृष्टा निगलानां तु भञ्जनं ।। १४.२.३९च्द् ।।

अयस्-कान्तो वा पाषाणः कुलीर-दर्दुर-खार-कीट-वसा-प्रदेहेन द्वि-गुणः ।। १४.२.४० ।।

नारक-गर्भः कङ्क-भास-पार्श्व-उत्पल-उदक-पिष्टश्चतुष्-पद-द्वि-पदानां पाद-लेपः ।। १४.२.४१ ।।

उलूक-गृध्र-वसाभ्यां उष्ट्र-चर्म-उपानहावभ्यज्य वटपत्त्रैः प्रतिच्छाद्य पञ्चाशद्-योजनान्यश्रान्तो गच्छति ।। १४.२.४२ ।।

श्येन-कङ्क-काक-गृध्र-हंस-क्रौञ्च-वीची-रल्लानां मज्जानो रेतांसि वा योजन-शताय । सिंह-व्याघ्र-द्वीप-काक-उलूकानां मज्जानो रेतांसि वा ।। १४.२.४३ ।।

सार्ववर्णिकानि गर्भ-पतनान्युष्ट्रिकायां अभिषूय श्मशाने प्रेत-शिशून्वा तत्-समुत्थितं मेदो योजन-शताय ।। १४.२.४४ ।।

अनिष्टैरद्भुत-उत्पातैः परस्यौद्वेगं आचरेत् । ।। १४.२.४५अ ।।

आराज्यायैति निर्वादः समानः कोप उच्यते ।। १४.२.४५ब ।।

मार्जार-उष्ट्र-वृक-वराह-श्व-अवि-द्वागुली-नप्तृ-काक-उलूकानां अन्येषां वा निशा-चराणां सत्त्वानां एकस्य द्वयोर्बहूनां वा दक्षिणानि वामानि चाक्षीणि गृहीत्वा द्विधा चूर्णं कारयेत् ।। १४.३.०१ ।।

ततो दक्षिणं वामेन वामं दक्षिणेन समभ्यज्य रात्रौ तमसि च पश्यति ।। १४.३.०२ ।।

एक-आम्लकं वराह-अक्षि ख-द्योतः काल-शारिवा । ।। १४.३.०३अ ब ।।

एतेनाभ्यक्त-नयनो रात्रौ रूपाणि पश्यति ।। १४.३.०३च्द् ।।

त्रि-रात्र-उपोषितः पुष्येण शस्त्र-हतस्य शूल-प्रोतस्य वा पुंसः शिरः-कपाले मृत्तिकायां यवानावास्याविक्षीरेण सेचयेत् ।। १४.३.०४ ।।

ततो यव-विरूढ-मालां आबध्य नष्टच्-छाया-रूपश्चरति ।। १४.३.०५ ।।

त्रि-रत्र-उपोषितः पुष्येण श्व-मार्जार-उलूक-वागुलीनां दक्षिणानि वामानि चाक्षीणि द्विधा चूर्णं कारयेत् ।। १४.३.०६ ।।

ततो यथा-स्वं अभ्यक्त-अक्षो नष्टच्-छाया-रूपश्चरति ।। १४.३.०७ ।।

त्रि-रात्र-उपोषितः पुष्येण पुरुष-घातिनः काण्डकस्य शलाकां अञ्जनीं च कारयेत् ।। १४.३.०८ ।।

ततो अन्यतमेनाक्षि-चूर्णेनाभ्यक्त-अक्षो नष्टच्-छाया-रूपश्चरति ।। १४.३.०९ ।।

त्रि-रात्र-उपोषितः पुष्येण कालायसीं अञ्जनीं शलाकां च कारयेत् ।। १४.३.१० ।।

ततो निशा-चराणां सत्त्वानां अन्यतमस्य शिरः-कपालं अञ्जनेन पूरयित्वा मृतायाः स्त्रिया योनौ प्रवेश्य दाहयेत् ।। १४.३.११ ।।

तदञ्जनं पुष्येणौद्धृत्य तस्यां अञ्जन्यां निदध्यात् ।। १४.३.१२ ।।

तेनाभ्यक्त-अक्षो नष्ट-छाया-रूपश्चरति ।। १४.३.१३ ।।

यत्र ब्राह्मणं आहित-अग्निं दग्धं दह्यमानं वा पश्येत्तत्र त्रि-रात्र-उपोषितः पुष्येण स्वयं-मृतस्य वाससा प्रसेवं कृत्वा चिता-भस्मना पूरयित्वा तं आबध्य नष्टच्-छाया-रूपश्चरति ।। १४.३.१४ ।।

ब्राह्मणस्य प्रेत-कार्ये यो गौर्मार्यते तस्यास्थि-मज्ज-चूर्ण-पूर्णाअहि-भस्त्रा पशूनां अन्तर्-धानं ।। १४.३.१५ ।।

सर्प-दष्टस्य भस्मना पूर्णा प्रचलाक-भस्त्रा मृगाणां अन्तर्-धानं ।। १४.३.१६ ।।

उलूक-वागुली-पुच्छ-पुरीष-जान्व्-अस्थि-चूर्ण-पूर्णाअहि-भस्त्रा पक्षिणां अन्तर्-धानं ।। १४.३.१७ ।।

इत्यष्टावन्तर्-धान-योगः ।। १४.३.१८ ।।

"बलिं वैरोचनं वन्दे शत-मायं च शम्बरं । ।। १४.३.१९अ ब ।।

भण्डीर-पाकं नरकं निकुम्भं कुम्भं एव च ।। १४.३.१९च्द् ।।

देवलं नारदं वन्दे वन्दे सावर्णि-गालवं । ।। १४.३.२०अ ब ।।

एतेषां अनुयोगेन कृतं ते स्वापनं महत् ।। १४.३.२०च्द् ।।

यथा स्वपन्त्यजगराः स्वपन्त्यपि चमू-खलाः । ।। १४.३.२१अ ब ।।

तथा स्वपन्तु पुरुषा ये च ग्रामे कुतूहलाः ।। १४.३.२१च्द् ।।

भण्डकानां सहस्रेण रथ-नेमि-शतेन च । ।। १४.३.२२अ ब ।।

इमं गृहं प्रवेक्ष्यामि तूष्णीं आसन्तु भाण्डकाः ।। १४.३.२२च्द् ।।

नमस्-कृत्वा च मनवे बद्ध्वा शुनक-फेलकाः । ।। १४.३.२३अ ब ।।

ये देवा देव-लोकेषु मानुषेषु च ब्राह्मणाः ।। १४.३.२३च्द् ।।

अध्ययन-पारगाः सिद्धा ये च कौलास तापसाः । ।। १४.३.२४अ ब ।।

एतेभ्यः सर्व-सिद्धेभ्यः कृतं ते स्वापनं महत् ।। १४.३.२४च्द् ।।

अतिगच्छन्ति च मय्यपगच्छन्तु संहताः ।। १४.३.२५ ।।

अलिते । वलिते । मनवे स्वाहा ।। १४.३.२६ ।।

एतस्य प्रयोगः ।। १४.३.२७ ।।

त्रि-रात्र-उपोषितः कृष्ण-चतुर्-दश्यां पुष्य-योगिन्यां श्व-पाकी-हस्ताद्विलख-अवलेखनं क्रीणीयात् ।। १४.३.२८ ।।

तन्-माषैः सह कण्डोलिकायां कृत्वाअसंकीर्ण आदहने निखानयेत् ।। १४.३.२९ ।।

द्वितीयस्यां चतुर्दश्यां उद्धृत्य कुमार्या पेषयित्वा गुलिकाः कारयेत् ।। १४.३.३० ।।

तत एकां गुलिकां अभिमन्त्रयित्वा यत्रएतन मन्त्रेण क्षिपति तत्सर्वं प्रस्वापयति ।। १४.३.३१ ।।

एतेनएव कल्पेन श्वा-विधः शल्यकं त्रि-कालं त्रिश्वेतं असंकीर्ण आदहने निखानयेत् ।। १४.३.३२ ।।

द्वितीयस्यां चतुर्दश्यां उद्धृत्यऽदहन-भस्मना सह यत्र-एतेन मन्त्रेण क्षिपति तत्सर्वं प्रस्वापयति ।। १४.३.३३ ।।

"सुवर्ण-पुष्पीं ब्रह्माणीं ब्रह्माणं च कुश-ध्वजं । ।। १४.३.३४अ ब ।।

सर्वाश्च देवता वन्दे वन्दे सर्वांश्च तापसान् ।। १४.३.३४च्द् ।।

वशं मे ब्राह्मणा यान्तु भूमि-पालाश्च क्षत्रियाः । ।। १४.३.३५अ ब ।।

वशं वैश्याश्च शूद्राश्च वशतां यान्तु मे सदा ।। १४.३.३५च्द् ।।

स्वाहा अमिले किमिले वयु-चारे प्रयोगे फक्के वयुह्वे विहाले दन्त-कटके स्वाहा ।। १४.३.३६ ।।

सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः । ।। १४.३.३७अ ब ।।

श्वा-विधः शल्यकं चएतत्त्रि-श्वेतं ब्रह्म-निर्मितं ।। १४.३.३७च्द् ।।

प्रसुप्ताः सर्व-सिद्धा हि एतत्ते स्वापनं कृतं । ।। १४.३.३८अ ब ।।

यावद्ग्रामस्य सीमान्तः सूर्यस्यौद्गमनादिति ।। १४.३.३८च्द् ।।

स्वाहा" ।। १४.३.३९ ।।

एतस्य प्रयोगः ।। १४.३.४० ।।

श्वा-विधः शल्यकानि त्रि-श्वेतानि । सप्त-रात्र-उपोषितः कृष्ण-चतुर्दश्यां खादिराभिः समिधामिर्(?) अग्निं एतेन मन्त्रेणाष्ट-शत-सम्पातं कृत्वा मधु-घृताभ्यां अभिजुहुयात् ।। १४.३.४१ ।।

तत एकं एतेन मन्त्रेण ग्राम-द्वारि गृह-द्वारि वा यत्र निखन्यते तत्सर्वं प्रस्वापयति ।। १४.३.४२ ।।

"बलिं वैरोचनं वन्दे शतमायं च शम्बरं । ।। १४.३.४३अ ब ।।

निकुम्भं नरकं कुम्भं तन्तु-कच्छं महा-असुरं ।। १४.३.४३च्द् ।।

अर्मालवं प्रमीलं च मण्ड-उलूकं घट-उबलं । ।। १४.३.४४अ ब ।।

कृष्ण-कंस-उपचारं च पौलोमीं च यशस्विनीं ।। १४.३.४४च्द् ।।

अभिमन्त्रयित्वा गृह्णामि सिद्ध्य्-अर्थं शव-शारिकां । ।। १४.३.४५अ ब ।।

जयतु जयति च नमः शलक-भूतेभ्यः स्वाहा ।। १४.३.४५च्द् ।।

सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः । ।। १४.३.४६अ ब ।।

सुखं स्वपन्तु सिद्ध-अर्था यं अर्थं मार्गयामहे । ।। १४.३.४६च्द् ।।

यावदस्तं अयादुदयो यावदर्थं फलं मम ।। १४.३.४६एक ।।

इति स्वाहा ।। १४.३.४७ ।।

एतस्य प्रयोगः ।। १४.३.४८ ।।

चतुर्-भक्त-उपवासी कृष्ण-चतुर्दश्यां असंकीर्ण आदहने बलिं कृत्वाएतेन मन्त्रेण शव-शारिकां गृहीत्वा पौत्री-पोट्टलिकं बध्नीयात् ।। १४.३.४९ ।।

तन्-मध्ये श्वा-विधः शल्यकेन विद्ध्वा यत्रएतेन मन्त्रेण निखन्यते तत्सर्वं प्रस्वापयति ।। १४.३.५० ।।

"उपैमि शरणं चाग्निं दैवतानि दिशो दश । ।। १४.३.५१अ ब ।।

अपयान्तु च सर्वाणि वशतां यान्तु मे सदा ।। १४.३.५१च्द् ।।

स्वाहा" ।। १४.३.५२ ।।

एतस्य प्रयोगः ।। १४.३.५३ ।।

त्रि-रात्र-उपोस्षितः पुष्येण शर्करा एक-विंशति-सम्पातं कृत्वा मधु-घृताभ्यां अभिजुहुयात् ।। १४.३.५४ ।।

ततो गन्ध-माल्येन पूजयित्वा निखानयेत् ।। १४.३.५५ ।।

द्वितीयेन पुष्येणौद्धृत्यएकां शर्करां अभिमन्त्रयित्वा कपाटं आहन्यात् ।। १४.३.५६ ।।

अभ्यन्तरं चतसृणां शर्कराणां द्वारं अपाव्रियते ।। १४.३.५७ ।।

चतुर्-भक्त-उपवासी कृष्ण-चतुर्दश्यां भग्नस्य पुरुषस्यास्थ्ना ऋषभं कारयेत् । अभिमन्त्रयेच्चएतेन ।। १४.३.५८ ।।

द्वि-गो-युक्तं गो-यानं आहृतं भवति ।। १४.३.५९ ।।

ततः परम-आकाशे विरामति ।। १४.३.६० ।।

रवि-सगन्धः परिघमति सर्वं पृणाति ।। १४.३.६१ ।।

"चण्डाली-कुम्भी-तुम्ब-कटुक-सार-ओघः सनारी-भगोअसि स्वाहा ।। १४.३.६२ ।।

ताल-उद्घाटनं प्रस्वापनं च ।। १४.३.६३ ।।

त्रि-रात्र-उपोषितः पुष्येण शस्त्र-हतस्य शूल-प्रोतस्य वा पुंसः शिरः-कपाले मृत्तिकायां तुवरी-रावास्यौदकेन सेचयेत् (?) ।। १४.३.६४ ।।

जातानां पुष्येणएव गृहीत्वा रज्जुकां वर्तयेत् ।। १४.३.६५ ।।

ततः सज्यानां धनुषां यन्त्राणां च पुरस्ताच्छेदनं ज्याच्-छेदनं करोति ।। १४.३.६६ ।।

उदक-अहि-भस्त्रां उच्छवास-मृत्तिकया स्त्रियाः पुरुषस्य वा पूरयेत् । नासिका-बन्धनं मुख-ग्रहश्च ।। १४.३.६७ ।।

वराह-भस्त्रां उच्छवासमृत्तिकया पूरयित्वा मर्कट-स्नायुनाअवबध्नीयात् । आनाह-कारणं ।। १४.३.६८ ।।

कृष्ण-चतुर्दश्यां शस्त्र-हताया गोः कपिलायाः पित्तेन राज-वृक्षमयीं अमित्र-प्रतिमां अञ्ज्यात् । अन्धी-करणं ।। १४.३.६९ ।।

चतुर्-भक्त-उपवासी कृष्ण-चतुर्दश्यां बलिं कृत्वा शूल-प्रोतस्य पुरुषस्यास्थ्ना कीलकान्कारयेत् ।। १४.३.७० ।।

एतेषां एकः पुरीषे मूत्रे वा निखात आनाहं करोति । पदेअस्यऽसने वा निखातः शोषेण मारयति । आपणे क्षेत्रे गृहे वा वृत्तिच्-छेदं करोति ।। १४.३.७१ ।।

एतेनएव कल्पेन विद्युद्-दग्धस्य वृक्षस्य कीलका व्याख्याताः ।। १४.३.७२ ।।

पुनर्नवं अवाचीनं निम्बः काम-मधुश्च यः । ।। १४.३.७३अ ब ।।

कपि-रोम मनुष्य-अस्थि बद्ध्वा मृतक-वाससा ।। १४.३.७३च्द् ।।

निखन्यते गृहे यस्य दृष्ट्वा वा यत्पदं नयेत् । ।। १४.३.७४अ ब ।।

सपुत्र-दारः सधन-स्त्रीन्पक्षान्नातिवर्तते ।। १४.३.७४च्द् ।।

पुनर्नवं अवाचीनं निम्बः काम-मधुश्च यः । ।। १४.३.७५अ ब ।।

स्वयं-गुप्ता मनुष्य-अस्थि पदे यस्य निखन्यते ।। १४.३.७५च्द् ।।

द्वारे गृहस्य सेनाया ग्रामस्य नगरस्य वा । ।। १४.३.७६अ ब ।।

सपुत्र-दारः सधन-स्त्रीन्पक्षान्नातिवर्तते ।। १४.३.७६च्द् ।।

अज-मर्कट-रोमाणि मार्जार-नकुलस्य च । ।। १४.३.७७अ ब ।।

ब्राह्मणानां श्व-पाकानां काक-उलूकस्य चऽहरेत् । ।। १४.३.७७च्द् ।।

एतेन विष्ठाअवक्षुण्णा सद्य उत्साद-कारिका ।। १४.३.७७च्द् ।।

प्रेत-निर्मालिका किण्वं रोमाणि नकुलस्य च । ।। १४.३.७८अ ब ।।

वृश्चिक-आल्य्(?)-अहि-कृत्तिश्च पदे यस्य निखन्यते । ।। १४.३.७८च्द् ।।

भवत्यपुरुषः सद्यो यावत्तन्नापनीयते ।। १४.३.७८एफ् ।।

त्रि-रात्र-उपोषितः पुष्येण शस्त्र-हतस्य शूल-प्रोतस्य वा पुंसः शिरः-कपाले मृत्तिकायां गुञ्जा आवास्यौदकेन सेचयेत् ।। १४.३.७९ ।।

जातानां अमावास्यायां पौर्णमास्यां वा पुष्य-योगिन्यां गुञ्ज-वल्लीर्ग्राहयित्वा मण्डलिकानि कारयेत् ।। १४.३.८० ।।

तेष्वन्न-पान-भाजनानि न्यस्तानि न क्षीयन्ते ।। १४.३.८१ ।।

रात्रि-प्रेक्षायां प्रवृत्तायां प्रदीप-अग्निषु मृत-धेनोः स्तनानुत्कृत्य दाहयेत् ।। १४.३.८२ ।।

दग्धान्वृष-मूत्रेण पेषयित्वा नव-कुम्भं अन्तर्-लेपयेत् ।। १४.३.८३ ।।

तं ग्रामं अपसव्यं परिणीय यत्तत्र न्यस्तं नव-नीतं एषां तत्सर्वं आगच्छति ।। १४.३.८४ ।।

कृष्ण-चतुर्दश्यां पुष्य-योगिन्यां शुनो लग्नकस्य योनौ कालायसीं मुद्रिकां प्रेषयेत् ।। १४.३.८५ ।।

तां स्वयं पतितां गृह्णीयात् ।। १४.३.८५ ।।

तया वृक्ष-फलान्याकारितान्यागच्छन्ति ।। १४.३.८७ ।।

मन्त्र-भैषज्य-सम्युक्ता योगा माया-कृताश्च ये । ।। १४.३.८८अ ब ।।

उपहन्यादमित्रांस्तैः स्व-जनं चाभिपालयेत् ।। १४.३.८८च्द् ।।

स्व-पक्षे पर-प्रयुक्तानां दूषी-विष-गराणां प्रतीकारः ।। १४.४.०१ ।।

श्लेष्मातक-कपित्थ-दन्ति-दन्त-शठ-गोजि-शिरीष-पाटली-बलास्योनाग-पुनर्-नवा-श्वेत-वारण-क्वाथ-युक्तम्(?) चन्दन-साला-वृकी-लोहित-युक्तं नेजन-उदकं राज-उपभोग्यानां गुह्य-प्रक्षालनं स्त्रीणाम् । सेनायाश्च विष-प्रतीकारः ।। १४.४.०२ ।।

पृषत-नकुल-नील-कण्ठ-गोधा-पित्त-युक्तं मही-राजी-चूर्णं सिन्दु-वारित-वरण-वारुणी-तण्डुलीयक-शत-पर्व-अग्र-पिण्डीतक-योगो मदन-दोष-हरः ।। १४.४.०३ ।।

सृगाल-विन्ना-मदन-सिन्दु-वारित-वरण-वारण-वली-मूल-कषायाणां अन्यतमस्य समस्तानां वा क्षीर-युक्तं पानं मदन-दोष-हरं ।। १४.४.०४ ।।

कैडर्य-पूति-तिल-तैलं उन्माद-हरं नस्तः-कर्म ।। १४.४.०५ ।।

प्रियङ्गु-नक्त-माल-योगः कुष्ठ-हरः ।। १४.४.०६ ।।

कुष्ठ-लोध्र-योगः पाक-शोषघ्नः ।। १४.४.०७ ।।

कट-फल-द्रवन्ती-विलङ्ग-चूर्णं नस्तः-कर्म शिरो-रोग-हरं ।। १४.४.०८ ।।

प्रियङ्गु-मञ्जिष्ठा - तगर - लाक्षारस - मधुक-हरिद्रा-क्षौद्र-योगो रज्जु-उदक-विष-प्रहार-पतन-निह्संज्ञानां पुनः-प्रत्यानयनाय ।। १४.४.०९ ।।

मनुष्याणां अक्ष-मात्रम् । गव-अश्वानां द्वि-गुणम् । चतुर्-गुणं हस्त्य्-उष्ट्राणां ।। १४.४.१० ।।

रुक्म-गर्भश्चएषां मणिः सर्व-विष-हरः ।। १४.४.११ ।।

जीवन्ती-श्वेता-मुष्कक-पुष्प-वन्दाकानां अक्षीवे जातस्याश्वत्थस्य मणिः सर्व-विष-हरः ।। १४.४.१२ ।।

तूर्याणां तैः प्रलिप्तानां शब्दो विष-विनाशनः । ।। १४.४.१३अ ब ।।

लिप्त-ध्वजं पताकां वा दृष्ट्वा भवति निर्विषः ।। १४.४.१३च्द् ।।

एतैः कृत्वा प्रतीकारं स्व-सैन्यानां अथऽत्मनः । ।। १४.४.१४अ ब ।।

अमित्रेषु प्रयुञ्जीत विष-धूम-अम्बु-दूषणान् ।। १४.४.१४च्द् ।।

मनुष्याणां वृत्तिरर्थः । मनुष्यवती भूमिरित्यर्थः ।। १५.१.०१ ।।

तस्याः पृथिव्या लाभ-पालन-उपायः शास्त्रं अर्थ-शास्त्रं इति ।। १५.१.०२ ।।

तद्-द्वात्रिंशद्युक्ति-युक्तं अधिकरणम् । विधानम् । योगः । पद-अर्थः । हेत्व्-अर्थः । उद्देशः । निर्देशः । उपदेशः । अपदेशः । अतिदेशः । प्रदेशः । उपमानम् । अर्थ-आपत्तिः । संशयः । प्रसङ्गः । विपर्ययः । वाक्य-शेषः । अनुमतम् । व्याख्यानम् । निर्वचनम् । निदर्शनम् । अपवर्गः । स्व-संज्ञा । पूर्व-पक्षः । उत्तर-पक्षः । एक-अन्तः । अनागत-अवेक्षणम् । ।। १५.१.०३ ।।

।। अतिक्रान्त-अवेक्षणम् । नियोगः । विकल्पः । समुच्चयः ऊह्यं इति ।।

यं अर्थं अधिकृत्यौच्यते तदधिकरणं ।। १५.१.०४ ।।

"पृथिव्या लाभे पालने च यावन्त्यर्थ-शास्त्राणि पूर्व-आचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यएकं इदं अर्थ-शास्त्रं कृतम्" इति ।। १५.१.०५ ।।

शास्त्रस्य प्रकरण-अनुपूर्वी विधानं ।। १५.१.०६ ।।

"विद्या-समुद्देशः । वृद्ध-सम्योगः । इन्द्रिय-जयः । अमात्य-उत्पत्तिः" इत्येवं-आदिकं इति ।। १५.१.०७ ।।

वाक्य-योजना योगः ।। १५.१.०८ ।।

"चतुर्-वर्ण-आश्रमो लोकः" इति ।। १५.१.०९ ।।

पद-अवधिकः पद-अर्थः ।। १५.१.१० ।।

मूल-हर इति पदं ।। १५.१.११ ।।

"यः पितृ-पैतामहं अर्थं अन्यायेन भक्षयति स मूल-हरः" इत्यर्थः ।। १५.१.१२ ।।

हेतुरर्थ-साधको हेत्व्-अर्थः ।। १५.१.१३ ।।

"अर्थ-मूलौ हि धर्म-कामौ" इति ।। १५.१.१४ ।।

समास-वाक्यं उद्देशः ।। १५.१.१५ ।।

"विद्या-विनय-हेतुरिन्द्रिय-जयः" इति ।। १५.१.१६ ।।

व्यास-वाक्यं निर्देशः ।। १५.१.१७ ।।

"कर्ण-त्वग्-अक्षि-जिह्वा-घ्राण-इन्द्रियाणां शब्द-स्पर्श-रूप-रस-गन्धेष्वविप्रतिपत्तिरिन्द्रिय-जयः"इति ।। १५.१.१८ ।।

एवं वर्तितव्यं इत्युपदेशः ।। १५.१.१९ ।।

"धर्म-अर्थ-विरोधेन कामं सेवेत । न निह्सुखः स्यात्" इति ।। १५.१.२० ।।

एवं असावाहैत्यपदेशः ।। १५.१.२१ ।।

"मन्त्रि-परिषदं द्वादश-अमात्यान्कुर्वीतैति मानवाः षोडशैति बार्हस्पत्याः विंशतिं इत्यौशनसाः यथा-सामर्थ्यं इति कौटिल्यः" इति ।। १५.१.२२ ।।

उक्तेन साधनं अतिदेशः ।। १५.१.२३ ।।

"दत्तस्याप्रदानं ऋण-आदानेन व्याख्यातम्" इति ।। १५.१.२४ ।।

वक्तव्येन साधनं प्रदेशः ।। १५.१.२५ ।।

"साम-दान-भेद-दण्डैर्वा । यथाआपत्सु व्याख्यास्यामः" इति ।। १५.१.२६ ।।

दृष्टेनादृष्टस्य साधनं उपमानं ।। १५.१.२७ ।।

"निवृत्त-परिहारान्पिताइवानुगृह्णीयात्" इति ।। १५.१.२८ ।।

यदनुक्तं अर्थादापद्यते साअर्थ-आपत्तिः ।। १५.१.२९ ।।

"लोक-यात्राविद्राजानं आत्म-द्रव्य-प्रकृति-सम्पन्नं प्रिय-हित-द्वारेणऽश्रयेत" ।। १५.१.३० ।।

"नाप्रिय-हित-द्वारेणऽश्रयेत" इत्यर्थादापन्नं भवतिइति ।। १५.१.३१ ।।

उभयतो-हेतुमानर्थः संशयः ।। १५.१.३२ ।।

"क्षीण-लुब्ध-प्रकृतिं अपचरित-प्रकृतिं वा" इति ।। १५.१.३३ ।।

प्रकरण-अन्तरेण समानोअर्थः प्रसङ्गः ।। १५.१.३४ ।।

"कृषि-कर्म-प्रदिष्टायां भूमौ इति समानं पूर्वेण" इति ।। १५.१.३५ ।।

प्रतिलोमेन साधनं विपर्ययः ।। १५.१.३६ ।।

"विपरीतं अतुष्टस्य" इति ।। १५.१.३७ ।।

येन वाक्यं समाप्यते स वाक्य-शेषः ।। १५.१.३८ ।।

"छिन्न-पक्षस्यैव राज्ञश्चेष्टा-नाशश्च" इति ।। १५.१.३९ ।।

तत्र "शकुनेः" इति वाक्य-शेषः ।। १५.१.४० ।।

पर-वाक्यं अप्रतिषिद्धं अनुमतं ।। १५.१.४१ ।।

"पक्षावुरस्यं प्रतिग्रह इत्यौशनसो व्यूह-विभागः" इति ।। १५.१.४२ ।।

अतिशय-वर्णना व्याख्यानं ।। १५.१.४३ ।।

"विशेषतश्च संघानां संघ-धर्मिणां च राज-कुलानां द्यूत-निमित्तो भेदस्तन्-निमित्तो विनाश इत्यसत्-प्रग्रहः पापिष्ठतमो व्यसनानां तन्त्र-दौर्बल्यात्" इति ।। १५.१.४४ ।।

गुणतः शब्द-निष्पत्तिर्निर्वचनं ।। १५.१.४५ ।।

"व्यस्यत्येनं श्रेयस इति व्यसनम्" इति ।। १५.१.४६ ।।

दृष्ट-अन्तो दृष्ट-अन्त-युक्तो निदर्शनं ।। १५.१.४७ ।।

"विगृहीतो हि ज्यायसा हस्तिना पाद-युद्धं इव-अभ्युपैति" इति ।। १५.१.४८ ।।

अभिप्लुत-व्यपकर्षणं अपवर्गः ।। १५.१.४९ ।।

"नित्यं आसन्नं अरि-बलं वासयेदन्यत्राभ्यन्तर-कोप-शङ्कायाः" इति ।। १५.१.५० ।।

परैरसमितः शब्दः स्व-संज्ञा ।। १५.१.५१ ।।

"प्रथमा प्रकृतिः । तस्य भूम्य्-अनन्तरा द्वितीया । भूम्य्-एक-अन्तरा तृतीया" इति ।। १५.१.५२ ।।

प्रतिषेद्धव्यं वाक्यं पूर्व-पक्षः ।। १५.१.५३ ।।

"स्वाम्य्-अमात्य-व्यसनयोरमात्य-व्यसनं गरीयः" इति ।। १५.१.५४ ।।

तस्य निर्णयन-वाक्यं उत्तर-पक्षः ।। १५.१.५५ ।।

"तद्-आयत्तत्वात् । तत्-कूट-स्थानीयो हि स्वामी" इति ।। १५.१.५६ ।।

सर्वत्र-आयत्तं एक-अन्तः ।। १५.१.५७ ।।

"तस्मादुत्थानं आत्मनः कुर्वीत" इति ।। १५.१.५८ ।।

पश्चादेवं विहितं इत्यनागत-अवेक्षणं ।। १५.१.५९ ।।

"तुला-प्रतिमानं पौतव-अध्यक्षे वक्ष्यामः" इति ।। १५.१.६० ।।

पुरस्तादेवं विहितं इत्यतिक्रान्त-अवेष्कणं ।। १५.१.६१ ।।

"अमात्य-सम्पदुक्ता पुरस्तात्" इति ।। १५.१.६२ ।।

एवं नान्यथाइति नियोगः ।। १५.१.६३ ।।

"तस्माद्धर्म्यं अर्थ्यं चास्यौपदिशेत् । नाधर्म्यं अनर्थयं च" इति ।। १५.१.६४ ।।

अनेन वाअनेन वाइति विकल्पः ।। १५.१.६५ ।।

"दुहितरो वा धर्मिष्ठेषु विवाहेषु जाताः" इति ।। १५.१.६६ ।।

अनेन चानेन चैति समुच्चयः ।। १५.१.६७ ।।

"स्वयंजातः पितुर्बन्धूनां च दायादः" इति ।। १५.१.६८ ।।

अनुक्त-करणं ऊह्यं ।। १५.१.६९ ।।

"यथा च दाता प्रतिग्रहीता च नौपहतौ स्यातां तथाअनुशयं कुशलाः कल्पयेयुः" इति ।। १५.१.७० ।।

एवं शास्त्रं इदं युक्तं एताभिस्तन्त्र-युक्तिभिः । ।। १५.१.७१अ ब ।।

अवाप्तौ पालने चौक्तं लोकस्यास्य परस्य च ।। १५.१.७१च्द् ।।

धर्मं अर्थं च कामं च प्रवर्तयति पाति च । ।। १५.१.७२अ ब ।।

अधर्म-अनर्थ-विद्वेषानिदं शास्त्रं निहन्ति च ।। १५.१.७२च्द् ।।

येन शास्त्रं च शस्त्रं च नन्द-राज-गता च भूः । ।। १५.१.७३अ ब ।।

अमर्षेणोद्धृतान्याशु तेन शास्त्रं इदं कृतं ।। १५.१.७३च्द् ।।